ये द्वे कालं विधत्तः, श्रुतिविषयगुणा या स्थिता व्याप्य विश्वम् ।

या सृष्टिः स्रष्टुराद्या वहति विधिहुतं या हविर्या च होत्री ।

विश्वनाथोऽपि—

"यन्नाट्यवस्तुनः पूर्वं रङ्गविघ्नोपशान्तये,
कुशीलवाः प्रकुर्वन्ति 'पूर्वरङ्गः' स उच्यते ।
प्रत्याहारादिकान्यङ्गान्यस्य भूयांसि यद्यपि,
तथाप्यवश्यं कर्त्तव्या 'नान्दी' विघ्नोपशान्तये—

—इत्युक्त्याऽवश्यमाचरणीयाम्,—

"आशीर्वचनसंयुक्ता स्तुतिर्यस्मात्प्रयुज्यते,
देव-द्विज-नृपादीनां तस्मान् 'नान्दी' ति सञ्ज्ञिते" ति—
"आशीर्नमस्क्रियारूपः श्लोकः' काव्यार्थसूचकः,
'नान्दी' ति कथ्यते"—इति
"सूत्रधारः पठेन्नान्दीं मध्यमं स्वरमाश्रितः,
नान्दी पदैर्द्वादशभिरष्टाभिर्वाप्यलङ्कृता—

—इति च भरतादिभिर्व्याकृतस्वरूपां, मङ्गलाचरणात्मिकां—

"श्लोकपादः 'पदं' केचित्सुप्तिङन्तमथाऽपरे,
परेऽवान्तरवाक्यैकस्वरूपं 'पद'मूचिरे—

—इति नाट्यप्रदीपकृत्संमतावान्तरवाक्यात्मकाष्टपदभूषितां, सकलानन्दिनीं पूर्वरङ्गाङ्गभूतां—'नान्दीं' नाटकादौ सूत्रधारः पठति—या सृष्टिरिति ।

[अन्वयः] या—स्रष्टुराद्या सृष्टिः, या—विधिहुतं हविर्वहति, या च—होत्री, ये द्वे—कालं विधत्तः, श्रुतिविषयगुणा या—विश्वं व्याप्य स्थिता, याम्—'सर्वबीजप्रकृति' [illegible] प्राणिनः प्राणवन्तः, प्रत्यक्षाभिः, ताभिरष्टाभिस्तनुभिः प्रपन्न ईशः—वः—अवतु ।

[अर्थः] स्रष्टुः—वेधसः, 'स्रष्टा प्रजापतिर्वेधा' इत्यमरः । या—तनुः

आद्या = प्रथमा, सृष्टिः = सर्गः, ब्रह्मणा सर्वतः प्रथमं रचिता जलमयी मूर्त्तिरिति यावत्, तथा च मनुः—

"सोऽभिध्याय शरीरात्स्वात्सिसृक्षुर्विविधाः प्रजाः ।
अप एव ससर्जादौ, तासु बीजमवासृजदिति ॥

या = तनुः, विधानं—विधिः, विधिना हुतं = कल्पसूत्र-गृह्यसूत्रादि-बोधितेतिकर्त्तव्यतापूर्वकं समुपक्षिप्तं, हविः = हवनीयं घृतादिकं, वहति = देवान् प्रापयति, वह्निरिति यावत्,—

वह्नेर्हविर्नेतृत्वं—श्रीमद्भगवद्गीतासु—

अग्नौ प्रास्ताऽऽहुतीः सर्वा आदित्यमुपतिष्ठते,
आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजा —इति—

—"अग्निमुखा हि देवा" इति च ।

अत एव देवनामसु—'बर्हिर्मुखाः' इति नाम दृश्यते, तत्र बर्हिः=अग्निः ।

या च = अपरा तनुः—जुहोतीति,—होत्री = हवनकर्तृत्वेन निर्दिष्टा-यजमानरूपा,

ये द्वे = तनू , कालं = सौरचान्द्रमासादिकं , विधत्तः = कुरुतः, सूर्यरूपा चन्द्ररूपा च भगवतस्तनुः कालविधातृत्वेन प्रसिद्धैव,

या च तनुः—श्रुतेर्विषयो गुणो यस्याः सा—श्रुतिविषयगुणा = श्रोत्रेन्द्रियग्राह्यशब्दाख्यविशेषगुणशालिनी, विश्वं = जगत्, व्याप्य = अवष्टभ्य, स्थिता = वर्त्तते, आकाशाख्या भगवतो मूर्त्तिः, "आकाशस्य तु विज्ञेयः शब्दो वैशेषिको गुण" इति विश्वनाथः । "श्रोत्रेन्द्रियग्राह्यो गुणः शब्दः" इति च,

श्रुतिः श्रोत्रे तथाम्नाये इति विश्वः

या—तनुः सर्वाणि बीजानि सर्वबीजानि, सर्वबीजानां प्रकृतिः–सर्व-बीज-प्रकृतिः = सर्वविधशस्याद्यङ्कुरयोनिः, "बीजन्तु रेतसि, स्यादाधाने च तत्त्वे च हेतावङ्कुर-कारणे" इति हैमः, "प्रकृतिर्गुणसाम्ये स्यादमात्यादि-

यामाहुः सर्वबीजप्रकृतिरिति यया प्राणिनः प्राणवन्तः,

स्वभावयोः, योनौ लिङ्गे पौरवर्गे" इति मेदिनी । इत्याहुः = इति लोका वदन्ति, पृथिवीरूपा तनुः सर्वाङ्कुरकारणभूता लोके विदितैव,

यया = मूर्त्या, प्राणिनः = शरीरिणः, प्राणवन्तः=चैतन्यभाजः, जीवन्ति, वायुरूपा भगवतो मूर्त्तिः प्राणापानादिभिर्जगदिदमुद्बिभर्त्ति, प्राणयति चेति स्पष्टमेव,

"प्राणो-हृन्मस्तुते बोले काव्ये जीवेऽनिले बले" इति विश्वः, "प्राणी तु चेतनो जन्मी जन्तुजन्युशरीरिण" "प्राणोऽपानः समानश्चोदानव्यानौ च वायव" इत्यमरः ।

ताभिः = एताभिः पूर्वोक्ताभिः, अष्टाभिः जल-वह्नि-यजमान-सूर्य-चन्द्र-गगन-धरणि-पवमानाख्याभिः, प्रत्यक्षाभिः तनुभिः = प्रत्यक्षात्मक-ज्ञानविषयीभूताभिर्मूर्त्तिभिः, प्रपन्नः = युक्तः, ईशः = शम्भुः,

वायोस्त्वगिन्द्रियेण प्रत्यक्षात्, शब्दरूपविशेषगुणस्य श्रोत्रेण प्रत्यक्षात्तदाश्रयस्य च गगनस्यौपचारिकं प्रत्यक्षं बोध्यम् । "अत एवैकतारं नभो न पश्येत्" इत्यादयः प्रयोगाः प्रामाणिकानां सूपपद्यन्ते, विशेषणप्रत्यक्षेण विशेष्यप्रत्यक्षाभ्युपगमात् ।

वः=युष्मान्, सभासदः, अवतु = रक्षतु, अभीष्टसिद्धिं वितरतु ।

[ भावार्थः ]—जलरूपया, पावकरूपया, यजमानरूपया, चन्द्ररूपया, सूर्यरूपया, गगनरूपया, धरणीरूपया च मूर्त्या-युक्तोऽष्टमूर्त्तिः प्रत्यक्षमनुभूयमानमाहात्म्यातिशयः शिवः सभ्यान् नटादींश्च अवतु—शुभोदयेन योजयतु, भद्रं वितरतु च सर्वेभ्यः

अत्र यथा—'एकतारं नभो न पश्ये'दित्यादिवाक्यानां—गगनस्य दर्शनासम्भवेऽपि औपचारिकं—गुणप्रत्यक्षेण गुणिप्रत्यक्षमाश्रित्योपपादनं क्रियते, एवमेवात्रापि गगनस्य शब्दप्रत्यक्षेण प्रत्यक्षव्यवहार औपचारिक

इति सूचनाय—श्रोत्रेन्द्रियग्राह्यशब्दगुणवत्त्वं नभसि विशेषणमुपादीयते, एवञ्च शब्दस्य प्रत्यक्षान्नभसोऽपि प्रत्यक्षमुपचर्यत इति—साधु सूचितम्।

अनेनैव श्लोकेन नाटकप्रतिपाद्यो विषयोऽपि सूचनीयः—

तथा च विश्वनाथः—

"रङ्गं प्रसाद्य मधुरैः श्लोकैः काव्यार्थसूचकै"रिति।

तथा हि—

(१) या स्रष्टुराद्या सृष्टिः = शकुन्तला, सौन्दर्यातिशयशालित्वात्, (२) या च—विधिहुतं = गर्भाधानादिविधिना निहितं, हविः = लक्षणया—, बीजं,—वहति = धत्ते, तेनास्या गर्भावस्था सूचिता, (३) या च होत्री = कण्वो मुनिः, (४) ये द्वे = सख्यौ, कालं = शापावसानकालं, विधत्तः = जानीतः, एतेनानुसूया-प्रियम्वदे सख्यौ निर्दिष्टे, (५) श्रुति-विषयः गुणानामयो यस्याः सा—'श्रुतिविषयगुणाया' इति—शकुन्तलातिरो-धानं सूचितं, विषयो देशोऽपि, तेन-श्रुतो-विषयैः = विषयवास्तव्यैर्गुणाना मयः—शुभावहो विधिर्यस्याः—सेत्येवं तस्याः दुष्यन्तराष्ट्रगमनमपि सूच्यते। (६) व्याप्य विश्वं=सकलं विलङ्घ्य स्थितेति काश्यपाश्रमनिवासः सूच्यते। (७) 'यामाहुः सर्वबीजप्रकृति' रित्यनेन—नामैकदेशे नामग्रहणात्सर्वदमनाख्य-बीजस्य योनिरुत्पत्तिकारणमित्यर्थलाभात्—'सर्वदमनः' कुमारः, तदुत्पत्तिर्वा सूच्यते। (८) यया प्राणिनः = प्रजाः, प्राणवन्तः = प्रहृष्टा इत्यनेन शकुन्तला-सर्वदमन-दुष्यन्तानां पुनः स्वराज्ये प्रत्यागमनम्। ईशः = राजा, दुष्यन्त इत्थमष्टाभिर्विभूतिभि· प्रपन्नः = युक्तः, स्वराज्यम्—अवत्विति-नाटकोक्तोऽर्थः सूचितः।

[ अष्टलोकपालांशत्वादष्टाभिस्तनुभिः = कलाभिः प्रपन्नः इति वाऽर्थः। ]

इत्थमपि नास्य नान्दीत्वहानिः—

—"स्तुतिर्यस्मात्प्रयुज्यते,
देव-द्विजनृपादीनां तस्मान्नान्दीति सञ्ज्ञिते"ति नृपस्तुतेरपि परिगणितत्वात्।

प्रत्यक्षाभिः 'प्रपन्नस्तनुभिरवतु वस्ताभिरष्टाभिरीशः ॥ १ ॥

( नान्द्यन्ते— )

'पत्रावली' 'नामिका चेयं नान्दी', तदुक्तं नाट्यदर्पणे—

"यस्यां बीजस्य विन्यासो ह्यभिधेयस्य वस्तुनः ।

श्लेषेण वा समासोक्त्या नान्दी पत्रावली तु सा"—इति

अत्र च्छेकवृत्तिश्रुत्यनुप्रासाः पर्यायोक्तञ्च ॥१॥

नान्द्यन्त इति। 'या सृष्टि'रित्यादिश्लोकरूपनान्दीपाठानन्तरमित्यर्थः। अस्यास्यावान्तराष्टवाक्यघटिततयाऽऽशीर्वचनसंयुक्तशिवस्तुत्यात्मकतया च नान्दीत्वं स्पष्टमेव,

तदुक्तं—"आशीर्वचनसंयुक्ता स्तुतिर्यस्मात्प्रयुज्यते ।

देव-द्विज-नृपादीनां तस्मान्नान्दीति सञ्ज्ञिता"

मङ्गल्य-शङ्ख-चन्द्राब्ज-कोक-कैरव-शंसिनी,

पदैर्युक्ता द्वादशभिरष्टाभिर्वा पदैरुते"ति [ साहि० ६ प० ]।

इत्थञ्च प्रकृते 'ये द्वे कालं विधत्त' इति चन्द्रनिर्देशान्नान्दीव्यवहारे बाधकाभावः।

केचित्तु—'या सृष्टिः स्रष्टु'रित्यादिपद्यं 'रङ्गद्वार'मेव, न नान्दी, तदुक्तं भरतनाट्यशास्त्रे—

"यस्मादभिनयो ह्यत्र प्राथम्यादवतार्यते,

"रङ्गद्वारमतो ज्ञेयं वागङ्गाभिनयात्मक"—मिति

'नान्दी' तु रङ्गद्वारात्पूर्वमेव नटैरेव क्रियते,

अत एव नाट्यशास्त्रे—

"नान्दी, शुष्कावकृष्टा च, रङ्गद्वारं तथैव च ।

चारी चैव ततः कार्या महाचारी तथैव च" इत्यादिना रङ्गद्वारात्पूर्वमेव

---

१. 'प्रसन्नः' पाठान्तरम्।

सूत्रधारः—अलमतिविस्तरेण ( नेपथ्याभिमुखमवलोक्य—)

'नान्दी' परिगणिता, इत्थञ्च 'यासृष्टि'रित्यादि मङ्गलं-रङ्गद्वाराख्यं पूर्वरङ्ग-स्याङ्गं, नान्दी तु—इतः पूर्वमेव नटैः सम्भूयैव कृतेति—" प्राहुः।

तन्मते—नान्द्यन्ते = नटकृतनान्दीपाठसमाप्त्यनन्तरं, सूत्रधारः,—"या सृष्टिः स्रष्टुराद्ये"ति मङ्गलश्लोकं रङ्गद्वाराख्यं पूर्वरङ्गाङ्गभूतं—पपाठेति योजनीयम्।

इत्थञ्च केचित्—'या सृष्टि' रिति पद्यं 'नान्दीं मन्यन्ते, केचिच्च 'रङ्गद्वार'-मिति सङ्क्षेपः।

अस्य श्लोकस्य नान्दीत्वमिति पक्षे—

—नाद्यन्ते = 'नान्दी'पाठानन्तरं, सूत्रधारः = नटमण्डलपतिः, 'निर्गत' इति शेषः।

तदुच्यते—"पूर्वरङ्गं विधायैव सूत्रधारो' निवर्त्तत" इति।

सूत्रधारलक्षणं मातृगुप्ताचार्या आहुः—

"चतुरातोद्यनिष्णातोऽनेकभूषासमावृतः।
नानाभाषणतत्त्वज्ञो नीतिशास्त्रार्थतत्त्ववित्॥
नानागतिप्रचारज्ञो रसभावविशारदः।
नाट्यप्रयोगनिपुणो नानाशिल्पकलान्वितः॥
छन्दोविधानतत्त्वज्ञः सर्वशास्त्रविचक्षणः।
तत्तद्गीतानुगलयकलातालावधारणः॥
अवधाय प्रयोक्ता च योक्तॄणामुपदेशकः।
एवं गुणगणोपेतः—सूत्रधारोऽभिधीयत" इति॥

सूत्रधारः=सूत्रधारसमानः 'स्थापक'नामा नटोपाध्यक्षः, आहेत्येवं योजनीयम्,

१. नाट्योपकरणादीनि 'सूत्र'मित्यभिधीयते, सूत्रं धारयतीत्यर्थे 'सूत्रधारो' निगद्यते।

आर्ये ! यदि नेपथ्यविधानमवसितम्, 'तदिहागम्यताम् ।

नटी—( प्रविश्य ) ²आर्य ! इयमस्मि, ³आज्ञापयत्वार्यः

तदुक्तं—

"प्रविश्य स्थापकस्तद्वत्काव्यमास्थापयेत्ततः' [सा. ६ प.]

**अलमिति ।** अतिविस्तरेण = प्रपञ्चेन, अलम् = नास्ति किमपि प्रयोजनम् । एकं श्लोकं पठित्वैव विरम्यतेऽस्माभिरित्यर्थः । 'विस्तारो विग्रहो व्यासः, स च शब्दस्य विस्तर' इत्यमरः ।

**नेपथ्य इति ।** कविवाक्यमेतत्, नेपथ्यं = यवनिका ['पर्दा' इति भाषा] तस्याभिमुखं नेपथ्याभिमुखं = नेपथ्यं प्रति, रूपपरिवर्तनगृहं प्रतीत्यप्यर्थः, 'नेपथ्यं स्याद्यवनिका रङ्गभूमिः प्रसाधन' मिति कोशात् ।

आर्ये ! प्रिये ! 'पत्नी चार्येति संभाष्ये'ति भरतः,

विश्वनाथश्च—

'वाच्यौ नटीसूत्रधारावार्यनाम्ना परस्पर'—मिति

नेपथ्यस्य विधानं नेपथ्यविधानं=वेषरचना, 'रामादिव्यञ्जको वेशो नटे नेपथ्यमुच्यत' इति नाट्यशास्त्रम्,

गृहमात्रे गणिकायाः सद्मनि वेशो भवेत्तु तालव्यः,

तालव्यो मूर्धन्योऽलङ्करणे कथित आचार्यै'रित्यूष्मविवेकश्च ।

अवसितं = सम्पूर्णं जातम्, तत् = तर्हि, इह=रङ्गशालायां ['स्टेज' इति 'थियेटरहाल' इति च प्रसिद्धं ]

आर्य ! = प्रिय ! "वाच्यौ नटीसूत्रधारावार्यनाम्ने"त्युक्तेः स्थापकनाम्नो नटस्य सम्बोधनमेतत् । इयमस्मि = इयमहं भवन्नियोगादुपस्थिताऽस्मि [ एवञ्च नेपथ्यविधानमवसितमित्यर्थादवसेयम् ] आज्ञापयतु = निर्दिशतु

१ 'इतस्तावदागम्यताम्' ।

२ अत्र—प्राकृतभागस्य संस्कृतच्छायैव परीक्षोपयोगिनी, अतश्छात्रोपकाराय-च्छायैव स्थूलैरक्षरैः स्थापिता, मूलभूतं प्राकृतं तु-सूक्ष्मैरेवाक्षरैः [ ] एतच्चिह्नान्तः स्थापितं, मूलग्रन्थरक्षार्थैवेति पठतां छात्रणामनेन भूयानुपकारो भविष्यति ।

३ अयंपाठः क्वचिन्नास्ति ।

को नियोगोऽनुष्ठीयतामिति ।

[ अज्जउत्त, इदं ह्मि, आणवेदु अज्जो कोणिओओ अणुचिट्ठीअदु त्ति । ]

सूत्रधारः—आर्य ! इयं हि रस-भावविशेष-दीक्षागुरोर्विक्रमा-

---

भवान् , को नियोगः ? = कः खल्वादेशः, अनुष्ठीयताम् = मया कर्त्तव्यः ? मया किं करणीयमित्यर्थः ।

रङ्गं प्रसाद्य मधुरैः श्लोकैः काव्यार्थसूचकैः ।
रूपकस्य, कवेराख्यां , गोत्राद्यपि स कीर्त्तयेत् ।
ऋतुं च कञ्चित्प्रायेण 'भारतीं' वृत्तिमाश्रितः ।
[ सा० ६ प० ]

इत्युक्तेः—नाटकस्य कवेश्च नाम निर्दिशन् ,—
'भारती संस्कृतप्रायो वाग्व्यापारो नटाश्रयः,
तस्याः प्ररोचना वीथो तथा प्रहसनाऽऽमुखे, अङ्गानि,—
"अथोन्मुखीकारः प्रशंसातः प्ररोचना"—

—इत्युक्तस्वरूपां भारतीवृत्त्यङ्गभूतां प्ररोचनामारचयति—
आर्ये ! इति । आर्ये ! = श्रेष्ठे !

रसाश्च भावाश्च रस-भावाः, तेषां विशेषा-रस-भावविशेषाः, तेषां दीक्षादायको गुरुः—रस-भावविशेषदीक्षागुरुस्तस्य रस—भावविशेष-दीक्षागुरोः = शृङ्गारादिरस—देवादिविषयकरत्यादिभाव—प्रभेदप्रवर्त्तकस्य, महाकवेरित्यर्थः ।

"विभावेनानुभावेन व्यक्तः सञ्चारिणा तथा,
रसतामेति रत्यादिः स्थायीभावः स चेतसा"—मिति—
"सञ्चारिणः प्रधानानि, देवादिविषया रतिः,
उद्बुद्धमात्रः स्थायी च 'भाव' इत्यभिधीयते"—
—इति च रस—भाव विवेकः साहित्यदर्पणे ।

दित्यस्य अभिरूपभूयिष्ठा परिषत् । अस्याञ्च खलु कालिदास-ग्रथितवस्तुनाभिज्ञानशाकुन्तलनामधेयेन नवेन नाटकेनोपस्थातव्य-मस्माभिः । तत्प्रतिपात्रमाधीयतां यत्नः ।

नटी—सुविहितप्रयोगतयार्यस्य न किमपि परिहास्यिष्यते ।

[ सुविहिदप्पओअदाए अज्जस्स ण किं वि परिहाइस्सदि । ]

सूत्रधारः—( सस्मितं— ) आर्ये ! कथयामि ते भूतार्थम्—

---

अभिरूपा भूयिष्ठा यस्यां सा—अभिरूपभूयिष्ठा = पण्डितप्रचुरा, विद्वत्सङ्कुलेत्यर्थः । चेतश्चमत्कारकारिणी वा, "अभिरूपो-बुध-मनोज्ञयो"—रित्यमरः । परिषत् = राजसभा, एतावता सभ्यप्रशंसोपन्यस्ता,

अस्याञ्च = एवंप्रसिद्धायां, विद्वत्प्रचुरायां राजसभायाञ्च, कालिदासेन ग्रथितं वस्तु यस्मिन् तेन—कालिदासग्रथितवस्तुना = कालिदासगुम्फितकथा-भागशालिना, नवेन = प्रत्यग्ररचितेन-अभूतपूर्वेण वा, अभिज्ञानशाकुन्तल-नामधेयेन = अभिज्ञानशाकुन्तलाख्येन, अभिज्ञायतेऽस्मिन् तदभिज्ञानं, शकुन्तलामधिकृत्य कृतं शाकुन्तलं, अभिज्ञानं च तत्—शाकुन्तलं च—अभिज्ञानशाकुन्तलं, उपचारान्नाटकमपि तथा नाटकेन=रूपकभेदेन, उपस्था-तव्यम् = अभिनेतव्यम्, तत्=तस्मात्, पात्रं पात्रं प्रतीति—प्रतिपात्रं = प्रतिनटम्, यत्नः=प्रत्यवेक्षणं,

एवं विधायाः परिषदो रञ्जने प्रवृत्तैरस्माभिः परमवहितैर्भाव्यमित्याशयः । "पात्रं—नाट्यानुकर्तरी"ति हैमः, एतावता—नाटकस्य कवेश्च नामादि समुप-न्यस्तं वेदितव्यम् ।

सुविहितः प्रयोगो येन, तस्य भावस्तयाः—सुविहितप्रयोगतया = बहुशः कृतनाट्काभिनयतया, निपुणस्य, आर्यस्य = भवतः, परिहास्यिष्यते=त्रुटितं भविष्यति, सर्वेषां नटानां भवतश्चाभ्यासनैपुण्येन सर्वं शोभनमेव भवेदिति नट्याः सम्भावनमेतत् ।

सस्मितमिति । आत्मप्रशंसयाऽत्र स्मयः । भूतार्थम्=तत्त्वम्, "भूतं-

आ परितोषाद्विदुषां न साधु मन्ये प्रयोगविज्ञानम् ।
बलवदपि शिक्षितानामात्मन्यप्रत्ययं चेतः ॥२॥

नटी—(सविनयं-) आर्य ! एवमेतत्, अनन्तरकरणीयमार्य आज्ञापयतु

[ अज्ज, एवं णेदम् । अणन्तरकरणिज्जं अज्जो आणवेदु । ]

सूत्रधारः—आर्ये ! किमन्यदस्याः परिषदः [1]श्रुतिप्रमोदहेतो गीतात्करणीयमस्ति ?

नटी—अथ कतमं पुनर्ऋतुमधिकृत्य गास्यामि ?

[ अध कदमं उण उदुं अधिकारिअ गाइस्सं ? ]

क्षमादौ पिशाचादौ न्याय्ये सत्योपमानयो”रिति विश्वः, कथया- निर्दिशामि,

तदेवाह—आ परितोषादिति । आ परितोषात् = सहृदयप्री यावत्, प्रयोगस्य विशिष्टं ज्ञानं—प्रयोगविज्ञानं=अभिनयकौशलं, न सा मन्ये=न शोभनं मन्ये, बलवदपि=दृढतरमपि, शिक्षितानां=कृताभ्यासानाम्, आत्मनि=स्वात्मनि, चेतः=चित्तं, अप्रत्ययम्=अविश्वासि, भवतीति शेषः।

विद्वांस एव मत्प्रयोगपरिचयकौशलं ज्ञास्यन्तीति हृदि निहितो भावः।

अत्रोत्तरार्धेन—‘बलवदमी’त्यादिना—पूर्वार्धोपात्तविशेषार्थस्य सम- दर्थान्तरन्यासोऽलङ्कारः। पूर्वार्धे च गम्यस्य—“पण्डितैरेव विज्ञेयमस्मन्ना- टककौशल”मित्यस्यार्थस्य स्फुटं प्रतिपादनात्पर्यायोक्तमलङ्कारः ॥२॥

एवमिदमिति। यथा भवानाह तथैव तत्, सत्यमिदमित्यर्थः, अनन्त- करणीयमनन्तरकरणीयम्=किमग्रे विधेयमिति,

किमन्यदिति। अस्याः परिषदः श्रुतिप्रमोदहेतोः= कर्णानन्ददायिन गीतात् = गानात्, अन्यत्=अतिरिक्तं, किमपि न करणीयमस्तीति सम्बन्धः

कतममिति। षण्णामृतूनां मध्ये कमृतुमधिकृत्य गायनमाचरणीयमि प्रश्नाशयः।

१. ‘श्रुतिप्रसादनः’ ।

नटी - अथ कतमं पुनः ऋतुमधिकृत्य। अध कदम

अण उदुं अधिकरिअ गाइस्सं।

सुभगसलिलावगाहाः पाटलसंसर्गसुरभिवनवाताः।

प्रच्छायसुलभनिद्रा दिवसाः परिणामरमणीयाः॥३॥

नटी - तथा। तह (इति गायति)।

ईषदीषच्चुम्बितानी भ्रमरैः प्रथम सकुमारकेसर शिखानि

अवतंसयन्ति दयमानाः प्रमदा शीरीष कुसुमानि॥४॥

ईषदीषच्चुबिआई भमरेहि उह सुउमारकेसरसिहाइं।

ओदंसअंति दअमाणा पमदाओ सिरीसकुसुमाई।

सूत्र — आर्ये।

साधु - गीतम्। अहो रागापहृतचित्तवृत्तिरालिखित

इव विभाति सर्वतो रङ्गः॥

तदिदानीं कतमं प्रयोगमाश्रित्यैनमाराधयामः?।

नटी - ननु प्रथममेव आर्येण आज्ञप्तमभिज्ञानशाकुन्तलं

नाम अपूर्वं नाटकमभिनीयतामिति।

णं पढमं अज्जेण आणत्तं अहिण्णाणसउंतलं णाम

अब्बं पाडअं अहिणीअदु त्ति।

सूत्र - आर्ये! सम्यगनुबोधीतोऽस्मि। अस्मिन्

क्षणे खलु विस्मृतं ममैतत्। कुतः - तवास्मि

गीतरागेण हारिणा प्रसभं हृतः। एष राजेव दुष्यन्तः

सारङ्गेणातिरंहसा॥५॥

इति निष्क्रान्तौ। इति प्रस्तावना।

ततः प्रविशति रथारूढः सशरचापहस्तो मृगमनुसरन्

राजा सूतश्च।

सूतः - राजानं मृगञ्चावलोक्य आयुष्मन्?

कृष्णसारे ददच्चक्षुस्त्वयि चाधिज्यकार्मुके।

ानुसारिणं साक्षात् पश्यामीव पिनाकिनम् ।५।
ा-सूत ! दूरमनुना सारङ्गेण वयमाकृष्टाः ।
ड्यमिदानीमपि ग्रीवाभङ्गाभिरामं मुहुरनुपतति
यन्दने बद्धदृष्टिः पश्चार्द्धेन प्रविष्टः शरपतनभ-
ाद् भूयसा पूर्वकायम् । शष्पैरर्द्धावलीढैः श्रमवि-
तमुखभ्रंशिभिः कीर्णवर्त्मा पश्योदग्रप्लुतत्वाद्वियति
हुतरं स्तोकमुर्व्यां प्रयाति ॥6॥
विस्मयम्) कथमनुपतत एव मे प्रयत्नप्रेक्षणीयः
र्णित्वो संवृत्तोऽयं मृगाः ।
सूतः- उद्घातिनी भूमिरिति रश्मिसंयमनात्
रथस्य मन्दीभूतो वेगः, तेनैष मृगो विप्रकृष्टः
वृत्तः । सम्प्रति समदेशवर्त्ती न ते
दुरासदो भविष्यति ।
राजा — तेन हि मुच्यन्तामभीषवः ।
सूतः - यथाज्ञापयत्यायुष्मान् ।
इति भूयो रथवेगं सूचयित्वा ।
आयुष्मन् ! पश्य पश्य । एते हि —

पश्य पश्य, ? एते हि—

मुक्तेषु रश्मिषु निरायतपूर्वकाया
निष्कम्पचामरशिखा निभृतोर्ध्वकर्णाः।
आत्मोद्धतैरपि रजोभिरलङ्घनीया
धावन्त्यमी मृगजवाक्षमयेव रथ्याः ॥८॥

राजा—(सहर्षम्—) नूनमतीत्य हरिणं हरयो वर्त्तन्ते,—

एते हि = रथनियुक्ता हि—"धावन्ति वर्त्मनि तरन्ति नु वाजिनस्ते" इति श्लोकचतुर्थचरणेन सम्बन्धः।

मुक्तेष्विति। रश्मिषु = [1]प्रग्रहेषु मुक्तेषु, सत्सु, नितरामायतः—[ पूर्वकायस्य—] पूर्वकायो येषान्ते—निरायतपूर्वकायाः = विस्तारितस्कन्धमुखपादप्रदेशाः, [ वेगेन धावतां वाजिनां स्वभाव एषः। ] अत एव—स्वेषाम्= स्वखुरोत्थितानां, प्रसरतां = विसरणशीलानां, रजसामपि = धूलीनामपि, अगम्याः = दुष्प्रापाः, स्वखुरोद्धूतधूलिपटलैरपि दुष्प्रापाः, किमुतान्यैरिति वेगातिशयो निरूपितः।

निष्कम्पा—[चामरमिव चामरं, तेषां—] चामराणां शिखा येषान्ते—निष्कम्पचामरशिखाः = अतिशयवेगशालितया—निश्चलपुच्छाग्रभागाः, निश्चलस्कन्धप्रदेशस्थकेसराग्रभागा इति वाऽर्थः, च्युताः कर्णानां भङ्गाः येषान्ते = निश्चलकर्णाः, ते = तव, वाजिनः = अश्वाः, वर्त्मनि = मार्गे, धावन्ति = सत्वरं गच्छन्ति, नु ? अथवा—तरन्ति = गगने प्लवन्ते ? [ पश्य—पश्येति पूर्वेण-सम्बन्धः ] किमिमेऽश्वा भूमौ चलन्ति, जलाशयसदृशे आकाशे वा प्लवन्त इति वेगातिशयान्निर्णेतुं न शक्यत इत्याशयः। स्वभावोक्तिरलङ्कारः ॥८॥

नूनमिति। सम्भाव्यत इत्यर्थः। हरिणमतीत्य = वेगेन मृगमुल्लङ्घ्य, हरितो हरींश्चेति पाठे—हरितः = सूर्याश्वान्, हरीन् = इन्द्रवाजिनश्चेत्यर्थो

१ 'घोड़ों की लगाम'।

यतः—

यदालोके सूक्ष्मं व्रजति सहसा तद्विपुलतां
यदर्धे विच्छिन्नं भवति कृतसन्धानमिव तत् ।
प्रकृत्या यद्वक्रं तदपि समरेखं नयनयो—
र्न मे दूरे किंचित्क्षणमपि न पार्श्वे रथजवात् ॥९॥

सूतः—पश्यैनं व्यापाद्यम् । (राजा शरसंधानं नाटयति ।)

---

बोध्यः, हरितो नीलवर्णानिति हरिविशेषणं वा । तेन हरितो हरीन्=नीला सूर्याश्वानित्यर्थः, 'हरिदश्वोष्णरश्मय' इति कोशात्सूर्यस्याश्वा नीलवर्णा इति प्रसिद्धम् । चकारोऽप्यर्थे बोध्यः ।

कुत एतज्ज्ञायते ? अत आह—यत इति । अग्रिमश्लोकेनेदं सम्बध्यते । यदेति । यत् = किमपि वस्तु वृक्षादिरूपम्, आलोके = प्रथम-दर्शने "आलोकौ दर्शनोद्योतौ" इत्यमरः । सूक्ष्मं = तनुतरं, दृश्यत इति शेषः । [ वस्तुत—आलोक इति लोकृधातोर्लटि रूपम् , यत्सूक्ष्ममालोके = पश्यामीत्यर्थः । ] सहसा = द्रागेव, तस्मिन्नेव क्षणे, तत् = वस्तु, नयनयोः विपुलतां = विस्तीर्णतां, भजति = धत्ते, रथजवादिति वक्ष्यमाणो हेतुर्मे रासञ्जनीयः ।

यत् = वस्तु, अर्धे विच्छिन्नं = त्रुटितं, वृक्षपंक्तिभूतलादिकं, तत् कृतसन्धानमिव = मिलितमिव, नयनयोः भवति = जायते । रथजवादेव 'वाष्पयान'यायिनां विदितमेवैतत् । प्रकृत्या = स्वभावेन, यत् = वस्तु वक्रं = कुटिलं, तदपि—नयनयोः = चक्षुषोः, समा रेखा यस्य तत्—समरेखं = सरलं, रेखा = आभोगः "रेखा स्यादल्पके छद्मन्याभोगोल्लेखयोरपी"ति हैमः । मे = मम, रथजवात्, क्षणमपि दूरे न किञ्चित्, पार्श्वेऽपि = निकटेऽपि, न किञ्चित्, रथवेगाद् दूरतरमपि वस्तु निकटे, निकटस्थमपि

Shree S.D. Shastree M.A; B.L
Gold-Medalist



( नेपथ्ये— )

भो भो राजन् ! आश्रमऽमृगोऽयं न हन्तव्यो, न हन्तव्यः ।

**सूतः**—(आकर्ण्यावलोक्य च–) आयुष्मन् ! अस्य खलु ते बाणपातपथवर्तिनः कृष्णसारस्यान्तरायौ तपस्विनौ संवृत्तौ ।

**राजा**— ( ससंभ्रमम् ) प्रगृह्यन्तामभीषवः ।

**सूतः**—यथाज्ञापयत्यायुष्मान् । (—इति तथा करोति ।)

---

दूरे–भवतीत्यतितरां रथवेगो वर्णितः । 'यदा-यदेति, 'वति–वते'ति, 'नय-नयो'रित्यादिरीत्या च्छेकानुप्रासादयो गवेषणीयाः ॥९॥

व्यापाद्यम् = वध्यम् । नाटयति = अनुकरोति ।

नेपथ्य इति । कविवचनमेतत्, अप्रविष्टेनैव यज्जवनिकान्तरस्थेन कथ्यते तत्—'नेपथ्ये'–इत्युच्यते । अन्तरसन्धिरयं, प्रकृतार्थसूचनात् । तदुक्तं मातृगुप्ताचार्यैः–

स्वप्नो दूतश्च लेखश्च नेपथ्योक्तिस्तथैव च ।
आकाशवचनं चेति ज्ञेया ह्यन्तरसन्धय—इति ।

राजन्निति । 'राजन्नित्यृषिभिर्वाच्य' इति भरतोक्तेर्दुष्यन्तसम्बोधन-मेतत् । आश्रमस्य मृगः–आश्रममृगः=आश्रमवासिमुनिजनपालितो हरिणः, आकर्ण्य = श्रुत्वा, अवलोक्य = दृष्ट्वा च । बाणस्य पातस्य यः पन्थास्तस्मिन् वर्तते तच्छीलः–तस्य—बाणपातपथवर्तिनः, = अतिनिकटवर्त्तिनः, कृष्ण-सारस्य = मृगस्य, अन्तरायौ = बाणपातविघ्नभूतौ, तपस्विनौ = तापसौ, संवृत्तौ = जातौ । "वैखानसस्तु ना वानप्रस्थेऽप्यृषिषु केषुचित्, क्लीबं सामप्रभेद" इति केशवः ।

संभ्रमेण सहितं यथा स्यात्तथा–ससम्भ्रमं = सत्वरम्, गृह्यन्ताम् = नियम्यन्ताम्, अभीषवः = रश्मयः । रथोऽवस्थापनीय इत्यर्थः ।

इति = इत्युक्त्वा, तथा करोति = रथमवस्थापयति ।

( ततः प्रविशति सशिष्यो वैखानसः । )

**वैखानसः**—(हस्तमुद्यम्य—) राजन् ! आश्रममृगोऽयं न हन्तव्यो न हन्तव्यः ।

न खलु न खलु बाणः सन्निपात्योऽयमस्मिन्-
मृदुनि मृगशरीरे तूलराशाविवाग्निः ।
क्व बत हरिणकानां जीवितं चातिलोलं,
क्व च निशितनिपाता वज्रसाराः शरास्ते ॥१०॥

तदाशु कृतसन्धानं प्रतिसंहर सायकम् ।
आर्त्तत्राणाय वः शस्त्रं, न प्रहर्त्तुमनागसि ॥११॥

---

सशिष्यः = छात्रानुगतः, वैखानसः = तापसः, । हस्तमुद्यम्य = ऊर्ध्वबाहुः ।

न खल्विति । अस्मिन् मृदुनि मृगशरीरे—तूलराशावग्निरिव-अ बाणः-न खलु न खलु संनिपात्य—इति सम्बन्धः ।

मृदुनि = कोमले, मृगशरीरे = हरिणवपुषि, तूलस्य राशिः = तू राशिस्तस्मिन्-तूलराशौ = कार्पासपुञ्जे, अग्निरिव = पावक इव, सन्निपात्यः प्रहरणीयः । अनुनयार्थकः 'खलुः'—"निषेधवाक्यालङ्कारे जिज्ञासाऽनुन खलु"—इत्यमरः ।

बत ! खेदे, अनुकम्प्या हरिणा-हरिणकाः, तेषां = बालमृगानाम् अतिलोलम् = अतिसुकुमारं, जीवितं = जीवनं, क्व ? = कुत्र ?

निशितो निपातो येषान्ते-निशितनिपाताः = तीक्ष्णप्रहाराः, वज्र सारो येषान्ते वज्रसाराः = वज्रकठोराः, ते = तव, शराः = बाणाः, च क्व ! महद्वैषम्यमनयोरित्याशयः । विषमोऽलङ्कारः ॥१०॥

तदिति । तद् = तस्मात्, अनौचित्यात्, कृतं सन्धानं यस्य

प्रज - पृष्ठ

राजा - (सप्रणामम्) एष प्रतिसंहृत इति यथोक्तं करोति । वैखानसः - ~~सहर्षम्~~ सहर्षम् । सदृशमेवैतत् पुरुवंश-प्रदीपस्य भवतः ।

जन्म यस्य पुरोर्वंशे युक्तरूपमिदं तव ।
पुत्रमेवङ्गुणोपेतं चक्रवर्तिनमाप्नुहि ॥१२॥

(इतरोऽपि - हस्तमुद्यम्य) सर्वथा ~~चक्रवर्तिनं~~ चक्रवर्तिनं पुत्रमाप्नुहि । राजा - (सप्रणामम्) प्रतिगृहीतं ब्राह्मणवचः ॥

वैखानसः - राजन् ! समिदाहरणाय प्रस्थितावयम् एव चास्मद्गुरोः कण्वस्य कुलपतेः ~~सधिदैवत~~ सधिदैवत एव शकुन्तलया अनुमालिनीतीरमाश्रमो दृश्यते ।
न चेदन्यकार्यातिपातस्तदत्र प्रविश्य प्रतिगृह्यतामातिथिसत्कारः ।
अपि च - ~~धर्म्या~~ धर्म्यास्तपोधनानां प्रतिहतविघ्नाः ज्ञास्यसि कियद्भुजो मे रक्षति मौर्वीम्

अपि च—

कुल्याम्भोभिः पवनचपलैः शाखिनो धौतमूलाः,
भिन्नो रागः किशलयरुचामाज्यधूमोद्गमेन।
एते चार्वागुपवनभुवि च्छिन्नदर्भाङ्कुरायां
नष्टाशङ्का हरिणशिशवो मन्दमन्दं चरन्ति ॥१५॥

पन्थानः–तोयाधारपथाः = जलाशयमार्गाः, वल्कलानां शिखास्तासां निष्य-न्दास्तेभ्यो रेखास्ताभिरङ्किताः–वल्कलशिखानिष्यन्दरेखाङ्किताः = वल्कलाग्र-परिस्रुतजलधारारेखा-भूषिताः। अचिरस्नातमुनिजन-वृक्षत्वग्वस्त्रदशास्रुत-वारिकणाङ्कितसैकतभूभागाः, अत्रापि–क्वचित्—दृश्यन्त इति योजनीयम्। [वृत्ति–श्रुत्यनुप्रासौ, क्रियासमुच्चयः–काव्यलिङ्गञ्चालङ्काराः] ॥ १४ ॥

अपि च = किञ्च,—कुल्याम्भोभिरिति। पवनेन चपलानि–तैः–पवनचपलैः = वाताहतैः, कुल्यानामम्भांसि–तैः–कुल्याम्भोभिः = सारणी-जलैः, आलवालवारिभिरिति वा। "कुल्याल्पा कृत्रिमा सरित्," इत्यमरः [ 'नहर' इति भाषा] शाखिनः = वृक्षाः, धौतानि मूलानि येषान्ते–धौतमूलाः = क्षालितमूलप्रदेशाः, सन्तीति शेषः।

आज्यस्य यो धूमस्तस्योद्गमस्तेन—आज्यधूमोद्गमेन = हविर्धूमपटलो-द्गमेन, किसलयानां रुचस्तासां—किसलयरुचां = पल्लवद्युतीनां, भिन्नः = अस्वाभाविकः—रागः = लौहित्यं,—'दृश्यत' इति शेषः।

एते = पुरो दृश्यमानाः, नष्टा आशङ्का येषान्ते—नष्टाशङ्काः = निर्भयाः, हरिणानां शिशवः = मृगशावकाः, अर्वाक् = समीप एव, छिन्ना दर्भाणाम-ङ्कुरा यस्यां तस्यां—छिन्नदर्भाङ्कुरायां = लूनदर्भायाम्, उपवनस्य भूरुपवन-भूस्तस्यामुपवनभुवि = आरामभूभागे, "आरामः स्यादुपवनं कृत्रिमं वनमेव यदि"त्यमरः। मन्द-मन्दम् = अतिमन्दम् = चरन्ति = खेलन्ति, अत आश्रम-प्रदेश एवायमित्याशयः। [ क्रियासमुच्चयः, अनुमानञ्चालङ्कारौ, च्छेक-श्रुति-वृत्त्यनुप्रासाश्च] ॥१५॥

सूतः—सर्वमुपपन्नम् ।

राजा—( स्तोकमन्तरं गत्वा— ) आश्रमोपरोधो माभूत्, तदिहैव रथं स्थापय, यावदवतरामि ।

सूतः—धृताः प्रग्रहाः, अवतरत्वायुष्मान् ।

राजा—( अवतीर्य्य, आत्मनमवलोक्य च ) सूत ! विनीतवेशेन प्रवेष्टव्यानि तपोवनानि, तदिमानि तावद् गृह्यन्तामाभरणानि, धनुश्च ( इति सूतस्यार्पयति—सूतो गृह्णाति ) ।

राजा—यावदाश्रमवासिनः प्रत्यवेक्ष्य निवर्त्तिष्ये, तावदार्द्रपृष्ठाः क्रियन्तां वाजिनः ।

सूतः—यथाज्ञापयत्यायुष्मान् ( इति निष्क्रान्तः ) ।

---

सर्वं = भवदुक्तम्, उपपन्नं=युक्तियुक्तम्, आश्रमाभोग एवायमित्यर्थः।

स्तोकम् = अल्पम्, अन्तरम् = अभ्यन्तरम्, आश्रमस्योपरोधः—आश्रमोपरोधः = आश्रममर्यादाभङ्गः, मा भूत, = मा भवतु, तत् = तस्मात् इहैव = अस्मिन्नेवाश्रमबहिर्भागे, स्थापय = व्यवस्थापय । यावत् = तावत्पर्यन्तं—यावदहम्, अवतरामि = अवरोहामि, प्रग्रहाः = रश्मयः, धृताः = आकृष्टाः, रथोऽवस्थित इति यावत् ।

आत्मानं = स्ववपुः, विनीतश्चासौ वेशश्च तेन = अनुद्धतेन वेशेन तपोवनानि आश्रमाः = धनुः = कार्मुकं, गृह्यन्ताम् = ग्राह्याणि, इति = इत्युक्त्वा, सूतस्य=सूताय, अर्पयति = ददाति । सम्बन्धसामान्यविवक्षायां षष्ठी । गृह्णाति = धनुराभरणानि चादत्ते ।

आश्रमवासिनः = तापसान्, प्रत्यवेक्ष्य = दृष्ट्वा, यावत्-निवर्त्तिष्ये = निवर्त्स्यामि, तावत् = तावत्कालपर्यन्तम्, आर्द्रं शीतलं पृष्ठं येषान्ते—आर्द्रपृष्ठाः = अपगतश्रमाः, कृतोपचारा इति यावत्,

इति = इत्युक्त्वा, निष्क्रान्तः = सूतो रङ्गप्रदेशान्निर्गतः ।

**राजा**—( परिक्रम्यावलोक्य च— ) इदमाश्रमपदं तावत् प्रविशामि । ( प्रविश्य, प्रवेष्टेन निमित्तं सूचयित्वा— ) अये !

**शान्तमिदमाश्रमपदं, स्फुरति च बाहुः, कुतः फलमिहास्य ।**
**अथवा भवितव्यानां द्वाराणि भवन्ति सर्व्वत्र ॥१६॥**

( नेपथ्ये— )

इत इतः प्रियसख्यौ ।

---

परिक्रम्य = किञ्चिच्चरणविन्यासं कृत्वा, अवलोक्य=इतस्ततो विलोक्य, इदम्, आश्रम एव पदमाश्रमपदं—वर्त्तत इति शेषः, प्रविशामि तावत् = प्रविशामीत्यर्थः, तावदिति वाक्यालङ्कारे । प्रवेष्टेन = बाहुना, दक्षिणेनेत्यर्थादेव, पुरुषदक्षाङ्गस्फुरणस्यैव शुभसूचकत्वात्—तदुक्तं "वामेतरभुजस्पन्दो वरस्त्रीलाभदायक" इति—शकुनशास्त्रे, निमित्तं=शकुनं, "निमित्तं हेतुलक्ष्मणो-रित्यमरः । सूचयित्वा = नाटयित्वा, "भुजबाहू प्रवेष्टो दो"रित्यमरः ।

अये ! = अहो ! शान्तमिति । इदमाश्रमपदं = पुरो विभाव्यमान-आश्रमस्थानं, शान्तम् = शृङ्गाररसाननुगुणम्, बाहुः = दक्षिणो भुजः, च = पुनः, स्फुरति = कान्तालाभमादिशति । अस्य = भुजस्फुरणस्य, इह = अस्मिन्नाश्रमे, फलं कुतः ? = कथमस्य साफल्यं भवेत् ? ।

अथ वा = किं वा—अलं चिन्तया, भवितव्यानाम् = अवश्यम्भाविनां, द्वाराणि=उपायाः—"अभ्युपाये निर्गमने च द्वारमित्यभिधीयत" इति विश्वः । सर्वत्र = सर्वेषु प्रदेशेष्वपि, भवन्ति = जायन्ते । [ सामान्येन विशेषस्य समर्थनादर्थान्तरन्यासः । अनयाऽऽर्यया परिकरनामकं मुखसन्धेर्द्वितीयमङ्गं सूचितं, तल्लक्षणन्तु—"समुत्पन्नार्थबाहुल्य ज्ञेयः परिकर" इति दर्पणे । संक्षेपेण सूचितस्यार्थस्य बाहुल्येन सूचनं परिकर इति च तदर्थः, औत्सुक्यमत्र बीजं वृद्धिं गतम् । ] ॥१६॥

नेपथ्ये = यवनिकायां—इत-इतः = अस्यामस्यां दिशि, प्रियसख्यौ=

[इदो इदो पिअसहीओ]

राजा—(कर्णं दत्त्वा—) अये ! दक्षिणेन वृक्षवाटिकामालाप इव श्रूयते, यावदत्र गच्छामि। (परिक्रम्यावलोक्य च—) अये एतास्तपस्विकन्यकाः स्वप्रमाणानुरूपैः सेचनघटैर्बालपादपेभ्यः पयो दातुमित एवाभिवर्त्तन्ते, (निपुणं निरूप्य-) अहो मधुरमासां दर्शनम्,—

शुद्धान्तदुर्लभमिदं वपुराश्रमवासिनो यदि जनस्य।
दूरीकृताः खलु गुणैरुद्यानलता वनलताभिः ॥१७॥

---

अनसूया-प्रियम्वदे !, 'आगच्छतं, युवा'मिति शेषः। "नायिकानां सखी... च शौरसेनी प्रकीर्तिते"ति भरतोक्तेरासां प्राकृतभाषा प्रयुज्यते।

कर्णं दत्त्वा = श्रुत्वा, तादृगभिनीयेत्यर्थः। वृक्षाणां वाटिका, तां वृक्षवाटिकाम् = उपवनं, दक्षिणेन = उपवनस्य दक्षिणस्यां दिशी... "अमात्यगणिकागेहोपवने वृक्षवाटिके"त्यमरः। "एनपा द्वितीया", आ... इव = वार्त्तालाप इव,

एताः = इमाः, तपस्विनाम् [ अल्पाःकन्याः— ] कन्यकाः—तप... कन्यकाः = मुनिबालिकाः, स्वस्य यत्प्रमाणं तस्यानुरूपैः = स्वश... योग्यैः, "प्रमाणं मान-शास्त्रयो"रिति धरणिः। सेचनस्य घटाः—सेच... घटास्तैः-सेचनघटैः = सेचनोपयोगिकलसीभिः, बालाः पादपा—बालप... पास्तेभ्यः—बालपादपेभ्यः = तरुपोतेभ्यः, पयः = जलं, दातुम् = प्रदा... इत एव = अस्यामेव दिशि, अभिवर्त्तन्ते = आगच्छन्ति।

निपुणं = बाढं, निरूप्य = दृष्ट्वा, अहो ! = आश्चर्यम् ! मधुर... मनोहारि, "मधुरं—रसवत्स्वादुप्रियेष्वि"ति विश्वः, दृश्यते यत्तद् द... स्वरूपं, शुद्धान्तेति। शुद्धान्तेषु दुर्लभं—शुद्धान्तदुर्लभं = अन्तःपुरदुर्ल... इदं = ईदृशं पुरो दृश्यमानं, वपुः = शरीरं, यदि आश्रमे वसति तच्छील...

यावदेताश्छायामिमामाश्रित्य प्रतिपालयामि । ( इति विलोकयन् स्थितः । )

( ततः प्रविशति यथोक्तव्यापारा सह सखीभ्यां शकुन्तला । )

एका—हला शकुन्तले ! त्वत्तोऽपि तातकण्वस्य आश्रमवृक्षाः प्रियतरा इति तर्कयामि; येन नवमालिकाकुसुमपरिपेलवापि त्वमेतेषामालवालपरिपूरणे नियुक्ता ।

[ हला सउन्तले ! तत्तो वि तादकण्णस्स अस्समरुक्खआ पिअदरा त्ति तक्केमि; जेण णोमालिआकुसुमपरिपेलवावि तुमं एदाणं आलवालपरिऊरणे णिउत्ता । ]

---

स्तस्य—आश्रमवासिनः = वनवासिनोऽपि, जनस्य=मुनिबालिकालोकस्य, अस्तीति शेषः, खलु=निश्चयेन, वनलताभिः=अरण्यवल्लीभिः, गुणैः = सौन्दर्यकोमलत्वादिभिः, उद्याने लता—उद्यानलताः = आरामवीरुधः, दूरीकृताः = निराकृताः, धिक्कृता इत्यर्थः । [निदर्शनाऽलङ्कारः, अप्रस्तुतप्रशंसा च, तयोः संसृष्टिः, प्रतिवस्तूपमां के चन मन्यन्ते, छेकवृत्त्यनुप्रासौ च । ]

यावत् = किञ्चित्कालं, छायामिमां = संनिहिततरुच्छायामिमाम्, आश्रित्य = आस्थाय, एताः = इमा मुनिकन्यकाः, प्रतिपालयामि=प्रतीक्षे, "यावत्तावच्च साकल्येऽवधौ मानेऽवधारणे" इति मेदिनी ।

उक्तमनतिक्रम्य यथोक्तं—व्यापारो यस्याः सा—यथोक्तव्यापारा = वृक्षानभिषिञ्चन्ती ।

सखीभ्याम् = अनसूयाप्रियम्वदाभ्याम् । हला ! = अयि !—"सामानाभिस्तथा सख्यो 'हला' भाष्याः परस्परम्" इति नाट्यशास्त्रम् । नवमालिकायाः कुसुमानि, तद्वत्परिपेलवा—नवमालिकाकुसुमपरिपेलवा = अत्यन्तनवमालिकाकुसुमसुकुमारा, "पेलवं कोमले तनौ" इति शाश्वतः । आलवालनां पूरणे—आलवालपूरणे = वृक्षमूलवर्त्तिजलावस्थितिस्थानपरि-

**शकुन्तला**—हला अनसूये ! न केवलं तातस्य नियोगः, ममापि एतेषु सहोदरस्नेहः । (इति वृक्षसेचनं नाटयति ।)

[ हला अणसूए ! ण केवलं तादस्स णिओओ, मम वि एदेसुं सहोअरसिणेहो । ]

**द्वितीया**—सखि ! शकुन्तले ! उदकं लम्भिता एते ग्रीष्मकालकुसुमदायिन आश्रमवृक्षाः, इदानीमतिक्रान्तकुसुमसमयानपि वृक्षान् सिञ्चामः; तेन अनभिसन्धिगुरुको धर्मो भविष्यति ।

[सहि ! शउन्तले ! उदअं लम्भिदा एदे गिह्मआलकुसुमदाइणो अस्समरुक्खआ । दाणिं अदिक्कन्तकुसुमसमए वि रुक्खके सिञ्चह्म; तेण अणहिसन्धिगुरुओ धम्मो भविस्सदि ।

**शकुन्तला**—हला प्रियम्वदे ! रमणीयं मन्त्रयसि । (इति भूयो वृक्षसेचनं नाटयति) ।

[हला पिअम्वदे ! रमणिज्जं मन्तेसि] ।

---

पूरणे, "स्यादालवालमावालमावाप" इत्यमरः । "आलवालं विदुर्धाराधारणं द्रवतोऽम्भस" इति च कोशान्तरम् ।

तातस्य नियोगः—तातनियोगः = पितुराज्ञा,—एव सेचने न कारणं किन्तु—एतेषु = आश्रमतरुपोतेषु, सहोदरेष्विव स्नेहः—सहोदरस्नेहः = भ्रातृवत्स्नेहः, अस्तीति शेषः, नाटयति, = रूपयति तथाऽनुतिष्ठतीत्याशयः

लम्भिताः = ग्राहिताः, ग्रीष्मकाले कुसुमं ददति तच्छीलाः—ग्रीष्मकालकुसुमदायिनः—ग्रीष्मर्त्तुपुष्पप्रदाः, अतिक्रान्तः कुसुमसमयो येषान्ते अतिक्रान्तकुसुमसमयाः, तान्—व्यतीतपुष्पसमयान्, नास्ति—अभिसन्धिः यस्मिन्नेवम्विधोऽत एव [गुरुरेव—] गुरुकः—अनभिसन्धिगुरुकः = फलानुसन्धानरहितः, । रमणीयं = सुन्दरं, मन्त्रयसि = वदसि,

राजा—( निर्वर्ण्य, आत्मगतम्— ) कथमियं सा कण्वदुहिता शकुन्तला! ( सविस्मयम् ) अहो ! असाधुदर्शी खलु भगवान् कण्वः, य इमामाश्रमधर्मे नियुङ्क्ते ।

इदं किलाव्याजमनोहरं वपुः
तपः क्षमं साधयितुं य इच्छति ।
ध्रुवं स नीलोत्पलपत्रधारया
शमीलतां छेत्तुमृषिर्व्यवस्यति ॥१८॥

---

निर्वर्ण्य = नितरां विलोक्य, आत्मगतम् = स्वयमेव विमृशतीत्यर्थः, तदुक्तम्—"अश्राव्यं खलु यद्वस्तु तदिह स्वगतं मत"मिति [ सा० द० ]। सा = श्रुतपूर्वा, कण्वदुहिता = कण्वतनया, शकुन्तला, न साधु पश्यतीत्यसाधुदर्शी = असाधुकारी, भगवान् = सकलज्ञाननिधिः, काश्यपः = कण्वः, कण्व इत्येव वा पाठः। आश्रमस्य धर्मस्तस्मिन् आश्रमधर्मे = तपोवनकठिनकर्मसु—वृक्षसेचनादिषु, नियुङ्क्ते = योजयति' ।

इदमिति । नास्ति व्याजः = आभूषणादिधारणं यत्र—तदव्याजं, [सत्—] मनोहरम्=अव्याजमनोहरं = स्वभावसुन्दरम्, इदं=शकुन्तलाया, वपुः = शरीरं, तपसः क्षमं—तपःक्षमं = तपस्यायोग्यं, साधयितुं = कर्त्तुं, यः किल ऋषिः = कण्वः इच्छति = समीहते, ध्रुवं = नूनं, सः = ऋषिः, नीलमुत्पलं—नीलोत्पलं, नीलोत्पलस्य पत्राणां धारया—नीलोत्पलपत्रधारया = नीलकमलपलाशाग्रभागेन, शम्येव लता—तां—शमीलतां—सक्तुफलावृक्षं [ कण्टकितकठोरत्वचं —] छेत्तुं,—व्यवस्यति = समीहते,

'शमीलता'मित्यत्र रूपकोपमयोः सन्देहसङ्करः, शमी लतेव, शम्येव वा लतेत्यत्र साधकबाधकप्रमाणाभावात् ।

[शमीलतासादृश्योद्भावनादभिप्रायनामकञ्च नाटकलक्षणमुपन्यस्तम्,—"अभिप्रायस्तु सादृश्यादद्भुतार्थस्य कल्पने"ति साहित्यदर्पणोक्तेः ॥१८॥

भवतु, पादपान्तरित एव विश्वस्तां तावदेनां पश्यामि। (इति तथा करोति)।

**शकुन्तला**—हला अनसूये! अतिपिनद्धेन वल्कलेन प्रियम्वदया दृढं पीडितास्मि, तत् शिथिलय तावदेनत्।

[हला अणसूए! अतिपिणद्धेण वक्कलेण पिअम्वदाए दढं पीडिदह्मि, सिढिलेहि दावं णं]

[अनसूया—शिथिलयति।]

**प्रियम्वदा**—(सहासम्—) अत्र तावत् पयोधरविस्तारहेतुकमात्मनो यौवनारम्भमुपालभस्व, मां किमुपालभसे?।

[एत्थ दाव पओहरवित्थारहेदुअं अत्तणो जोव्वणारम्भं उवालह, मं किं उवालहसि?]

**राजा**—सम्यगियमाह—

---

पादैरन्तरितः—पादपान्तरितः = वृक्षपंक्तिव्यवहितः, विश्वस्तां = निःशङ्कां, तावत् = कात्स्न्येन, एनां = शकुन्तलां, पश्यामि = निर्वर्णयामि इति = इत्युक्त्वा, तथा करोति = निभृतं पश्यति।

अतितरां पिनद्धेन—अतिपिनद्धेन = दृढं बद्धेन, वल्कलेन = वृक्षत्वग्वस्त्रेण, दृढं = भृशं, पीडिताऽस्मि = बाधिताऽस्मि, शिथिलय = शिथिलं कुरु,

हासेन सहितं—सहासं = सोपहासं, जगादेति शेषः। पयोधरयं विस्तारे [हेतुरेव—] हेतुकस्तं—पयोधरविस्तारहेतुकं = स्तनाभोगवर्द्धनं आत्मनः = स्वस्य, यौवनस्यारम्भस्तं—यौवनारम्भं = यौवनोद्भेदम्, उपालभस्व = तस्मै कुप्य, माम् = प्रियवदां, किमुपालभसे? = निन्दसि?

सम्यक् = सत्यम्, इयं = प्रियम्वदा,

इदमुपहितसूक्ष्मग्रन्थिना स्कन्धदेशे
स्तनयुगपरिणाहाच्छादिना वल्कलेन ।
वपुरभिनवमस्याः पुष्यति स्वां न शोभां
कुसुममिव पिनद्धं पाण्डुपत्रोदरेण ॥१९॥

अथ वा काममननुरूपमस्या वपुषो वल्कलं न पुनरलङ्कारश्रियं न पुष्यति । कुतः—

सरसिजमनुविद्धं शैवलेनापि रम्यं,
मलिनमपि हिमांशोर्लक्ष्म लक्ष्मीं तनोति ।

इदमिति । स्कन्धदेशे = अंसप्रदेशे, उपहितः = दत्तः, सूक्ष्मः = तनुतरो—ग्रन्थिः = बन्धनं यस्य तेन, स्तनयोः = वक्षोजयोः, परिणाहम् = आभोगम्, अच्छादयति = पिधत्ते तच्छीलेन, बल्कलेन = वल्ककञ्चुकेन, अस्याः = शकुन्तलायाः, इदम् = चारुतरम्, अभिनवम् = अपूर्वम्, वपुः = शरीरम्,—पाण्डूनां = परिणामपाण्डुराणां, पत्राणां = तरुदलानाम्, उदरेण = अभ्यन्तरेण तलभागेन, पिनद्धं = संसक्तं, कुसुममिव = प्रसूनमिव,—स्वाम् = आत्मीयां स्वभावजां, शोभां = छविं, न पुष्यति = न बिभर्त्तितमाम्,

कुसुमस्य जरठपत्राच्छादितस्येव शकुन्तलावपुषः शोभां वल्कलमिदं पिधत्ते, तदियं न वल्कलयोग्येत्याशयः । उपमालङ्कारः ॥१९॥

अथ वा = किं वा, कामम् = अत्यन्तम्, अस्या वपुषः = शरीरस्य, अननुरूपम् = असदृशम्, अयोग्यमपि, वल्कलं=वृक्षत्वग्वस्त्रं—अलङ्कारस्य= भूषणस्य, श्रियं = शोभां, न पुष्यति = न लभते इति, न पुनः = नैवं, किन्तु लभत एव, नञ्द्वयेन प्रकृतार्थदार्ढ्यबोधनात्, कुतः ? = कस्मादेतत् ? 'उच्यते' इति शेषः । तत्स्वयमेवाह—

सरसिजमिति । शैवलेन[1] = शैवालेन—अनुविद्धं = संसक्तमपि,

[1] "जलनीली तु शैवालं शैवल" मित्यमरः ।

इयमधिकमनोज्ञा वल्कलेनापि तन्वी,
किमिव हि मधुराणां मण्डनं नाकृतीनाम् ? ॥२०॥

अपि च—

कठिनमपि मृगाक्ष्या वल्कलं कान्तरूपं
न मनसि रुचिभङ्गं स्वल्पमप्यादधाति ।
विकचसरसिजायाः स्तोकनिर्म्मुक्तकण्ठं,
निजमिव कमलिन्याः कर्कशं वृन्तजालम् ॥२१॥

सरसिजं = कमलम्, रम्यं = मनोहारि, 'भवति', मलिनमपि=मलीमसमपि लक्ष्म = कलङ्कः, हिमांशोः = चन्द्रस्य, लक्ष्मीं = शोभाम्, [एव–] तनोति = पुष्णाति, वल्कलेनापि = वल्केनापि, इयं तन्वी = कृशतराङ्गयष्टिरियं शकुन्तला, अधिकं = कामं, मनोज्ञा = मनोहारिणी, यतः–मधुराणां = रम्याणाम् आकृतीनां = रुचिरसंस्थानानां, वस्तूनां, किमिव = किं तत् ? यत्, मण्डनं भूषणं, न = न भवति ?, सर्वमपि रम्याणां श्रियमेव पुष्णाति, कण्ठे विषमिव नीलकण्ठस्य, अतः—कलङ्केन चन्द्रस्येव, शैवालेन कमलस्येव वाऽस्या वल्कले शोभैवेत्याशयः । अर्थान्तरन्यासः ॥२०॥

कठिनमपीति । मृगस्येवाक्षिणी यस्यास्तस्याः–मृगाक्ष्याः = चपलायतलोचनायाः, कठिनमपि = कठोरमपि, तद्वपुषोऽनर्हमपि, अतिशयेन कान्तं कान्तरूपं = कमनीयं, कान्ताङ्गसंस्पर्शवशात्कान्ततमम्, वल्कलं, विकचानि सरसिजानि यस्याः सा—तस्याः = उत्फुल्लकमलायाः, स्तोकम्—अल्पं निर्मुक्तः—त्यक्तः, 'कण्ठो येन तत्, स्तोकनिर्मुक्तकण्ठं = कण्ठादधोऽधःप्रसृतं कमलिन्याः=पद्मलतायाः निजं = स्वकीयं, कर्कशं = कठोरं, वृन्तजालमिव प्रसवबन्धनपटलमिव, मनसि=स्वान्ते, स्वल्पमपि = किञ्चिदपि, रुचेः कान्तेः, भङ्गं = विच्छेदं, नादधाति = न कुरुते ।

१ "कण्ठो गले सन्निधाने ध्वनौ मदनपादप" इति मेदिनी ।

**शकुन्तला**—( अग्रतोऽवलोक्य— ) सख्यौ ! एष वातेरितपल्लवाङ्गुलीकः किमपि व्याहरतीव मां चूतवृक्षः, तद्यावदेनं सम्भावयामि । ( इति तथा करोति ) ।

[ सहीओ ! एस वादेरिदपल्लवाङ्गुलीहिं किम्पि वाहरेदि विअ मं चूअरुक्खओ । ता जाव णं सम्भावेमि ]

**प्रियम्वदा**—हला शकुन्तले ! इहैव मुहूर्त्तकं तिष्ठ ।

[ हला सउन्तले ! इध ज्जेव मुहुत्तअं चिट्ठ ]

**शकुन्तला**—किंनिमित्तम् ? ।

[ किंणिमित्तं ? ]

**प्रियम्वदा**—त्वया समीपस्थितया लतासनाथ इवायं चूतवृक्षः प्रतिभाति ।

[ तए समीवट्ठिदाए लदासणाधो विअ अअं चूअरुक्खओ पड़िहादि ] ।

---

[ आगलमाप्रपदं बद्धस्य वल्कलस्य—कठिनेन कमलिनीवृन्तजालेन—साम्यादुपमालङ्कारः, "प्रसिद्धिर्लोकसिद्धार्थैरुत्कृष्टैरर्थसाधन" मित्युक्तं प्रसिद्धिर्नाटकलक्षणं सूचितं श्लोकद्वयेन ] ॥२१॥

वातेन = पवनेनेरिताः चञ्चलाः पल्लवा एवाङ्गुल्यस्ताभिः, व्याहरतीव = कथयतीव, आह्वयतीवेत्यर्थः । चूतवृक्षकः = आम्रतरुपोतः, सम्भावयामि = पश्यामि, [ अनुभवामि, जलं सिञ्चामि वा, ] तथा करोति = जलसेचनं नाटयति, विलोकयति वा ।

इहैव = आम्रबालपादपसन्निधावेव, किं निमित्तम् = किमर्थम्, त्वया = शकुन्तलया, समीपे = निकटे, स्थितया = व्यवस्थितया, लतया सनाथः = वल्लीपरिवृतः—इव, चूतवृक्षकः = रसालबालपादपः, प्रतिभाति = ज्ञायते,

**शकुन्तला**—अत एव त्वं प्रियम्वदेति भण्यसे ।
[ अदो ज्जेव तुमं पिअम्वदत्ति भणीअसि ]

**राजा**—अवितथमाह प्रियम्वदा । तथा ह्यस्याः—

अधरः किसलयरागः, कोमलविटपानुकारिणी बाहू ।
कुसुममिव लोभनीयं यौवनमङ्गेषु सन्नद्धम् ॥२२॥

**अनसूया**—हला शकुन्तले ! इयं स्वयम्वरवधूः सहकारस्य त्वया कृतनामधेया वनतोषिणीति नवमालिका; एनां विस्मृतासि ?

[हला सउन्तले ! इअं सअम्वरबहु सहआरस्स तुए किदणामहेआ वनदोसिणी त्ति णोमालिआ; णं विसुमरिदासि ? । ]

---

अत एव = मधुरभाषितया, प्रियम्वदतीति प्रियम्वदा, भण्यसे = गीयसे, अन्वर्थं नाम भवत्या इत्यर्थः । अवितथं = सत्यं, तथा = यथा प्रियम्वदोक्तं तथा, अस्याः = शकुन्तलायाः—

**अधर इति** । अधरः = अधरोष्ठः, किसलयस्येव = पल्लवस्येव रागो = लौहित्यं यस्य तथाभूतः, कोमलं विटपमनुकुरुतस्तच्छीलौ—कोमलविटपानुकारिणौ = मृदुलशाखानुकारिणौ, बाहू = भुजौ, कुसुममिव=पुष्पमिव—लोभनीयं = हृदयावर्जकं, यौवनं= तारुण्यम्, अङ्गेषु = अवयवेषु, सन्नद्धम् = सर्वतोभावेन प्रकटितम्, स्थितं वा । एवञ्चास्या लतासादृश्यं युज्यत एवेत्याशयः । [उपमाऽलङ्कारः, "सञ्चयोऽर्थानुरूपो यः स पदानां पदोच्चयः" इति दर्पणोक्त्या पदोच्चयो नाम नाटकलक्षणञ्च ज्ञेयम्] ॥२२॥

"हण्डे ! हञ्जे हलाह्वाने नीचां चेटीं सखीं प्रती"त्यमरः ।

सहकारस्य = आम्रपादपस्य, स्वयं वृणीते इति स्वयम्वरा, सा चासौ वधूश्च-स्वयम्वरवधूः = स्वयमेव कृताश्लेषा, त्वया कृतं नामधेयं यस्याः सा त्वयैव वनतोषिणीति कृतनामसंस्कारा, नवमालिका = लताप्रभेदः, "सप्तला नवमालिके"ति कोशः । [ नवमालिका = 'सेवती गुलाब' ] विस्मृता = विस्मृतवती ।

शकुन्तला—तत आत्मानमपि विस्मरिष्यामि । ( लतामुपेत्य, अवलोक्य च—) हला ! रमणीयः खलु कालोऽस्य पादपमिथुनस्य रतिकरः संवृत्तः, येन नवकुसुमयौवना नवमालिका, अयमपि बहुफलतया उपभोगक्षमः सहकारः । (इति पश्यन्ती तिष्ठति ।)

[ तदो अत्ताणम्पि विसुमरिस्सं । हला ! रमणीओ क्खु कालो इमस्स पादवमिहुणस्स रदिअरो संवुत्तो । जेण णवकुसुमजोव्वणा णोमालिआ, अअं पि बहुफलदाए उअभोअक्खमो सहआरो । ]

प्रियम्वदा—( सस्मितम्- ) अनसूए ! जानासि किं निमित्तं शकुन्तला वनतोषिणीमतिमात्रं प्रेक्षत इति ? ।

[ अणसूए ! जाणासि किंणिमित्तं सउन्तला वणदोसिणीं अदिमेत्तं पेक्खदि त्ति ? । ]

अनसूया—न खलु विभावयामि, तत्कथय मे ।

[ ण क्खु विभावेमि, ता कधेहि मे । ]

प्रियम्वदा—यथा वनतोषिणी-अनुरूपेण पादपेन सङ्गता,

---

तदा = यदीमां विस्मरामि तर्हि, आत्मानमपि = स्वशरीरमपि, स्वप्राणसमेयमित्याशयः । "अथ पतिम्वरा, स्वयम्वरा च वर्या चे"त्यमरः ।

रमणीयः = मनोहरः, कालः = ग्रीष्मसमयः, पादपमिथुनस्य = नवमालिका-सहकारयोः, रतिं करोति तच्छीलः = आनन्दप्रदः, संवृत्तः = जातः, येन = यतः, नवानि—कुसुमान्येव-यौवनं यस्याः सा = नवकुसुमसम्पत्ति-तारुण्या, नवमालिका = पाटलाऽऽख्या लता, ( सेवती गुलाब ) । बहूनि फलानि यस्य तस्य भावस्तया = फलभरनम्रतया, उपभोगस्य = संभोगस्य, क्षमः = योग्यः, सेवनाऽर्हः, सम्भोगसमर्थश्चेति । सहकारः = आम्रभेदः, "सहकारोऽतिसौरभ" इत्यमरः, नायिकापक्षे-कुसुमम्—आर्त्तवं ।

किंनिमित्तम् ? = कुतः, अतिमात्रं = बहुकालं, प्रेक्षते = निरीक्षते । विभावयामि = वेद्मि ।

वनतोषिणी—वनज्योत्स्नेति वा नवमालिकानामधेयम्, रूपमनुगतोऽनु-

तथा-अहमपि आत्मनोऽनुरूपं वरं लभेय-इति ।

[ जह वणदोसिणो अणुरूवेण पादवेण सङ्गदा, तह अहम्पि अत्त
अणुरूवं वरं लहेअं त्ति । ]

**शकुन्तला**—एष ते आत्मनश्चित्तगतो मनोरथः । (इ
कलसमावर्जयति । )

[ एस दे अत्तणो चित्तगदो मणोरहो । ]

**अनसूया**—हला शकुन्तले ! इयं तातकण्वेन त्व
स्वहस्तेन संवर्द्धिता माधवीलता, तत्कथमिमां विस्मृतासि ? ।

[ हला शउन्तले ! इअं तादकण्णेण तुमं विअ सहत्थेण सम्व
माहवीलदा, ता कधं इमं विसुमरिदासि ? ]

**शकुन्तला**—तत आत्मानमपि विस्मरिष्या
(लतामुपेत्यावलोक्य च सहर्षम्-) आश्चर्य्यम् ! आश्चर्य्यम् !, प्रियम्व
प्रियं ते निवेदयामि ।

[ तदो अत्ताणस्मि विसुमरिस्सं, अच्चरीअं अच्चरीअं, पिअम्वदे !
दे णिवेदेमि । ]

**प्रियम्वदा**—सखि ! किं मे प्रियम् ।

[ सहि ! किं मे पिअं ? ] ।

---

रूपः, [यद्वा-रूपस्य योग्यमनुरूपं,] तेन=स्वयोग्येन, पादपेन=सहकारत
सङ्गता = मिलिता, अहमपि=शकुन्तलाऽपि, अनुरूपं = रूपस्य योग्य
अनुरूपं=स्वसदृशं, वरं = भर्त्तारं, लभेय = प्राप्नुयाम् ।

चित्ते=स्वान्ते, गतः = स्थितः, मनोरथः = अभिलाषः, त्वमेवेत्थ
लप्स्यसि, नाहमित्याशयः । आवर्जयति = जलसेकायाधोमुखं नम
माधवी = वासन्ती, "वासन्ती माधवीलते"त्यमरः । लतां=वासन्तीम्,

शकुन्तला—असमये खल्वेषा आ मूलान्मुकुलिता अत्र माधवीलता ।

[ असमए क्खु एसा आमूलादो मुउलिदा माहवीलदा । ]

उभे—(सत्वरमुपगम्य-) सखि ! सत्यं सत्यम् ? ।

[ सहि ! सच्चं सच्चं ? ]

शकुन्तला—सत्यं, किं न प्रेक्षेथे ।

[ सच्चं किं ण पेक्खध । ]

प्रियम्वदा—( सहर्षं निरूप्य- ) सखि ! तेन हि प्रतिप्रियं निवेदयामि ।

[ सहि ! तेण हि पड़िप्पिअं दे णिवेदेमि । ]

शकुन्तला—किं मे प्रतिप्रियम् ?। [ किं मे पड़िप्पिअं ? ]

प्रियम्वदा—आसन्नपाणिग्रहणासि त्वम् ।

[ आसण्णपाणिग्गहणासि तुमं । ]

शकुन्तला—( सासूयमिव- ) एष ते आत्मनश्चित्तगतो मनोरथः, तन्न ते वचनं श्रोष्यामि ।

[ एस दे अत्तणो चित्तगदो मणोरहो, ता ण दे वअणं सुणिस्सं । ]

---

= गत्वा, असमये = पुष्पोद्गमायोग्येऽपि ग्रीष्मकाले, मुकुलाः संजाता अ-स्याः सा—मुकुलिता=जातमुकुलोद्भेदा, वसन्ते हि वासन्ती पुष्पयति । "मूलं बुध्नोऽङ्घ्रिनामक"इत्यमरः । "कुड्मलो मुकुलोऽस्त्रिया"मित्यमरः । प्रति-कृतं प्रियं = प्रतिप्रियम् । प्रियस्वदायाः प्रियं निर्दिशन्त्याः शकुन्तलाया अपि प्रियं = शुभमित्यर्थः ।

आसन्नं = समुपस्थितं, पाणिग्रहणं = विवाहो-यस्याः सा—आसन्नपाणि-ग्रहणा, = उपस्थितविवाहमङ्गला, विवाहस्तेऽचिरेणैव भवेदिति, असूयया सहितं यथा स्यात्तथा,—सासूयं=प्रियम्वदायाः शकुनज्ञतामधिक्षिपन्तीव, ...यन्तीव वा, श्रोष्यामि = श्रद्दधे, "असूया दोषारोपो गुणेष्वपी—"

**प्रियम्वदा**—सखि ! न खलु ते परिहासेन भणामि, श्रुतं मया तातकण्वस्य मुखात्—तव कल्याणसूचकमेतन्निमित्तमिति ।

[ सहि ! ण क्खु परिहासेण भणामि, सुदं मए तादकण्णस्स मुहादो तुह कल्लाणसूअअं एदं णिमित्तं त्ति । ]

**अनसूया**—हला प्रियम्वदे ! अत एव सस्नेहा शकुन्तला माधवीलतां सिञ्चति ।

[ हला पिअम्वदे ! अदो ज्जेव ससिणेहा सउन्तला माहवीलदां सिञ्चदि ]

**शकुन्तला**—यतो भगिनी मे भवति, ततः किमिति न सिञ्चामि । ( इति कलसमावर्जयति । )

[ जदो बहिणी मे भोदि, तदो किं त्ति ण सिञ्चेमि । ]

**राजा**—अपि नाम कुलपतेरियमसवर्णक्षेत्रसम्भवा भवेत् ? । अथवा कृतं सन्देहेन—

---

त्यमरः । परिहासेन = उपहासेन, तातकण्वस्य = पितुः कण्वस्य, "तातोऽनुकम्प्ये पितरीति" हैमः । पालकत्वात्पितृसादृश्यात् 'तात' इत्युक्तम् । इदं निमित्तं = शकुनमिदं, माधव्या अकालकुसुमोद्गमरूपं, कल्याणस्य = शुभस्य त्वत्पाणिग्रहणात्मकस्य, सूचकं = परिचायकम् ।

अत एव = स्वविवाहसूचकत्वादेव, स्नेहेन = प्रेम्णा, सहिता—सस्नेहा,- भगिनी = भगिनीसमा, ततः = तस्मात्, किमिति न = कुतो न, अवश्यमेवेति यावत् ।

["राजा—कथमियं सा कण्वदुहिते" त्यारभ्य "कलसमावर्जयती" त्यन्तं विलोभनं नाम नाटकलक्षणमुपक्षिप्तं, तल्लक्षणं—"गुणानां वर्णनं तज्ज्ञै विलोभनमितीरितम्"—इति ।]

अपि नाम = किं नु ? कुलपतेः = कण्वस्य, असवर्णे=स्वजात्यतिरिक्ते, क्षेत्रे = कलत्रे सम्भवः = उत्पत्तिर्यस्याः सा, सन्देहेन = संशयेन, कृतम्= अलम् । "कृतं युगेऽलमर्थे स्या" दिति मेदिनी । अग्रिमश्लोकेन वाक्यमेतत् सम्बध्यते,—

असंशयं क्षत्रपरिग्रहक्षमा,
यदार्य्यमस्यामभिलाषि मे मनः ।
सतां हि सन्देहपदेषु वस्तुषु
प्रमाणमन्तःकरणप्रवृत्तयः ॥२३॥

तथापि तत्त्वत एवैनामुपलप्स्ये ।

**शकुन्तला**—(ससम्भ्रमम्) अम्मो ! सलिलसेकसम्भ्रमोद्गतो

---

असंशयमिति । किन्तु इयम्–असंशयं=निस्संशयं, क्षत्रेण=क्षत्रियेण, परिग्रहः = स्वीकारः[1] = तस्य क्षमा = योग्या,–यत् = यस्मात् , मे = मम महाकुलीनस्य, आर्यं=पवित्रं, मनः=स्वान्तम् , अभिलषति=एनामिच्छति,–

तदेव सङ्गमयति—सतामिति । हि = यतः, सतां = सत्कुलप्रसूतानामार्याणाम् , "आर्यः साधौ सौविदल्ल" इति विश्वः । सन्देहस्य=संशयस्य, पदेषु[2]=स्थानेषु–वस्तुषु=विषयेषु, अन्तःकरणस्य=चित्तस्य, प्रवृत्तयः=वृत्तयः, प्रमाणम् = निश्चयहेतुः । अन्तःकरणपरिणामविशेषो—वृत्तिः । [अर्थान्तरन्यासः । शकुन्तलाऽनुरागरूपकाव्यार्थस्य निश्चयेनोपपत्तेः परिन्यासनामकमङ्गं निर्दिष्टं, तदुक्तं विश्वनाथेन—"तन्निष्पत्तिः परिन्यास"–इति] ॥२३॥

तथापि = युक्तिभिरन्तःकरणप्रवर्त्तनैश्च मत्परिग्रहक्षमेयमिति निर्धारणे कृतेऽपि—तत्त्वतः = याथार्थ्येन, एव, एनां = शकुन्तलाम् , उपलप्स्ये = ज्ञास्यामि, यदियं मत्परिग्रहयोग्या, न वेति ।

ससम्भ्रमम् , संभ्रमः साध्वसेऽपि स्यात्संवेगादरयोरिति मेदिनी । अम्मो! अत्याहितम् , "विस्मये दुःसहे अम्मो ? नित्यं स्त्रीभिः प्रयुज्यते" इति

---

१. "परिग्रहः परिजने पत्न्यां स्वीकारमूलयो" रिति विश्वः ।
२. "पदं व्यवसितत्राणस्थानलक्ष्मांघ्रिवस्तुष्वित्यमरः ।

नवमालिकामुज्झित्वा वदनं मे मधुकरोऽभिवर्त्तते । ( इति भ्रमरबाधां नाटयति । )

[ अम्मो ! सलिअसेअसम्भवुग्गदो णोमालिणं उज्झिअ वअणं मे महुअरो अहिवट्टदि । ]

**राजा**—( सस्पृहं विलोक्य- ) साधु ! बाधनमपि रमणीय-मस्याः,—

यतो यतः षट्चरणोऽभिवर्त्तते
ततस्ततः प्रेरितवामलोचना ।
विवर्त्तितभ्रूरियमद्य शिक्षते
भयादकामापि हि दृष्टिविभ्रमम् ॥२४॥

---

भरतः । सलिलस्य = जलस्य, यः सेकः = अभिषेकः, तेन—सम्भ्रमेण = सहसा, उद्गतः = उत्पतन्, उज्झित्वा = परित्यज्य, मे = मम, वदनं = मुखम्, अधि = प्रति, मधुकरः = भ्रमरः, वर्त्तते = समागच्छति, [ अनुवर्त्तते इति वा—प्रतिवर्त्तत इत्यस्यार्थः । ] इति = इत्युक्त्वा, भ्रमरस्य बाधां = भ्रमराक्रमणपीडां, नाटयति = अभिनयति [ नाटकशालास्थितान् तथा दर्शयति । ] ।

स्पृहया सहितं यथा स्यात्तथा—सस्पृहं = साभिलाषम्, अस्याः बाधनमपि = पीडाऽपि, साधु = कामं, रमणीयं = मनोहारि, ।

रमणीयतामेवोपन्यस्यति—यत इति । हि = यतः, यतो-यतः = यस्यां यस्यां दिशि, सप्तम्यर्थे सार्वविभक्तिकः तसिल्, परे तु यतो-यतः = यं यं प्रदेशं, द्वितीयार्थे तसिल्, अभियोगे द्वितीया, षट्—चरणा यस्यासौ-षट्चरणः = भ्रमरः, अभिवर्त्तते = अनुधावते, ततस्ततः = तत्र-तत्र, प्रेरिते = प्रक्षिप्ते वामे = सुन्दरे, लोचने = नेत्रे—यया सा, विवर्त्तिता = तिर्यगुन्नमिता भ्रूः = भ्रुकुटिर्यया सा, इयं = शकुन्तला, अद्य = इदानीम्, नास्ति कामः

अपि च—( सासूयमिव— )

चलापाङ्गां दृष्टिं स्पृशसि बहुशो वेपथुमतीं,
रहस्याख्यायीव स्वनसि मृदु कर्णान्तिकचरः।
करं व्याधुन्वत्याः पिबसि रतिसर्वस्वमधरं,
वयं तत्त्वान्वेषान्मधुकर ! हतास्त्वं खलु कृती ॥२५॥

---

अभिलाषो यस्याः सा—अपि, अनिच्छयाऽपि दृष्टेर्विभ्रमं = विवर्त्तनं, [कटाक्ष-निक्षेपकलाम्,] शिक्षते = अभ्यस्यति।

सकामत्वरूपकारणाभावेऽपि कार्यस्य शिक्षणस्य सत्त्वाद्विभावनाऽलङ्कारः। उत्प्रेक्षा च, तदनयोः संसृष्टिः ॥२४॥

सासूयमिव = सोपालम्भमिव। चलापाङ्गामिति। चलोऽपाङ्गो यस्याः सा तां, = चञ्चललोचनान्तां, "अपाङ्गौ नेत्रयोरन्तौ" इत्यमरः, वेपथुरस्त्यस्याः सा तां—वेपथुमतीं = भयतरलितां, दृष्टिं = नयनं, बहुशः= अतिवेलं, स्पृशसि =चुम्बसि, कर्णस्यान्तिके चरति तच्छीलः—कर्णाऽन्तिक-चरः = कर्णाभ्यर्णे भ्रमन्, रहस्यमाख्यातुं शीलमस्य स इव, मृदु = मधुरं, स्वनसि = ध्वनसि। अन्योऽपि कामी कामिन्याः कर्णयोर्मृदु किमपि ध्वनत्येव।

करौ = हस्तपल्लवौ, व्याधुवन्त्याः = कम्पयन्त्याः, रतेः सर्वस्वं—रति-सर्वस्वं = संप्रयोगमूर्धाभिषिक्तम्, अधरम् = ओष्ठम्, पिबसि = रसयसि, अन्योऽपि कामुकः कान्ताधरबिम्बमनुभवतीति कामिसाम्यम्। अतः—हे मधु-कर !=भ्रमर ! त्वं खलु = निश्चयेन, कृती=भाग्यशाली, ईदृशमुग्धारतेः सर्वाभि-लपणीयाया अनायासेन लाभात्, वयं=वयन्तु—सकलकलासौभाग्यशालिनः कमनीयाकृतयोऽपि,—तत्त्वान्वेषात् = वास्तववृत्तान्तजिज्ञासया [किमियं क्षत्रिययोग्या न वेत्यादि तत्त्वं गवेषयन्तः] हताः = वञ्चिताः, त्वं कृतार्थो नाहमित्युपमानाधिक्यकथनाद्व्यतिरेकालङ्कारः।

नीलोत्पलादिभ्रान्त्या भ्रमरस्यानुवर्त्तनाद्भ्रान्तिमानलङ्कारोऽपि, 'स्वभा-

अपि च—

लोलां दृष्टिमितस्ततो वितनुते सभ्रूलताविभ्रमा-
ऽऽभुग्नेन विवर्त्तिता बलिमता मध्येन कम्रस्तनी ॥
हस्ताग्रं विधुनोति पल्लवनिभं शीत्कारभिन्नाधरा,
जातेयं भ्रमराभिलङ्घनभिया वाद्यैर्विना नर्त्तकी ॥२६॥

शकुन्तला—हला ! परित्रायेथां परित्रायेथां मामने दुष्टमधुकरेणाभिभूयमानाम् ।

[ हला ! परित्ताअध परित्ताअध मं इमिणा दुट्ठमहुअरेण अहिहूअमाणं

वोक्तिः,' 'त्वं कृती'त्यत्र चरणत्रयं हेतुरिति 'काव्यलिङ्गं', समासोक्ति श्रुत्यनुप्रास इत्येवमलङ्कारा गवेषणीयाः, साधारणच्छात्रायासकारकत्वा ते तन्यन्तेऽस्माभिः ॥२५॥

लोलामिति। इयं = शकुन्तला, भ्रुवौ लते इव,—भ्रूलते, तयोर्विभ्रमेण विक्षेपणविशेषेण सह वर्त्तमानां, लोलां = तरलां, दृष्टिं = चक्षुः, इतस्ततः वितनुते = क्षिपति । आभुग्नेन = भयादीषत् कुटिलेन, वलिमता = त्रिव शालिना, विवर्त्तता = भ्राम्यता, मध्येन = मध्यभागेन उपलक्षिता, अत ए कम्रौ = मनोहरौ स्तनौ यस्याः सा। 'विवर्त्तिता' इति पाठे भ्रमणाकलितेत्यर्थ

पल्लवस्य निभं—पल्लवनिभं = किसलयाकारं, हस्ताग्रं = कराग्रभा विधुनोति=कम्पयति, शीत्कारेण भिन्नो—युतोऽधरो यस्याः सा-शीत्कारभि धरा = शीत्कारकारिणी, सती, भ्रमरेण यदभिलङ्घनं = समाक्रमणं, तस्मा स्तया, वाद्यैः = मृदङ्गादिभिर्विनैव, नर्तकी = नर्तनशीला, जाता = निष्प नर्त्तक्यपि,—लोलां दृष्टिं, इतस्तो विवर्त्तमानं मध्यं, हस्तचालनञ्च धत्ते इ युक्तमुक्तम्। चतुर्थचरणार्थे पादत्रयार्थस्य हेतुत्वात्काव्यलिङ्गम्। "भ्रूलता पल्लवनिभपदयोरुपमा,अत्रान्येप्यलङ्काराः सन्ति, ते तद्रसिकैराकलनीयाः॥

अनेन = मामनुसरता, दुष्टेन = पापिना, मधुकरेण = भ्रमरेण, अ -भूयमानां = पीड्यमानां, परित्रायेथां = युवां रक्षतम् ।

उभे—( सस्मितम्- ) के आवां परित्राणे ?, अत्र तावत् दुष्यन्तमाक्रन्द; यतो राजरक्षितानि तपोवनानि ।

[ का अह्मो परित्ताणे ? एत्थ दाव दुस्सन्दं अक्कन्द, जदो राअरक्खिदाइं तवोवणाइं ]। Fine

राजा—अवसरः खल्वयमस्माकमात्मानं दर्शयितुम् , न भेतव्यं! न भेतव्यम्! ( इत्यर्द्धोक्ते स्वगतम्- ) एवं हि राजाहमस्मीति परिज्ञानं भविष्यति, भवतु, अतिथिसमाचारमेवावलम्बिष्ये ।

शकुन्तला—नैष दुर्विनीतो विरमति, तदन्यतो गमिष्यामि । ( पदान्तरे-सदृष्टिक्षेपम् -) हा धिक्! हा धिक्! कथमितोऽपि मामनुसरति, तत् परित्रायेथां माम् ।

[ ण एसो दुव्विणीदो विरमदि, ता अण्णदो गमिस्सं । हद्धी ! हद्धी ! कधं इदो वि मं अणुसरदि, ता परित्ताअध मं । ]

---

सस्मितमिति । मनाक् पीडितां प्रेक्ष्य स्मितं, आक्रन्द = आह्वय । "आक्रन्दः क्रन्दनाह्वान" इति मेदिनी । स्वगतमिति । "अश्राव्यं खलु यद्वस्तु तदिह स्वगतं मत"मिति-विश्वनाथः । आत्मानं दर्शयितुम् = आत्मनः प्रकटनस्य, प्रकाशम् = उच्चैः, उक्तस्य-अर्धम्-अर्धोक्तं, तस्मिन् अर्धोक्ते = किञ्चिदुक्त्वा ।

एवं = 'दुष्यन्तमाक्रन्दे' त्युक्तिं श्रुत्वा मया यदि प्रतिवचो दीयेत,—राजाऽहं = दुष्यन्तोऽहमिति, परिज्ञातं = ज्ञातम् , अतिथेः समाचारः=व्यवहारस्तम्, अवलम्बिष्ये = चोरादिभये समुपस्थिते समासन्नोऽतिथिर्यथा परित्रातुं धावति, तथैवाहं करोमि—इत्याशयः ।

दुर्विनीतः = धृष्टः, एष = भ्रमरः, अन्यतः = अन्यत्र, पदान्तरे = किञ्चिद् गत्वा, सदृष्टिक्षेपं = तिर्यक् लोचनं क्षिपन्ती, इतः = अत्रापि ।

राजा—( सत्वरमुपगम्य- ) आः !—

कः पौरवे वसुमतीं शासति शासितरि दुर्विनीतानाम् ।
अयमाचरत्यविनयं मुग्धासु तपस्विकन्यासु ॥२७॥

( सर्वा राजानं दृष्ट्वा किञ्चिदिव सम्भ्रान्ताः ) ।

सख्यौ—आर्य्य ! न किमपि अत्याहितम्, किन्तु इयं खलु प्रियसखी दुष्टमधुकरेण आकुलीक्रियमाणा कातरीभूता ।

( इति शकुन्तलां दर्शयतः ) ।

[ अज्ज ! ण किम्पि अच्चाहिदं, किण्णु क्खु इअं पिअसहि दुट्ठमहुअरेण आउलीकिअमाणा कादरीभूदा । ]

राजा—( शकुन्तलामुपेत्य- ) अयि ! तपो वर्द्धते ? ।

( शकुन्तला-ससाध्वसावनतमुखी तिष्ठति । )

---

त्वरया सहितं-सत्वरम् = आशु, उपगम्य=समीपं गत्वा, आः ! इति क्रोधेऽव्ययम्, 'आ'स्तु स्यात्कोपपीडयो"रित्यमरः ।

क इति । दुर्विनीतानां = धृष्टानां-दुष्टानां, शासतरि = शासके [शिक्षयितरि] पुरोरपत्यं—पौरवः, अथवा रूणां राजा पौरवः,—तस्मिन् पौरवे = पुरुवंश्ये दुष्यन्ते, वसुमतीं = भूमिं, शासति = पालयति सति मुग्धासु = सरलासु, तपस्विनां=मुनीनां, = कन्यासु = कुमारीषु, कोऽयं= कोऽसौ ? योऽत्र, अविनयं = धाष्ट्यंम्, आचरति = समाचरति। ["अप्रस्तुतप्रशंसा" छेकवृत्त्यनुप्रासौ, अनेन "दण्डस्त्वविनयादीनां दृष्ट्या श्रुत्या च तर्जन"मिति रसार्णवोक्तं दण्डनामकं मुखसन्ध्यङ्गं च दर्शितम्] ॥२७॥

किञ्चिदिव = स्तोकं, सम्भ्रान्ताः = चकिताः, अत्याहितं=महद् भयम्, "अत्याहितं महाभीति"रित्यमरः । आकुलीक्रियमाणा = बाध्यमाना, कातरीभूता = त्रस्ता, तपो वर्द्धते ? = धर्मानुष्ठानं वृक्षसेचनादिकं निर्विघ्नं भवति? ससाध्वसा, = सभया, अत एव अवनतं मुखं यस्याः सा—अवनतमुखी =

**अनसूया**—इदानीमतिथिविशेषलाभेन ।

[ दाणिं अदिधिविसेसलाहेण । ]

**प्रियम्वदा**—स्वागतमार्य्यस्य ?, हला शकुन्तले ! गच्छ, उटजात् फलमिश्रमर्घ्यभाजनमुपहर, इदमपि पादोदकं भविष्यति ।

( –इति घटं दर्शयति । )

[ साअदं अज्जस्स ?। हला सउन्तले ! गच्छ, उढआदो फलमिस्सं अग्घभाअणं उवहर, इदम्पि पाओदअं भविस्सदि । ]

**राजा**—भवतीनां सूनृतयैव वाचा कृतमातिथ्यम् ।

**अनसूया**—अस्यां तावत् प्रच्छायशीतलायां सप्तपर्णवेदिकायामुपविश्य आर्य्यः परिश्रमसपनयतु ।

[ इमस्सिं दाव पच्छाअसीदलाए सत्तवण्णवेदिआए उवविसिअ अज्जो परिस्समं अवणेदु । ]

---

अधोमुखी। इदानीं=सम्प्रति, अतिथेर्विशेषस्तस्य लाभेन=भवादृशातिथिलाभेन "तपो वर्द्धते" इति शेषः। [एतेनानुवृत्तिनामा नाटकालङ्कारो दर्शितः। तल्लक्षणं रसार्णवे—"प्रश्रयादनुवर्त्तनम्,–अनुवृत्ति"रिति।] उटजात् = पर्णशालायाः, "मुनीनान्तु पर्णशालोटजोऽस्त्रियां" मित्यमरः। फलैर्मिश्रं = सफलम्, अर्घ्यस्य भाजनं = अर्घ्यपात्रम्, उपहर = उपनय, प्रयच्छेति यावत् । इदमपि = घटस्थमपि, पादयोरुदकं—पादोदकं, = पादप्रक्षालनजलं, सूनृतया = मधुर-प्रियया," सूनृतं प्रिये" इत्यमरः, [अतिथये इदम्-] आतिथ्यम् = अतिथिसत्कारः ।

प्रकृष्टा छाया यस्यां सा,—प्रच्छाया, प्रच्छाया च सा शीतला च तस्यां–प्रच्छायशीतलायां = प्रकृष्टच्छायाशालिन्यामत एव शीतलायां, सप्त पर्णस्य = विषमच्छदस्य, वेदिकायां = प्रस्तरखण्डनिबद्धभुवि, "सप्तपर्णो विशालत्वक् शारदो विषमच्छदः", "स्याद्वितर्दिस्तु वेदिका" इत्यमरः । परिश्रमम् = अध्वक्लान्तिम् ।

**राजा**—नूनं यूयमप्यनेन धर्म्मकर्म्मणा परिश्रान्ताः तन्मुहूर्त्तमुपविशत ।

**प्रियम्वदा**—( जनान्तिकम्— ) हला शकुन्तले ! उचि नोऽतिथिपर्य्युपासनम्, तदेहि, उपविशामः । ( इति स उपविशन्ति । )

[ हला सउन्तले ! उइदं णो अदिधिपज्जुवासणं, ता एहि उवविसह्म ।

**शकुन्तला**—( आत्मगतम्— ) कथमिदं जनं प्रेक्ष्य तपो विरोधिनो[1] विकारस्य गमनीयास्मि संवृत्ता ।

[कधं इमं जणं पेक्खिअ तवोविरोहिणो विआरस्स गमणीआह्मि संवुत्त

**राजा**—( सर्वा अवलोक्य— ) अहो ! समानवयोरूपर णीयं सौहार्दमत्र भवतीनाम् ।

---

अनेन = जलसेचनरूपेण, धर्मोत्पादकं कर्म—धर्मकर्म, (मध्यमप लोपी समासः ।) तेन=धर्मवर्द्धकेन व्यापारेण, तत्=तस्मात, मुहूर्त्तं=क्षण मात्रम्, जनान्तिकम् = अन्यानपवार्य केवलं शकुन्तलाया एव कर्णे जगादे शेषः, तदुक्तं धनिकेन—"त्रिपताककरेणान्यानपवार्याऽन्तरा कथाम्, अन्य न्यामन्त्रणं यत्स्याज्जनान्ते तज्जनान्तिकम्,—"इति । "स एव त्रिपता स्याद्वक्रितानामिकाऽङ्गुलिः"—इति रत्नाकरे । अतिथिपर्युपासनम् अतिथिसत्कारः, तद्वचनरक्षणमिति यावत्, एहि = आगच्छ, आत्मग मिति । प्रियम्वदादीनश्रावयन्ती स्वयमेवाहेत्यर्थः ।

तपोवनस्य विरोधी, तस्य = शान्ततपोवनाननुरूपस्य, विकारस्य चित्तावस्थाविशेषस्य, कामोद्रेकस्येति यावत्, 'तपोविरोधिन' इति तु यु पाठः । गमनीया = विषया, संवृत्ता = जाता, अनेन भावो नामाङ्ग विकारो दर्शितः—"निर्विकारात्मके चित्ते भावः प्रथमविक्रिये"ति विश्व नाथः, सर्वाः = शकुन्तलाद्यास्तिस्रोऽपि, समानेन = सदृशेण, रूपेण वय

---

१ 'तपोवनविरोधिन' इति पाठान्तरम् ।

**प्रियम्वदा**—( जनान्तिकम्— ) हला अनसूये ! को नु खलु एष दुरवगाहगम्भीराकृतिर्मधुरमालपन् प्रभुत्वदाक्षिण्यं विस्तारयति ।

[ हला अणसूए ! को णु क्खु एसो दुरवगाहगम्भीराकिदी महुरं आलवन्तो पहुत्तदाक्खिणं वित्थारेदि । ]

**अनसूया**—हला ! ममाप्यस्ति कौतूहलम्, तत् प्रक्ष्यामि तावदेनम् । ( प्रकाशम्— ) आर्य्यस्य मधुरालापजनितो विश्रम्भो मामालपयति, कतरो राजर्षिवंश अलंक्रियते आर्य्येण ?, कतमो वा देशो विरहपर्य्युत्सुकः क्रियते ?, किं निमित्तं वा आर्य्येण सुकुमारेण तपोवनगमनपरिश्रमे आत्मा उपनीतः ? ।

[ हला ! मम वि अत्थि कोदूहलं, ता पुच्छिस्सं दाव णं । अज्जस्स महुरालावजणिदो वीसम्भो मं आलावेदि । कदरो राएसिवंशो अलंकरीअदि अज्जेण ? कदमो वा देसो विरहपज्जुस्सुओ करीअदि ? किं णिमित्तं वा अज्जेण सुउमारेण तवोवणगमणपरिस्समे अप्पा उवणीदोत्ति ? ]

---

च रमणीयं = मनोज्ञं, अत्र भवतीनां = पूज्यानां भवतीनाम्, "पूज्ये तत्रभवानत्रभवा"नित्यमरः । सुहृदो भावः सौहार्दं = सख्यम् ।

जनान्तिकम् = दुष्यन्तमश्रावयन्ती—आह । दुरवगाहा = दुर्बोधा, अत एव गम्भीरा = गभीरा, आकृतिः = मुखमुद्रा यस्यासौ, मधुरं = सरसम्, आलपन् = वार्तालापं कुर्वन्, प्रभुत्वञ्च = प्रभावञ्च, दाक्षिण्यञ्च = चातुर्यञ्च—प्रभुत्व-दाक्षिण्यं, विस्तारयति=प्रकटयति । स्वाधिकारं चातुर्येण प्रकटयतीत्यर्थः । कौतूहलं = कौतुकं ।

प्रकाशम् = प्रकटं, "सर्वंश्राव्यं प्रकाशं स्यात्"—इति विश्वनाथः । आर्यस्य = भवतः, मधुरेण = रमणीयेन, आलापेन = भाषणेन, जनितः = विश्रम्भः = विश्वासः, आलापयति—संभाषणं कारयति । विरहेण=पर्युत्सुकः = उत्कण्ठाकुलः, सुकुमारेण = कोमलगात्रेण, तपोवने यद्गमनं, तत्र यः

**शकुन्तला**—( आत्मगतम्— ) हृदय ! मा उत्ताम्य, यत्त्वया चिन्तितम्, तदनसूया मन्त्रयति ।

[ हिअअ ! मा उत्तम्म, जं तुए चिन्तिदं, तं अणसूआ मन्तेदि । ]

**राजा**—( स्वगतम्— ) कथमिदानीमात्मानं निवेदयामि, कथं वात्मनः परिहारं करोमि, भवतु, एवं तावत्, ( प्रकाशम्— ) भवति ! वेदविदस्मि राज्ञः पौरवस्य नगरधर्म्माधिकारे नियुक्तः, पुण्याश्रमदर्शनप्रसङ्गेन धर्म्मारण्यमिदमायातः ।

**अनसूया**—अद्य सनाथा धर्म्मचारिणः ।

---

परिश्रमस्तत्र = ईदृशे आयासे, आत्मा उपनीतः = शरीरं योजितं, केन हेतुना भवानत्रायात इति प्रश्नाशयः ।

मा उत्ताम्य = मा आकुलीभूः, मन्त्रयति = पृच्छति । परिहारं=निगूहनं, भवतु = अस्तु, एवं तावत् = इत्थं कथयामि, श्लेषेण ब्राह्मणमात्मानं निर्दिशामि, प्रकाशं = प्रकटं, वेदवित् = विद्वान्, क्षत्रियो ब्राह्मणश्च भवतीति स्वजातिर्गूहिता, पौरवस्य = ( पूरूणां देशविशेषाणां राज्ञः-पौरवस्य ) दुष्यन्तस्य, नगरधर्माधिकारे = नगरधर्माधिकरणे [ प्रधानन्यायालयाध्यक्षपदे वा, राज्ये वा ] नियुक्तः = अधिकृतः, ब्राह्मणोऽपि धर्माधिकारी भवति, राजापि-धर्मसंरक्षणे प्रजापतिनैव नियुक्तः, अनेन वाक्येन विप्रोऽयं नगरधर्माधिकारी, राजा वायमिति न स्फुटम् इत्थं श्लेषेणात्मप्रकटनं, गोपनञ्च कृतम् ।

धर्मवर्धकमरण्यं = धर्मारण्यं, तस्य दर्शनं, तस्य प्रसङ्गेन = पुण्याश्रमदर्शनार्थम् ।

इदञ्च पताकास्थानम्—तदुक्तं विश्वनाथेन—"द्व्यर्थो वचनविन्यासः, सुश्लिष्टः काव्ययोजितः । प्रधानार्थान्तराक्षेपी पताकास्थानकं परम्"—इति

सनाथाः = अनुगृहीताः, शृङ्गारलज्जां = भ्रूभङ्गादिना साकूतं कामचेष्टां,

[ अज्ज सणाधा धम्मआरिणो । ]

( शकुन्तला— शृङ्गारलज्जां नाटयति — )

**सख्यौ**—( उभयोराकारं विदित्वा— ) हला शकुन्तले ! यदि अद्य तात इह सन्निहितो भवेत् ।

[ हला सउन्तले ! जइ अज्ज तादो इध सण्णिहिदो भवे । ]

**शकुन्तला**—ततः किं भवेत् ? ।

[ तदो किं भवे ? ]

**सख्यौ**—ततो जीवितसर्वस्वेनापि इममतिथिविशेषं कृतार्थं करोति ।

[ तदो जीविदसव्वस्सेण वि इमं अदिधिविसेसं कदत्थं करेदि । ]

**शकुन्तला**—( सकृतककोपम्— ) अपेतं, युवां किमपि हृदये कृत्वा मन्त्रयथः, न वां वचनं श्रोष्यामि ।

[ अवेध तुह्मे किंम्पि हिअए कदुअ मन्तेध, ण वो वअणं सुणिस्सं । ]

---

सव्रीडं नाटयति = अभिनयति । तदनेन हावो नाम नायिकाऽङ्गजोऽलङ्कारो दर्शितः. तदुक्तं "भ्रूनेत्रादिविकारैस्तु सम्भोगेच्छाप्रकाशकः, भाव एवाल्पसंलक्ष्यविकारो हाव उच्यते इति" ॥

उभयोः = शकुन्तला–दुष्यन्तयोः, आकारं = मुखाकृतिं, विदित्वा = आकारेणोभयोरनुरागं ज्ञात्वा, इह = आश्रमे, संनिहितः = उपस्थितः, जीवितस्य = प्रणानामपि, सर्वस्वेन = शकुन्तलाख्येन, अतिथिविशेषं = विशिष्टमतिथिं—वरमित्यर्थः, कृतोऽर्थो यस्य तं = सफलाभिलाषं ।

जीवितसर्वस्वपदेन शकुन्तलाभिहितेति—"सहसैवाऽर्थसम्पत्तिर्नायकस्योपकारिका । पताकास्थानकं सन्धौ प्रथमं तत्प्रकीर्तित"मिति—भरतोक्तं पताकास्थानकमेतत् ।

कृतकेन=कृत्रिमेण,कोपेन = क्रोधेन—सह यथा स्यात्तथा, जगादेत्यर्थः, अपेतं = गच्छतं, किमपि = मद्विषयं ।

**राजा**—वयमपि भवत्योः सखीगतं किञ्चित् पृच्छामः ।

**सख्यौ**—आर्य्य ! अनुग्रहेऽपि अभ्यर्थना ? ।

[ अज्ज अणुग्गहे वि अब्भत्थणा ? ]

**राजा**—तत्र भवान् कण्वः शाश्वते ब्रह्मणि वर्त्तते, इयञ्च व: सखी तस्यात्मजा, कथमेतत् ? ।

**अनसूया**—शृणोत्वार्य्यः, अस्ति कोऽपि 'कौशिक' इति गोत्रनामधेयो महाप्रभावो राजर्षिः ।

[ सुणादु अज्जो, अत्थि को वि कोसिओ त्ति गोत्तणामहेओ महाप्पहावो राएसी । ]

**राजा**—स खलु भगवान् कौशिकः ।

**अनसूया**—तं सख्याः प्रभवमवगच्छ, उज्झितायाः शरीर संवर्द्धनादिभिः पुनस्तातकण्वोऽपि एतस्याः पिता ।

[ तं सहीए पहवं अवगच्छ ! उज्झिदाए सरीरसम्बड्ढणादिहिं उ तादकण्णो वि एदाए पिदा । ]

---

सखीगतं = शकुन्तलाविषयकं, अनुग्रहे = कृपाप्रदर्शनेऽपि, अभ्यर्थना = प्रार्थना ! एवञ्च प्रश्नोऽयमनुग्रहतुल्य इति कामं पृच्छन्तु भवन्त इति सूचितं, तत्रभवान् = पूज्यपादः, शाश्वते ब्रह्मणि = अखण्डिते ब्रह्मचर्ये गोत्रनाम = वंशनाम, यथा—गार्ग्यः, वात्स्य इति, कुशिकस्यापत्यं—कौशिकः, महान् प्रभावो यस्यासौ = महातपाः, राजसु ऋषिः, = क्षत्रियश्रेष्ठ विश्वामित्रः, ।

भगवान् कौशिकः—खलु = जगति-प्रसिद्धः, प्रभवं = जन्महेतुं, "प्रभवो जलमूले स्याज्जन्महेता"विति मेदिनी । उज्झितायाः=परित्यक्तायाः एतस्याः = शकुन्तलायाः सम्वर्धनं = पालनं, ।

राजा—उज्झितशब्देन जनितं नः कुतूहलम्, तदाऽऽमूला-च्छ्रोतुमिच्छामः ।

अनसूया—शृणोतु आर्यः, पुरा किल तस्य राजर्षेरुग्रे तपसि वर्त्तमानस्य कथमपि जातशङ्कैर्देवैर्मेनका नाम अप्सरा नियमविघ्नकारिणी प्रेषिता ।

[ सुणादु अज्जो, पुरा किल तस्स राएसिणो उग्गे तवसि वत्तमाणस्स कधम्पि जादसङ्केहिं देवेहिं मेणआ णाम अच्छरा णिअमविग्घआरिणी पेसिदा] ।

राजा—अस्त्येवान्यसमाधिभीरुत्वं देवानाम्, ततस्ततः ?

अनसूया—ततो वसन्तावतारसमणीये समये उन्मादहेतुकं तस्या रूपं प्रेक्ष्य—( इत्यर्द्धोक्ते लज्जां नाटयति- ) ।

[ तदो वसन्तावदाररमणीए समए उन्मादहेदुअं ताए रूवं पेक्खिअ । ]

राजा—पुरस्तादवगम्यत एव सर्वथा अप्सरःसम्भवैषा ।

अनसूया—अथ किम् ।

[ अधइं । ]

---

उज्झितशब्देन = परित्यक्तेति कथनेन, आ मूलात् = प्रथमतः, जाता-शङ्का येषान्तैः = शङ्काकुलैः, [ अस्मद्राज्यं ग्रहीष्यतीत्याशङ्का देवानां ] नियमस्य = तपसः, विघ्नं करोति तच्छीला-विघ्नकारिणी ।

अन्येषां—समाधेः = तपसः, ततस्ततः = अग्रे, वसन्तस्य = वसन्तर्त्तोः अवतारेण = आविर्भावेण, रमणीये = सुन्दरे, समये = काले, उन्मादस्य = चित्तविकृतेः, हेतुकं = हेतुभूतम्, तस्याः = मेनकायाः, रूपं = सौन्दर्यम्, इति=इत्येतावन्मात्रेण, अर्धोक्तेन = मध्ये एव विच्छिन्नेन वाक्येन, लज्जां-नाटयति = लज्जिताऽभूत्, अग्रेऽस्यार्थस्याश्लीलप्रायत्वात् ।

पुरस्तात् = अग्रे, अवगम्यते = ज्ञायतेः, अप्सरः संम्भवा=अप्सरोजाता, 'अथ किम्'—इति स्वीकृतिसूचनाय नाटके प्रयुज्यते । एवमेतदित्यर्थः । उप-पद्यते = युक्त्याऽप्यवगम्यते ।

राजा—उपपद्यते—

मानुषीभ्यः कथं नु स्यादस्य रूपस्य सम्भवः ।
न प्रभातरलं ज्योतिरुदेति वसुधातलात् ॥२८॥

( शकुन्तला सव्रीडाधोमुखी तिष्ठति )

राजा— (आत्मगतम्—) हन्त ! लब्धावकाशो मे मनोरथः।

प्रियम्वदा—(सस्मितं शकुन्तलां विलोक्य—) पुनरपि वक्तुकाम इव आर्य्यो लक्ष्यते ।

[ पुणा वि वत्तुकामो विअ अज्जो लक्खीअदि । ]

---

मानुषीभ्य इति । अस्य रूपस्य = शकुन्तलासौन्दर्यस्य, मानुषीभ्यः कथं नु सम्भवः ? = नोद्भवोऽस्य सम्भवति । प्रभया = मयूखमण्डलेन तरलम् = उज्ज्वलं, "तरलश्चञ्चले पिङ्गे हारमध्यमणावपि, भासुरेऽपी"ति विश्वः । ज्योतिः = चन्द्रादि, वसुधातलात् = भूमण्डलात्, नोदेति = नाविर्भवति ।

[श्रुतिवृत्त्यनुप्रासौ, प्रतिवस्तूपमा च । 'निदर्शनं' च नाटकभूषणं,— "यत्रार्थानां प्रसिद्धानां क्रियते परिकीर्तनं, परपक्षव्युदासार्थं तन्निदर्शनमुच्यत "इति तल्लक्षणं—दर्पणे, विलोभनं नाम मुखसन्ध्यङ्गञ्च" "गुणाख्यानं विलोभन" मिति दर्पणात्] ॥ २८ ॥

सव्रीडा = सलज्जा, स्वप्रशंसया स्ववृत्तान्तेन च । लब्धः = प्राप्तः अवकाशः = अवसरः, मनोरथः = हृदयाभिलाषः । फलिष्यतीत्यर्थः। [युक्तिर्नाम सन्ध्यङ्गमेतत्—"सम्प्रधाणमर्थानां युक्ति"रिति—साहित्यदर्पणम् तत्र—संप्रधारणं = निश्चयः ] ।

सस्मितं शकुन्तलां विलोक्य = जातस्ते मनोरथ इति साकूतं विलोक्य, नायकः = दुष्यन्तः । लक्ष्यत इति । स्वविवक्षितं निश्शङ्कमाख्याहि

( शकुन्तला—सखीमङ्गुल्या तर्जयति । )

राजा—सम्यगुपलक्षितं भवत्या, अस्ति नः सच्चरित-श्रवणलोभादन्यदपि प्रष्टव्यम् ।

प्रियम्वदा—तेन हि अलं विचारितेन, अनियन्त्रणानुयोगः खलु तपस्विजनः ।

[ तेण हि अलं विआरिदेण, अणिजन्तणाणुजोओ क्खु तवस्सिजणो ].

राजा—एतत् पृच्छामि—

वैखानसं किमनया व्रतमाप्रदानात्
व्यापाररोधि मदनस्य निषेवितव्यम् ? ।
अत्यन्तमेव सदृशेक्षणवल्लभाभि-
राहो निवत्स्यति समं हरिणाङ्गनाभिः ? ॥२९॥

---

त्याशयः । तर्जयति = ताडयति, माऽनल्पं जल्पेति सङ्केतं करोति—इति वा । सम्यक् = सत्यम्, उपलक्षितं = ज्ञातं, सत् च, तच्चरितञ्च तस्मिन् लोभः, तस्मात्, = पुण्यप्रदोपाख्यानश्रवणलोभात् । अन्यदपि = अवशिष्टं किञ्चित्, अलं विचारितेन=विचारेणालम्, न प्रयोजनमित्याशयः । अनियन्त्रणो अनुयोगो यस्मिन्नसौ—अनियन्त्रणानुयोगः = निःशङ्कप्रश्नयोग्यः,

**वैखानसमिति** । अनया = शकुन्तलया, मदनस्य = स्मरस्य, व्यापारं रुणद्धि तच्छीलं—व्यापाररोधि = प्रसरावरोधकं, वैखानसानामिदं—वैखानसं, व्रतं = तापसव्रतं—ब्रह्मचर्यम्, आ प्रदानात् = विवाहावधि, किं निषेवितव्यं ? = किम्—आचरणीयं ?, आहो ? = अथवा,—"आहो उताहो किमुत विकल्प" इत्यमरः । सदृशैरीक्षणैर्वल्लभाभिः—सदृशेक्षणवल्लभाभिः = एतल्लोचनसादृश्यात्—हृदयवल्लभाभिः, हरिणाङ्गनाभिः = हरिणीभिः, समं = साकम्, अत्यन्तमेव = आजीवनमेव, निवत्स्यति = वासं करिष्यति ?"

प्रियंवदा—आर्य्य ! धर्म्माचरणपरवश एष जनः, गुरोः पुनरस्या अनुरूपवरप्रदाने सङ्कल्पः ।

[ अज्ज ! धम्माअरणपरवसो एस जणो, गुरुणो उण से अणुरूअवरप्पदाणे संकप्पो ]

राजा—( सहर्षमात्मगतम् )—

भव हृदय! साभिलाषं सम्प्रति सन्देहनिर्णयो जातः।
आशङ्कसे यदग्निं तदिदं स्पर्शक्षमं रत्नम् ॥ ३० ॥

---

विवाहावधि ब्रह्मचर्यमस्याः? उत जीवनावधिकं नैष्ठिकं ब्रह्मचर्यमित्याशयः। [ वृत्त्यनुप्रासः ] ॥ २९ ॥

धर्माचरणे = किंकरणीयमित्यादिनिर्णये, परवशः = पितुरधीनः, स एवोचितं विधास्यति, पुनः, = परन्तु—गुरोः = कण्वस्य, अस्याः—अनुरूपाय = सदृशाय, वराय = पत्ये, प्रदाने = समर्पणे, सङ्कल्पः = अभिलाषः, [ अनेनोत्तरेण दुष्यन्तस्य मद्योग्येयमिति निर्णयादुत्तरालङ्कारः, तथा च विश्वनाथः- "उत्तरं,-प्रश्नस्योत्तरादुन्नयो यदि"—इति । ] एवञ्चाप्रदानाद् ब्रह्मचर्यमस्या इत्युत्तराशयः । [ "राजा—वयमपि सखीगतं किञ्चित्पृच्छामः"—इत्यत आरभ्यात्मगत"मित्यन्तं युक्तिर्नामाङ्गं," सम्प्रधारणमर्थानां युक्ति" रिति तल्लक्षणम् । ]

भवेति । हृदय ! =हे मनः ! सम्प्रति = इदानीं, शकुन्तलायां—साभिलाषं = प्राप्त्याशासमन्वितं, सन्देहस्य = किमियं मद्योग्या, ? नवेति संशयस्य, निर्णयः = निश्चयः, यत् = यद् वस्तु, अग्निम् = पावकम्, आशङ्कसे = चिन्तितवदसि, तदिदं = शकुन्तलाख्यं वस्तु, स्पर्शस्य क्षमं-स्पर्शक्षमं = ग्रहणार्हं, रत्नं, नेयं ब्राह्मणबालिका, किन्तु—अप्सरःसम्भवा मदुपसङ्ग्रहणार्हेति भावः । [ उत्तरार्धे पूर्वार्धवाक्यार्थो हेतुरिति काव्यलिङ्गं, वृत्त्यनुप्रासश्च, समाधानञ्च मुखसन्ध्यङ्गम्- "बीजस्यागमनं यच्च तत्समाधानमुच्यते" इति दर्पणे, ] ॥ ३० ॥

**शकुन्तला**—(सरोषमिव—) अनसूये! अहं गमिष्यामि।

[ अणसूए ! अहं गमिस्सं ]

**अनसूया**—किंनिमित्तम् ?।

[ किंणिमित्तं ? ]

**शकुन्तला**—इमामसम्बद्धप्रलापिनीं प्रियम्वदामार्य्यायै गोतम्यै गत्वा निवेदयिष्यामि। (इत्युत्तिष्ठति)।

[इमं असम्बद्धप्पलाविणिं प्रियंवदं अज्जाए गोदमीए गदुअ णिवेदइस्सं]

**अनसूया**—सखि ! न युक्तमाश्रमवासिनो जनस्य अकृतसत्कारमतिथिविशेषमुज्झित्वा स्वच्छन्दतो गमनम्।

[ सहि ! ण जुत्तं अस्समवासिणो जणस्स अकिदसक्कारं अदिधिविसेसं उज्झिअ सच्छन्ददो गमणं ]

(**शकुन्तला**—उत्तरमदत्त्वैव प्रस्थिता )।

**राजा**—(स्वगतम्—) कथमियं गच्छति। (जिघृक्षुरिव-पुनरिच्छां निगृह्य—) अहो ! चेष्टानुरूपिणी कामिजनचित्तवृत्तिः, अहं हि—

---

सरोषं = सक्रोधं, असंबद्धं प्रलपितुं शीलं यस्यास्ताम् = असङ्गतार्थभाषणप्रवणां, आर्यायै = पूज्यायै, निवेदयिष्यामि = कथयिष्यामि। न कृतः सत्कारो यस्य तम् = अकृतपूजनम्, अतिथिविशेषम्—ईदृशं महाप्रभावमतिथिम्, उज्झित्वा = अपहाय, स्वच्छन्दतः = स्वेच्छया, [उपदेशो नाम नाट्यालङ्कारः, "शिक्षा स्यादुपदेशन" मिति ]। जिघृक्षुः—ग्रहीतुमिच्छुः, इच्छां = ग्रहणेच्छां, निगृह्य = निरुध्य।

कामिनां जनानां, मनसः = चित्तस्य, वृत्तिः = वर्त्तनं, चेष्टाम्—अनुरूपयति तच्छीला, = चेष्टासदृशी, [ कायव्यापारसदृशी, गमनागमनादिकशरीरव्यापारानुरूपैव मनोवृत्तिरित्याशयः ]।

अनुयास्यन् मुनितनयां सहसा विनयेन वारितप्रसरः।
स्वस्थानादचलन्नपि गत्वेव पुनः प्रतिनिवृत्तः ॥३१॥

प्रियम्वदा—(शकुन्तलामुपेत्य—) हला चण्डि ! नार्हसि गन्तुम्।

[ हला चण्डि ! णारिहसि गन्तुम् ]

शकुन्तला—(परिवृत्य, सभ्रूभङ्गम्—) किमिति ?।

[ किं त्ति ?। ]

प्रियम्वदा—द्वे मे वृक्षसेचनके धारयसि, ताभ्यां तावदात्मानं मोचय; ततो गमिष्यसि। (इति बलान्निवर्त्तयति।)

[ दुवे मे रुक्खसेअणके धारेसि, तेहि दाव अत्ताणं मोआवेहि, तदो गमिस्ससि।]

---

अनुयास्यन्निति। अहं हि–मुनितनयां = शकुन्तलाम्, अनुयास्यन् = तां ग्रहीतुं जिगमिषन्, सहसा = झटिति, विनयेन = धैर्येण, वारितः प्रसरो यस्यासौ = अवरुद्धवेगः, "प्रसरः प्रणये वेगे" इति विश्वः। स्वस्थानात् = स्वप्रदेशात्, अचलन्नपि = अगच्छन्नपि, गत्वा पुनः प्रतिनिवृत्त इव = गत्वा पुनरागत इव जातः, एवञ्च गमनरूपा, प्रतिनिवृत्तिरूपा च चेष्टा कायस्य, तथापि मनसा कृतं गतागतमपि शरीरकृतमिवानुभवामि, शरीरसादादिना, अतो युक्तमुक्तं–चेष्टाऽनुरूपा कामिचित्तवृत्तिरिति। शरीरेण गतमागतञ्चाचरन् फलाफलाभ्यां हर्षविषादौ यथाऽनुभवति, तथैव मनसा तथाऽऽचरन्नहं निष्फलायासात्खेदमनुभवामीत्याशयः। [ विरोधाभासः, काव्यलिङ्गम्, वृत्तिश्रुत्यनुप्रासौ, परिभावना नाम मुखसन्ध्यङ्गं,–"कुतूहलोत्तरा वाचो विज्ञेया परिभावना" इति विश्वनाथः। ] ॥ ३१ ॥

हला चण्डि ! = अयि कोपने !, परिवृत्य = अभिमुखीभूय, भ्रुवो भङ्गेन सहितं–सभ्रूभङ्गं = भ्रुकुटिं बध्वा, किमिति = कुत एतत् ?, वृक्षाः सिच्यन्ते

राजा—भद्रे! वृक्षसेचनादेवात्र भवतीं परिश्रान्तां तर्कयामि। तथा ह्यस्याः—

स्रस्तांसावतिमात्रलोहिततलौ बाहू घटोत्क्षेपणा
दद्यापि स्तनवेपथुं जनयति श्वासः प्रमाणाधिकः।
बद्धं कर्णशिरीषरोधि वदने घर्माम्भसां जालकं
बन्धे स्रंसिनि चैकहस्तयमिताः पर्य्याकुला मूर्धजाः ॥३२॥

आभ्यां–ते–वृक्षसेचनके = वृक्षसेचनकघटौ, वारद्वयं वृक्षसेचनमिति तु युक्तं, वृक्षद्वयसेचनमिदानीमप्यवशिष्यत इति वाशयः।

निवर्त्तयति = प्रत्यानयति। भद्रे! = सुशीले! अत्रभवतीं = माननीयां शकुन्तलां, तर्कयामि = अवगच्छामि,

स्रस्तांशाविति। घटस्योत्क्षेपणात् = उत्थापनात्,–स्रस्तौ = शिथिलौ, अंसौ = स्कन्धौ, ययोस्तौ, अतिमात्रं लोहितस्तलो ययोस्तौ = अतितरां लोहितकरतलौ, बाहू = भुजौ, अद्याऽपि = इदानीमपि-वर्त्तेते। घटोत्क्षेपणादेव—प्रमाणेनाधिकः–प्रमाणाधिकः = भृशमायतः, श्वासः = उच्छ्वासः, अद्यापि–स्तनयोर्वेपथुं = कम्पं, जनयति = करोति, घटोत्क्षेपणादेव–अद्यापि–वदने = मुखे, कर्णभूषणं शिरीषं–कर्णशिरीषं, तद्रोद्धुं शीलमस्य–कर्णशिरीषरोधि = कर्णाभरणशिरीषकुसुमरोधकं, घर्मस्याम्भसां = स्वेदवारिकणानां, जालमेव जालकं = बिन्दुकदम्बकं, बद्ध=संसक्तं। स्वेदजलेन कर्णशिरीषं गण्डस्थल आसक्तं सत्तथा न तरलितं भवतीति–स्वेदोदकस्य कुसुमरोधकता स्फुटा। घटोत्क्षेपणादेव च–बन्धे स्रंसिनि = प्रशिथिले केशबन्धे सति, एकेनहस्तेन = पाणिना, यमिताः = धृताः, अत एव अद्यापि पर्याकुलाः = विसंस्थुला, विपर्यस्ता इति यावत्। मूर्धजाः = चिकुराः, सन्तीति शेषः।

[ श्रान्तजनवर्णनात्स्वभावोक्तिः, स्तनकम्पात्प्रमाणाधिकश्वासानुमानादनुमानश्चालङ्कारः, बन्धस्रंसनात्पर्याकुला इति–काव्यलिङ्गञ्च, अनुप्रासश्च।

५

तदहमेनामनृणां करोमि । ( इत्यङ्गुलीयकं ददाति । )

(सख्यौ—प्रतिगृह्य, नामाक्षराणि वाचयित्वा च परस्परमवलोकयतः।

राजा—अलमन्यथा सम्भावनया, राज्ञः प्रतिग्रहोऽयम् ।

प्रियम्वदा—तेन हि नार्हति इदमङ्गुलीयकमङ्गुलीवियोगम् । आर्य्यस्य वचनादेवानृणैषा भवतु ।

[ तेण हि णारिहदि एदं अङ्गुलीअअं अङ्गुलीविओअं । अज्जस्स वअणाद् ज्जेव अणिणा एसा भोदु । ]

अनसूया—हला शकुन्तले ! मोचितासि अनुकम्पि

---

"देशकालस्वरूपेण वर्णना दृष्टमुच्यते" इति दर्पणोक्तेर्दृष्टं भूषणमत्र ज्ञे "चण्डि !" इत्यारभ्य "ददाती"त्यन्तेन करणं नाम मुखसन्ध्यङ्ग "क पुनः-प्रकृतार्थसमारम्भः" इति दर्पणोक्तेः ] ॥ ३२ ॥

तत् = परिश्रान्ततया, एनां = शकुन्तलाम्, अनृणां = प्रतिवस्तुदा ऋणमुक्तां, करोमि = कारयामि, अङ्गुलीयकं = मुद्रिकां,

नामस्वरूपाणि मुद्राक्षराणि-नाममुद्राक्षराणि = "दुष्यन्तः" इ मुद्रोल्लिखितनामाक्षराणि, । अन्यथा = राजा दुष्यन्तोऽयम्, इति, सम वनया = शङ्कया, अलं = न प्रयोजनं, ब्राह्मण एवाहमित्याशयः । राज्ञः दुष्यन्तस्य परिग्रहः = प्रसादः, अङ्गुलीयकमेतद्राज्ञा मह्यं दत्तम्, अधिक -चिह्नस्वरूपम्, अतो न शङ्का कार्या ।

"राज्ञः = मम दुष्यन्तस्य, परिग्रहः = भवत्यै उपहारः" इत्यप्यर्थो -न राज्ञो मिथ्याभाषणदोषः ।

तेन = अधिकारचिह्नतया, अङ्गुल्या वियोगं = पार्थक्यं, वचनादि आन्तेयमित्युक्त्या परित्याज्येति ध्वननात् । अनुकम्पाऽस्त्यस्यासौ ते कृपापरेण, "कृपा दयाऽनुकम्पा स्या"दित्यमरः ।

राजर्षिणेति । अङ्गुलीयकादिप्रत्यभिज्ञानाद् दुष्यन्तोऽयं राजर्षि

आर्य्येण, अथ वा राजर्षिणा, तत्कुत्रेदानीं गमिष्यसि।

[ हला सउन्तले ! मोआविदासि अणुकम्पिणा अज्जेण अहवा राए-सिणा। ता कहिं दाणिं गमिस्ससि ]

शकुन्तला—(आत्मगतम्—) नैतं जनं पर्य्यहरिष्यं यद्यात्मनः प्राभविष्यम्।

[ ण एदं जणं परिहरिस्सं, जइ अत्तणो पहविस्सं ]

प्रियम्वदा—किमिदानीं न गम्यते ?।

[ किं दाणिं ण गच्छीअदि ? ]

शकुन्तला—इदानीं किं तव आयत्तास्मि ? यतो मे रोचते, ततो गमिष्यामि।

[ दाणिं किं तुह आअत्तह्मि। जदो मे रोअदि, तदो गमिस्सं ]

राजा—(शकुन्तलां विलोकयन्नात्मगतम्—) किं खलु यथा वयमस्यामियमप्यस्मान् प्रति तथा स्यात् ? अथ वा लब्धावकाशा मे मनोवृत्तिः,—

---

निश्चितमित्याशयः। कुत्रेदानीं गमिष्यसि = यत्र ते गमनस्येच्छा तत्र यथेष्टं गम्यतामित्याशयः। अथ वा—इत्थं कृतोपकारं परित्यज्य क्व गच्छसीत्युपालम्भो बोध्यः। जनं = दुष्यन्तम्, अत्यक्षम्, लङो रूपम्। प्राभविष्यम् = परतन्त्रा नाऽभविष्यम्, 'उद्भेदो'नाम मुखसन्धेरङ्गम्—"बीजार्थस्य प्ररोहः स्यादुद्भेद" इति विश्वनाथोक्तेः। "बीजस्यागमनं यत्तु तत्समाधानम्"इत्युक्तेः'समाधानं नाम मुखसन्ध्यङ्गमिति परे।

तवायत्ता = त्वदधीना, यदा रोचेत = यदा मे समीहा स्यात्। यथा= अनुरक्तः, तथा = प्रणयिनी। लब्धोऽवकाशो यया सा—लब्धावकाशा = लब्धावसरा, जाताश्वासेति यावत्, अस्मास्वनुरक्तेति ज्ञातमस्माभिरित्यर्थः।

कुतः—

वाचं न मिश्रयति यद्यपि मद्वचोभिः,
कर्णं ददात्यवहिता मयि भाषमाणे ।
कामं न तिष्ठति मदाननसम्मुखीयं,
भूयिष्ठमन्यविषया न तु दृष्टिरस्याः ॥३३॥

( नेपथ्ये )

भो भोस्तपस्विनः ! तपोवनसन्निहितसत्त्वरक्षणाय सज्जीभवन्तु भवन्तः, प्रत्यासन्नः किल मृगयाविहारी राजा दुष्यन्तः।

2.XI.60

---

कुतः = कुत एतदवगतमत आह—वाचमिति । यद्यपि—मद्वचोभिः= मद्वाक्यैः सह, वाचं = स्ववाणीं, न मिश्रयति = नानुसन्धत्ते, ( मत्प्रश्नादेरुत्तरं न प्रतिपद्यते, ) नालपतीति यावत् । तथापि—मयि भाषमाणे = कथयति सति, अवहिता = सावधाना, कर्णं ददाति = निभृतं शृणोति, किञ्च-कामं = यद्यपि = मदाननसम्मुखी = मन्मुखसंमुखीना, न तिष्ठति, तु = तथापि, अस्या दृष्टिः = नयनं, भूयिष्ठं = प्रायः, अन्यो विषयो यस्याः सा = मन्मुखातिरिक्तपदार्थविषयिणी, न,

अनेन नायिकालङ्कारो विलासो नाम प्रकटितः—तदुक्तं विश्वनाथेन—"यान-स्थानासनादीनां मुखनेत्रादिकर्मणाम् । विशेषस्तु विलासः स्यात्"—इति । अनुरागेङ्गितं मदनोदये—"विकारो नेत्रवक्त्रस्य तद्वाक्यश्रवणादरः। अन्यव्याजेन तद्वीक्षा—अनुरागेङ्गितं मत" मिति । अनुप्रासः । प्राप्तिर्नाम मुखसन्ध्यङ्गं—"प्राप्तिः सुखागमः"—इति दर्पणात् ॥ ३३ ॥

प्रकृतप्रसङ्गभङ्गाय भेदं मुखसन्ध्यङ्गमवतारयति—नेपथ्य इति। तपोवने सन्निहितानां = पालितानां, सत्त्वानां = जन्तूनां, रक्षणाय = पालनाय, सज्जीभवन्तु = उद्यता भवन्तु । किल = प्रसिद्धं, मृगयया

तुरग-खुर-हतस्तथा हि रेणु-
विटप-विषक्त-जलार्द्र-वल्कलेषु।
पतति परिणतारुणप्रकाशः
शलभसमूह इवाश्रमद्रुमेषु ॥ ३४ ॥

राजा—(स्वगतम्-) अहो धिक्! ममान्वेषिणः सैनिकास्तपोवनमभिरुन्धन्ति।

( पुनः,—नेपथ्ये )

विहर्तुं शीलमस्य—मृगयाविहारी = आखेटरसिकः, प्रत्यासन्नः = निकटवर्त्ती, वन्यसामान्यमृगादिभ्रमेणाश्रममृगा न हताः स्युरिति आश्रमतापसानां घोषणैषा—चूलिकेयं,—"अन्तर्यवनिका संस्थैः सूचनाऽर्थस्य चूलिके"ति दर्पणे लक्षणात्।

राजसान्निध्यमेव दर्शयति = तुरगेति। तुरगाणां = वाजिनां, खुरैः = शफैः, हतः = उत्थापितः, परिणतस्य = अस्ताचलोन्मुखस्य, अरुणस्य सूर्यस्येव प्रकाशो यस्य [अरुणेन सूर्येण प्रकाशो यस्येत्यर्थो वा, सूर्यकिरणसम्भेदाद्रेणुपटलस्यारक्तवर्णता हि सन्ध्यावेलायां भासत एव] रेणुः = धूलिः, विटपेषु विषक्तानि जलार्द्राणि वल्कलानि येषु तेषु = शाखासक्तजलार्द्रवल्कलेषु, आश्रमस्य = तपोवनस्य, द्रुमेषु = वृक्षेषु, शलभानां समूह इव = पतङ्गपंक्तिरिव, पतति, भेदलक्षणन्तु—"भेदं संहतभेदनम्" इति।

[उपमा, वृत्त्यनुप्रासः, 'दुष्यन्तः प्रत्यासन्न'इत्यनुक्त्वा कार्यस्य रेणुपतनस्याभिधानादप्रस्तुतप्रशंसा च ] ॥३४॥

अहो! धिक्! = आः कष्टं, अन्वेषयन्ति तच्छीला-अन्वेषिणः =

१ "अंकेष्वदर्शनीया या वक्तव्यैव च संमता। या च स्याद्वर्षपर्यन्तं कथा दिनद्वयादिजा, अन्या च विस्तरात्सूच्या सार्थोपक्षेपकैर्बुधैः। अर्थोपक्षेपकाः पञ्च विष्कम्भक-प्रवेशकौ, चूलिकाऽङ्कावतारोऽथ स्यादंकमुखमित्यपि"—इति विश्वनाथः।

भो भोस्तपस्विनः ! पर्य्याकुलयन् वृद्ध-स्त्री-कुमारान् एष गजः प्राप्तः—

तीव्राघातादभिमुखतरुस्कन्धभग्नैकदन्तः,
प्रौढाकृष्टव्रततिवलयासञ्जनाज्जातपाशः ।
मूर्त्तो विघ्नस्तपस इव नो भिन्नसारङ्गयूथो,
धर्म्मारण्यं विरुजति गजः स्यन्दनालोकभीतः ॥३५॥

( सर्वाः—श्रुत्वा ससम्भ्रममुत्तिष्ठन्ति । )

राजा—(स्वगतम्–) अहो धिक् ! कथमपराद्धस्तपस्विनामस्मि । भवतु, प्रतिगच्छामि तावत् ।

---

अन्वेष्टारः, अभिरुन्धन्ति = पीडयन्ति । पर्याकुलयन् = त्रासयन्, वृद्धान्, स्त्रियः, कुमारांश्च—वृद्धस्त्रीकुमारान्, प्राप्तः = आगच्छति । गजः=वनगजः ।

तीव्रेति । तीव्रात् = दृढात्, आघातात् = प्रहारात्—मुखमभिगतः—अभिमुखः = सम्मुखो यस्तरुः = वृक्षः, तस्य स्कन्धेन भग्न एकदन्तो यस्यासौ, किञ्च—प्रौढा=दृढा स्थूला चासावाकृष्टा च या व्रततिः, तस्या वलयं, [प्रौढं–दृढमाकृष्टं यद्व्रततिवलयमित्येवं रीत्या प्रौढमिति क्रियाविशेषणं वा] तस्य समासञ्जनं = संसर्गस्तस्मात्,—

जातः–पाशो = बन्धनं यस्यासौ,—किञ्च—नः = अस्माकं, तपसः = धर्माचरणस्य, मूर्त्तो विघ्न इव = मूर्त्तिमान् विघ्न इव,—भिन्नं = भग्नं, सारङ्गाणां = मृगाणां, यूथं = समूहो येनासौ,—स्यन्दनस्य = दुष्यन्तरथस्य, आलोकात् = दर्शनात्, भीतः = त्रस्तः,–गजः = हस्ती, धर्मारण्यं = तापसाश्रमं, विरुजति = व्याकुलयति । [ मूर्त्तो विघ्न इवे" त्युत्प्रेक्षा, अप्रस्तुतप्रशंसा चालङ्कारौ पद्येऽस्मिन् ] ॥ ३५ ॥

अपराद्धः = कृतापराधः, हस्तिनः सम्भ्रमस्तेन = गजत्रासेन । पर्या

सख्यौ—महाभाग ! अनेन हस्तिसम्भ्रमेण पर्य्याकुलाः स्मः, तदनुजानीहि न उटजगमने ।

[ महाभाअ ! इमिणा हत्थिसम्भमेण पज्जाउलाह्म । ता अणुजाणीहि णु उडअगमणे ]

अनसूया—(शकुन्तलां प्रति–) हला शकुन्तले ! पर्य्याकुला आर्य्या गोतमी भविष्यति, तदेहि शीघ्रमेकस्था भवामः ।

[ हला सउन्तले ! पज्जाउला अज्जा गोदमी भविस्सदि, ता एहि सीग्घं एकत्था होह्म । ]

शकुन्तला—(गतिरोधं रूपयित्वा–) हा धिक् हा धिक् ! ऊरुस्तम्भविह्वलास्मि संवृत्ता ।

[ हद्धी हद्धी ! ऊरुत्थम्वविब्भलम्हि संवुत्ता ] ।

राजा—स्वैरं स्वैरं गच्छन्तु भवत्यः, आश्रमबाधा यथा न भवति, तथाहमपि यतिष्ये ।

सख्यौ—महाभाग ! विदितभूयिष्ठोऽसि । साम्प्रतमुपचार-

---

कुलाः = व्याकुलीभूताः, अनुजानीहि = अनुमतिं देहि, उटजे = पर्णशालायां, गमने = अभिगमने, नः = अस्मान्, पर्य्याकुला = चिन्तातुरा, गोतमी = आश्रमवृद्धा तापसी, एकस्था = तदन्तिकगताः, गतेः रोधस्तं = गमनावरोधं, रूपयित्वा = नाटयित्वा, हा ! धिक् ! = आः ! धिङ्माम्, ऊर्वोः स्तम्भेन विह्वला–ऊरुस्तम्भविह्वला = पादप्रसुप्तिपीडिता, संवृत्ता = जाता, स्वैरं–स्वैरं = शनैः–शनैः, "मन्दस्वच्छन्दयोः स्वैर" मित्यमरः, विदितं भूयिष्ठं = बहुलं येनासौ–विदितभूयिष्ठः = ज्ञातशकुन्तलावृत्तान्तः, [ अथ च विदितं भूयिष्ठं यस्यासौ तथा, = भवद्वृत्तं प्रायोऽस्माभिरवगतम्, भवान् दुष्यन्त एवेत्यस्माभिर्ज्ञातमिदानीमिति भावः, ] उपचारे = अतिथि-

मध्यस्थतया अपराद्धा स्मः; तन्मर्षय, असम्भावितसत्कारं भूयोऽपि प्रत्यवेक्षणनिमित्तमार्य्यं विज्ञापयामः ।

[ महाभाअ ! विदिअभूइट्ठोसि, सम्पदं उवआरमज्झत्थदाए अवरद्ध म्ह; तं मरिसेहि, असम्भाविदसक्कारं भूओवि पच्चवेक्खणणिमित्तं अज्जं विण्णवेह्म ]

**राजा**—मा मैवम्—दर्शनेनैव भवतीनां सम्भूतसत्कारोऽस्मि ।

**शकुन्तला**—हला अनसूये ! अभिनव-कुशसूचि-परिक्षतं मे चरणम्, कुरुवक-शाखा-परिलग्नश्च वल्कलम् । तावत् प्रतिपालयतं माम्, यावदेनन्मोचयामि ।

[ हला अणसूए ! अहिणव·कुस-सूइ·परिक्खदं मे चलणं, कुरुवअ· साहापरिलग्गञ्च वक्कलं, दाव परिवालेध मं जाव णं मोआवेमि ]

( इति राजानमवलोकयन्ती सव्याजं विलम्ब्य, सह सखीभ्यां निष्क्रान्ता । )

**राजा**—(निःश्वस्य–) गताः सर्वाः, भवतु, अहमपि गच्छा·

---

सत्कारे, मध्यस्थतया = औदासीन्येन, अपराद्धाः = कृतापराधाः स्मः, मर्षय = क्षमस्व, अनेनानुवृत्तिर्नाट्यालङ्कारः, "प्रश्रयादनुवर्त्तनम्—अनुवृत्ति" रिति विश्वनाथोक्तेः न सम्भावितः,: = लब्धः, सत्कारो येन तम्—अकृत· सत्कारमपि, आर्यं = भवन्तं, भूयः = पुनरपि प्रत्यवेक्षणस्य निमित्तं· प्रत्यवेक्षणनिमित्तं = प्रत्यागमनार्थं, विज्ञापयामः = प्रार्थयामहे,

मा मा = नहि नहि, एवम् = इत्थमवादिष्ट, सम्भूतः = जातः, सत्कारो· यस्यासौ, जातातिथ्योऽस्मि,

अभिनवया कुशस्य सूच्या = कुशाङ्कुराग्रसूचिकया, परिक्षतं = विक्षतं, कुरुवकस्य शाखायां परिलग्नं = कुरुवकशाखापरिलग्नं = कुरुवकतरुविटपा· सक्तम्, इति = इत्यभिधाय, सव्याजं = एवं मिषेण, विलम्ब्य = रुद्धगमना, मन्दमौत्सुक्यं यस्यासौ तथा = मन्दोत्कण्ठः, अनुयात्रा प्रयोजनं

मि, शकुन्तलादर्शनादेव मन्दौत्सुक्योऽस्मि नगरगमनं प्रति, याव-
दनुयात्रिकानविदूरे तपोवनस्य निवेशयामि, न खलु शक्तोऽस्मि
शकुन्तलादर्शनव्यापारादात्मानं निवर्त्तयितुम्,

मम हि—

गच्छति पुरः शरीरं, धावति पश्चादसंस्तुतं चेतः ।
चीनांशुकमिव केतोः प्रतिवातं नीयमानस्य ॥३६॥

( इति निष्क्रान्ताः सर्वे । )

प्रथमोऽङ्कः ।

---

शीलं वा येषान्तान् = अङ्गरक्षकान्, सैनिकान्, निवेशयामि = स्थापयामि, शकुन्तलाया दर्शनमेव व्यापारस्तस्मात् = शकुन्तलामुखावलोकनव्यसनात्, निवर्त्तयितुम् = अवरोद्धुम् ।

गच्छतीति । शरीरं = वपुः, पुरः = अग्रे, गच्छति = शनैः शनैः कथञ्चिद्याति, चेतः = चित्तन्तु, वातस्याभिमुखं-प्रतिवातं = वायुसम्मुखं, 'लक्षणेनाभिप्रती' इत्यव्ययीभावः, नीयमानस्य = चाल्यमानस्य, केतोः = ध्वजस्य, चीनांशुकमिव = पट्टवस्त्रमिव, असंस्तुतमिव = शरीरेणापरिचित-मिव, पश्चात् = शकुन्तलाभिमुखं, धावति = सत्वरमुपयाति । एतेन चेत-सश्चाञ्चल्यं, वपुषो हृदयशून्यत्वात्काष्ठतुल्यत्वं च ध्वनितम् ।

शरीरमनसोः सम्बन्धेऽपि असम्बन्धकथनादतिशयोक्तिः । अपरि-चितमिवेत्युत्प्रेक्षा, चीनांशुकमिवेत्युपमा, वृत्त्यनुप्रासः । ] ॥ ३६ ॥

निष्क्रान्ताः सर्वे इति । "पात्रैस्त्रिचतुरैरङ्कं, तेषामन्तेऽस्य निर्गमः"—इति दशरूपके,—"अन्तनिष्क्रान्तनिखिलपात्रोऽङ्क इति कीर्त्तितः"—इति दर्पणे च,—प्रतिपादनादङ्कान्ते सर्वपात्रनिर्गमः । तपोवनावरोधस्य साक्षा-दर्शनीयतयाऽङ्कान्ते निबन्ध इत्यत्राङ्कसमाप्तिः । तदुक्तं धनिकेन—

दूराध्वानं, वधं, युद्धं, राज्यदेशादिविप्लवं ।
संरोधं, भोजनं, स्नानं, सुरतं, चानुलेपनम् ।
शस्त्रस्य ग्रहणादीनि प्रत्यक्षाणि न निर्दिशेत् ॥"—इति ।

अङ्कलक्षणमुक्तं धनिकेन—

"प्रत्यक्षनेतृचरितो बिन्दुव्याप्तिपुरस्कृतः ।
अङ्को नानाप्रकारार्थसंविधानरसाश्रयः ॥"

दशरूपक-दर्पणयोरपि—

"यदा तु सरसं वस्तु मूलादेव प्रवर्त्तते ।
आदावेव तदाङ्कः स्यादामुखाक्षेपसंश्रयः ॥"—इति ।

यथा प्रकृते—राज-सूतप्रवेशादेवाङ्कारम्भः ।

इति श्रीगुरुप्रसादशास्त्रिकृतायाम्, अभिनवराजलक्ष्मीटीकायां,

प्रथमोऽङ्कः ।

## द्वितीयोऽङ्कः ।

( ततः प्रविशति निर्विण्णो विदूषकः । )

**विदूषकः**—(निःश्वस्य-)—भोः। हतोऽस्मि एतस्य मृगयाशीलस्य राज्ञो वयस्यभावेन निर्विण्णः । अयं मृगः, अयं वराहः, अयं शार्दूल इति मध्यन्दिनेपि ग्रीष्मे विरलपादपच्छायासु वनरा-

---

### ※ अभिनवराजलक्ष्मीः ※

**विदूषक इति।** केलिकलहप्रियो, राज्ञः सहचरो, हास्यकारको विदूषक—इत्युच्यते, विदूषकलक्षणं रसार्णवे—

"विकृताङ्गवचोवेशैर्हास्यकारी विदूषकः"—इति ।

तस्य च प्राकृतमेव प्रयोज्यं, तदुक्तं—

"विदूषक-विटादीनां पाठ्यं तु प्राकृतं भवेत्"—इति ।

विश्वनाथोऽपि—

"शृङ्गारस्य सहाया विट-चेट-विदूषकाद्याः स्युः ।
भक्ता, नर्मसु निपुणाः, कुपितवधूमानभञ्जनाः, शुद्धाः ॥"—इति ।

"कुसुमवसन्ताद्यभिधः, कर्मवपुर्वेष-भाषाद्यैः ।
हास्यकरः, कलहरतिः, विदूषकः स्यात्स्वकर्मज्ञः ॥"—इति च ।

अत्र नाटके—पताकेयं विदूषककथा, तल्लक्षणं दर्पणकृदाह—

"व्यापि प्रासङ्गिकं वृत्तं पताकेत्यभिधीयते"—इति ।

भोः ! = हा ! 'भो'स्तु सम्बोधनविषादयो'रिति मेदिनी । मृगया शीलं यस्य—तस्य मृगयाशीलस्य = आखेटव्यसनिनः, वयस्यभावेन = मित्रभावेन, सख्येन निर्विण्णः = खिन्नः, अत एव—हतोऽस्मि = नितरां नष्टोऽस्मि, शार्दूलः = व्याघ्रः, "शार्दूलद्वीपिनौ व्याघ्रे"—इत्यमरः ।

जिषु आहिण्ड्य पत्रसङ्करकषायविरसानि उष्णकटुकानि पीय गिरिणदीसलिलानि ! अनियतवेलञ्च उष्णोष्णमांसभूयि भुज्यते ।

तुरगगजानाञ्च शब्देन रात्रावपि मे नास्ति प्रकामशयितव्यम् महत्येव प्रत्यूषे दास्याः पुत्रैः शाकुनिकलुब्धैः कर्णोपघातिना व गमनकोलाहलेन प्रतिबोधितोऽस्मि । एतावतापि मे पीड़ा संवृत्ता,—

---

गच्छतीति तिष्ठतीति वा—शेषः, दिनस्य मध्यं—मध्यन्दिनं, तत्र = मध्य ह्नेऽपि, विरला = अत्यन्तमल्पीभूता, पादपानां = वृक्षाणां, छाया यासु- तासु, वनानां—राजिषु = पंक्तिषु, आहिण्ड्य = इतस्ततो गत्वा, पत्राणां पर्णानां, सङ्करेण = संमिश्रणेन, कषायाणि, अत एव विरसानि = विगत सानि, उष्णानि—घर्मतापात्, कटुकानि च—महिषादिवन्यजन्तु-वि हनविमर्दवशात्, गिरिणदीसलिलानि = शैलस्रवन्तीतोयानि, पीयन्ते आस्वाद्यन्ते ।

अनियता वेला यस्मिंस्तद्यथा स्यात्तथा अनियतवेलम् = अनिश्चि कालं, उष्णमुष्णं मांसं भूयिष्ठं यस्मिन् तत्—उष्णोष्णमांसभूयिष्ठम् उष्णमांसबहुलं, भोजनं क्रियते। तुरगाणां = वाजिनां, गजानां = करिणा प्रकामं = यथेष्टं, शयितव्यं = शयनम् । महत्येव प्रत्यूषे = अचिरप्रवृत्तेऽ अहर्मुखे, [किञ्चिदवशिष्टायामपि रजन्यां—] दास्याः पुत्रैरिति । आक्रो पष्ठ्या अलुक् ।

शकुनान् पक्षिणः हन्ति-शाकुनिकः—तैः = पक्षिहिंसकैः, "जीवान्त शाकुनिक" इत्यमरः । लुब्धैः = व्याधैः, "व्याधो मृगवधाजीवो मृगयुर्लुब्ध ऽपि सः"—इत्यमरः । शाकुनिकाश्च ते लुब्धाश्चेति कर्मधारय- । कर्णौ- उपहन्ति तच्छीलेन कर्णोपघातिना = कर्णदुःखदायिना, वने यद्गमनं, तत [तदर्थं वा—] यः कोलाहलः = कल-कलः, तेन, प्रतिबोधितः = निद्राद्र द्रीकृतः ।

यतः अयं[1] गण्डस्य उपरि विस्फोटकः संवृत्तः,

तेन हि किल अस्मास्ववहीनेषु तत्रभवता मृगानुसारिणाऽऽश्रमपदं प्रविष्टेन मम अधन्यतया शकुन्तला नाम कापि तपस्विकन्यका दृष्टा, तां प्रेक्ष्य साम्प्रतं नगरगमनस्य कथामपि न करोति ।

एव[2]मेव चिन्तयतो मे प्रभाता अक्ष्णो रजनी,

का गतिः ?

यावदेनं कृताचारपरिग्रहं प्रियवयस्यं प्रेक्षे ।

---

एतावताऽपि = इत्थं–कष्टप्रदायासप्रतिहतस्यापि, पीडा संवृत्ता = नैतावताप्यनर्थपरम्परा शाम्यति, अयं = वक्ष्यमाणः, शकुन्तलासक्तिरूपः, गण्डस्य = विस्फोटकस्य, विस्फोटकः = पिटकः, व्रणोपरि व्रणो जातः, दुःखेऽपि दुखमुत्पन्नमित्याशयः । "गण्डः = कपोल" इति व्याख्यानं तु न प्रकृतानुगुणमिति–समंज्ञाः । "गण्डोपरि विस्फोटक" इत्याभाणकं (कहावत) लोकविदितमेव ।

किन्तदित्याह—तेनेति । तेन = राज्ञा, अवहीनेषु = आखेटके पश्चादेव विश्लिष्टेषु, मृगानुसारिणा = मृगमनुधावमानेन, आश्रमपदं = तपोवनभूमिं, ममाधन्यतया = मद्दौर्भाग्यविजृम्भणेन, साम्प्रतम् = इदानीं, कथां = वार्त्तामपि, अक्ष्णोः = नेत्रयोरेव, [असुप्तस्यैव] प्रभाता = व्युष्टा, गतेति यावत् । गतिः = उपायः, यावत् = अस्तु तावत्, कृत–आचारस्य = नित्यकर्मणः, परिग्रहः—स्वीकारो येन तं = कृताह्निकम्, प्रियवयस्यं = राजानं, प्रेक्षे = पश्यामि ।

---

१ गण्डः स्यात्पुंसि खड्गिनि, ग्रहयोगप्रभेदे च वीर्थ्यंगे पिटकेऽपि, चिह्नवीरकपोलेषु हयभूषणवुद्वुदे"—इति मेदिनी, पिटकः = विस्फोटकः, 'फोडा' इति भाषा ।

२ "अद्यापि तस्य तामेव चिन्तयतोऽक्ष्णोः प्रभातमासीत्" पा० ।

¹(परिक्रम्यावलोक्य च—)

एष बाणासनहस्तः हृदयनिहितप्रियजनः, वनपुष्पमाला-धारी इत एव आगच्छति प्रियवयस्यः।

भवतु, अङ्गभङ्गविकलो भूत्वा स्थास्यामि। एवमपि न विश्रामं लभेय (इति दण्डकाष्ठमवष्टभ्य स्थितः)

[भो! हदोह्मि एदस्स मिअआसीलस्स रण्णो वअस्सभा णिव्विण्णो अयं मिओ, अयं वराहो, अयं सद्दूलोत्ति मज्झन्दिणेवि गिइ विरलपादवच्छाआसुं बणराइसुं आहिण्डिय पत्तसङ्करकसाअविरसाइं उण्ह कडुआइं पिज्जन्ति गिरिणईसलिला इं। अणिअदवेलञ्ञ उण्णोण्णमंसभू भुज्जीअदि।

तुरअगआणाञ्ञ सद्देण रत्तिं पि मे णत्थि पकामसुइदव्वं, महन्ते ज्ज पच्चुसे दासीए पुत्तेहिं साउणिअलुद्धेहिं कण्णोपघादिणा वणगमणकोलाहले पडिबोधिदह्मि।

---

एषः = कृतप्रभातकृत्यो राजा, बाणासनं हस्ते, यस्यासौ—बाण सनहस्तः = धृतकार्मुकः, हृदये निहितः स्थापितः, प्रियजनः = शकुन्तल रूपो येनासौ, वनपुष्पाणां मालां धारयति तच्छीलः = वन्यकुसुममाल धारी, इतः = अत्रैव, अङ्गस्य—पादादेः, भङ्गेन—विकलः = पीडितः, भूत्व तद्वदाचरन्, एवं = पीडाव्याजेन, इति = इत्थं विचिन्त्य, दण्डकाष्ठं लगुडम्, अवष्टभ्य = आश्रित्य, [ "सुखदुःखकृतो योऽर्थस्तद्विधानमि स्मृतम्" इत्युक्तेर्विधानं नाम मुखसन्ध्यङ्गम्।] यथानिर्दिष्टः = बाण सनहस्तो राजा।

---

१ (परिक्रम्यावलोक्य च—) एष वाणासनहस्ताभिर्नवपुष्पमालाधारि भिर्युवतीभिः परिवृत इत एवे"ति पाठान्तरम्।

एत्तिकेण विमे पीडा ण संवुत्ता:, जदो अअं गण्डस्स उवरि विप्फोड़ओ संवुत्तो, तेण हि किल अह्मेसुं अवहीणेसुं तत्थभअदा भिआणुसारिणा अस्समपदं पविट्ठेण मम अधण्णदाए सउन्तला णाम कावि तवस्सिकण्णआ दिट्ठा, तं पेक्खिअ सम्पदं णअरगमणस्स कथम्पिण करेदि । एवं जेव चिन्तअस्स मे पहादा अच्छिसुं रअणी, का गदी । जाव णं किदआभार-परिग्गहं पिअवअस्सं पेक्खामि । ]

[ एसो वाणासणहत्थो हिअअ-णिहिदपिअअणो वणपुप्फमालाहारी इदो जेव्र आअच्छदि पिअवअस्सो भोदु, अङ्ग-भङ्गविअलो भविअ चिट्ठिस्सं । एव्वम्पि णाम विस्सामं लहेअं । ]

(ततः प्रविशति यथानिर्दिष्टो राजा ।)

(राजा —आत्मगतम्—)

कामं प्रिया न सुलभा मनस्तु तद्भावदर्शनाश्वासि ।
अकृतार्थेऽपि मनसिजे रतिमुभयप्रार्थना कुरुते ॥१॥

(स्मितं कृत्वा— )

---

**काममिति** । कामं = यद्यपि, प्रिया = शकुन्तला, तु = किन्तु, मनः = मच्चित्तं, तस्याः = प्रियायाः भावस्य = मय्यनुरागसूचकस्य विलम्ब्य गमनादेः, दर्शनेन = निरीक्षणेन, आश्वसिति तच्छीलं—तद्भावदर्शनाश्वासि = तदनुरागनिश्चयात्कृताश्वासं, मनसिजे = मन्मथे, अकृतार्थेऽपि = अचरितार्थेऽपि—[ बाह्याभ्यन्तरसंप्रयोगालाभात्, ] उभयोः प्रार्थना—उभयप्रार्थना = परस्परमिङ्गितव्यतिकरेण स्वानुरागसूचनं, रतिं = सुखं, कुरुते = विधत्ते, प्राणसमासमागमसुखालाभेऽपि तच्चेष्टाभिरेव मनो मोदते, इत्याशयः । [ विरोधाभासः, श्रुत्यनुप्रासः, रतिमुभयप्रार्थनेत्यादिनाऽर्थान्तरन्यासश्च । ] ॥ १ ॥

**स्मितमिति** । आत्मनोऽपि कन्दर्पकदर्थनात्स्मयः, आत्मनोऽभि-

एवमात्माभिप्रायसम्भावितेष्टजनचित्तवृत्तिः प्रार्थयिता विप्रलभ्यते, कुतः—

स्निग्धं वीक्षितमन्यतोऽपि नयने यत्प्रेरयन्त्या तया,
यातं यच्च नितम्बयोर्गुरुतया मन्दं विलासादिव ।
मा गा इत्युपरुद्धया यदपि तत्सासूयमुक्ता सखी,
सर्व्वं तत्किल मत्परायणमहो कामी[1] स्वतां पश्यति ॥२॥

प्रायेण = मनोरथेन, सम्भाविता = कल्पिता इष्टजनस्य = प्रियजनस्य चित्तवृत्तिर्येनासौ तथा, प्रार्थयिता = कामिजनः, बिडम्ब्यते = विप्रलभ्यते वञ्च्यत इति यावत्, कामिन्याः सहजामपि लीलामात्मानुरागकृतां मन्यमानः वञ्चित एवेत्याशयः । कुतः = कस्मात्, तदेव द्रढयति—

स्निग्धमिति । यत्—अन्यतोऽपि = अन्यत्र वस्तुनि, नयने = लोचनयुगलं, प्रेरयन्त्याऽपि = व्यापारयन्त्याऽपि, स्निग्धं वीक्षितं = मसृणमधुरया दृष्ट्या यदवलोकितं, स्निग्धदृष्टिलक्षणं—

"विकाशि स्निग्ध-मधुरा, चतुरे बिभ्रती भ्रुवौ, ।
कटाक्षिणी, साभिलाषा दृष्टिः,–'स्निग्धा'ऽभिधीयत"—इति ।

यच्च—नितम्बयोः = स्वकटिपश्चाद्भागयोः, गुरुतया = गौरवेण, विलासादिव = विलासाख्यहावविशेषेणेव यातं = गमनं कृतम् । विलासलक्षणं दर्पणे—

"यानस्थानासनादीनां मुखनेत्रादिकर्मणाम् ।
विशेषस्तु विलासः स्यादिष्टसन्दर्शनादिना"—इति ।
"विलासो हावभेदे स्या"दिति मेदिनी—

मा गा इति = इत्युक्त्वा, उपरुद्धया = वारितगमनया शकुन्तलया, असूयया सहितं–सासूयं यथा स्यात्तथा = सेर्ष्यं, सखी = प्रियम्वदा

[1] 'कामः' पाठान्तरम् ।

विदूषकः—(तथास्थित एव—) भो वयस्य ! न मे हस्तः प्रसरति, तत् वाङ्मात्रेण जापयिष्यामि। जयतु जयतु भवान्।

[ भो वअस्स ! ण मे हत्थो पसरदि ता वाआमेत्तेण जआवीअस्सि। जअदु जअदु भवं। ]

राजा—(विलोक्य सस्मितम्—) कुतोऽयं गात्रोपघातः ?।

विदूषकः—कथं कुत इति,-स्वयमेव अक्षि भंक्त्वा अश्रुकारणं पृच्छसि ?।

[ कधं कुदो त्ति, सअं ज्जेव अच्छि भञ्जिअ अच्छुकारणं पुच्छसि ]

राजा—न खल्ववगच्छामि, भिन्नार्थमभिधीयताम्।

विदूषकः—यद्वेतसः कुब्जस्य लीलां विडम्बयति, तत् किमात्मनः प्रभावेण ? अथवा नदीवेगस्य ?।

[ जं वेदसो खुज्जस्स लीलां विडम्बेदि, त किं अत्तणो पहावेण ? अधवा णईवेअस्स ? ]।

---

उक्ता = अभिहिता, "असूया तु — दोषारोपो गुणेष्वपि" इत्यमरः। तत्सर्वं स्निग्धवीक्षणादिकं, मत्परायणं=मदनुरागकृतम्, इति—कामी = कामपरवशो लोकः, स्वताम् = आत्मविषयतां, पश्यति = अनुसन्धत्ते। सम्भावतीत्यर्थः। [ अर्थान्तरन्यासः। विलासादिवेति हेतूत्प्रेक्षा। छेक-वृत्त्यनुप्रास-स्वभावोक्तयश्च। ] ॥२॥

तथा = दण्डमवलम्ब्य स्थित एव, वयस्येति। "विदूषकेण वक्तव्यो वयस्येति च भूपति"रित्युक्तेर्दुष्यन्तसम्बोधनम्। प्रसरति = उत्तिष्ठति, तत् = तस्मात्, वाङ्मात्रेण = वाचैव, जापयिष्यामि = विजयं ते अभिधास्यामि। ण्यन्तस्य जिधातो रूपम्। "क्रीङ्जीनां णा" वित्यात्वम्, पुक्।

गात्रस्य = वपुषः, उपघातः = वैकल्यं,—अवगच्छामि = जानामि, भिन्नार्थं = स्फुटं, वेतसः = वञ्जुलः, कुब्जस्य लीलां—कुब्जलीलां =

**राजा**—नदीवेगस्तत्र कारणम्।

**विदूषकः**—ममापि भवान्।

[ मम वि भवं ]

**राजा**—कथमिव ?।

**विदूषकः**—युक्तं नाम एवम्,—यतस्त्वया राजकार्य्याणि उज्झित्वा तादृशमस्खलितपदं प्रदेशञ्च, वनचरवृत्तिना भवितव्यमिति ! किमत्र मन्त्र्यताम्, अहं पुनर्ब्राह्मणः प्रत्यहं श्वापदानुसरणैः संक्षोभितसन्धिबन्धनानामङ्गानामनीशोऽस्मि। तत् प्रसीद मे, एकाहमपि तावद् विश्रम्यताम्।

[ जक्कंणाम एव्वं, जं तुए रज्जकज्जाइं उज्झिअ तादिसं अक्खलिदपदं पदेसं च वणचलवितिणा होदव्वंत्ति। किं एत्थ मन्तीअदु, अहं उण ब्रह्मणो

---

गद्गुलविभ्रमं, वक्रतामिति यावत्, विडम्बयति = अनुकरोति, धत्ते आत्मनः = स्वस्य, प्रभावेण=दोषेण, तत्र=वक्रतायां, कथमिव = कथन्तावत्!

एवम्=इदं! मृगयाचरणं,युक्तं नाम=युक्तिसङ्गतं तव भवेदपि, उज्झित्वा= विहाय, अस्खलितं पदं यत्र तत् = समतलं, समतलतया पादस्खलनाभावात्, प्रदेशं=भूभागं, नगरमित्यर्थः, राज्यं वा—उज्झित्वेति योजनीयम्, राज्यमपि—अस्खलितपदं = बद्धमूलं, वंशानुयातञ्च, वनचरवृत्तिना भवितव्यं = तव वनचरवदितस्ततोऽरण्ये धावनं सम्भवति। किमत्र मन्त्र्यताम् = किमत्र विचारणया, परिभ्राम्यतु भवान् वनमनिशं, किमत्र कथनेनेत्यर्थः। किन्तु अहं पुनः = अहं पुनर्ब्राह्मणः, [ न मम मृगया सहजस्नेहभाजनं, ]

श्वापदानां = हिंस्रजन्तूनां सिंहादीनाम्, अनुसरणैः = अनुगमनैः संक्षोभितानि सन्धिबन्धनानि येषां, तेषां = विश्लथतराणाम्, अङ्गानां =

पच्चहं सापदाणुसरणेहिं संक्खोहिदसन्धिबन्धणाणं अत्तणो अङ्गाणं अणीसोह्मि । ता पसीद मे, एक्काहम्पि दाव विसमीअदु । ]

**राजा**—(आत्मगतम्) अयमेवमाह, ममापि कण्वसुतामनुस्मृत्य मृगयां प्रति निरुत्सुकं चेतः । तथाहि—

न नमयितुमधिज्यमुत्सहिष्ये
धनुरिदमाहितसायकं मृगेषु ।
सहवसतिमुपेत्य यैः प्रियायाः
कृत इव लोचनकान्तिसंविभागः ॥३॥

**विदूषकः**—(राज्ञो मुखमवलोक्य—) अत्र भवान् किमपि हृदये कृत्वा मन्त्रयति, अरण्ये खलु मया रुदितम् ।

[ अत्त भवं किम्पि हिअए कदुअ मन्तेदि, अरण्ये क्खु मए रुदिदं ]

---

कर-चरणादीनाम्, अनीशोऽस्मि, 'चालने' इति शेषः । प्रसीद = कृपां कुरु, एवमाह = 'एकाहं विश्रम्यताम्'—इत्याह, अनुस्मृत्य = स्मृत्वा,—

न नमयितुमिति । ज्यामधिगतम्—अधिज्यम् = अध्यारूढमौर्वीकम्, आहितः सायको यत्र तत्—आहितसायकम् = धृतशरं, इदं धनुः = कोदण्डमेतत्, मृगेषु = हरिणेषु,—यैः—प्रियायाः = शकुन्तलायाः, सहवसतिं=सहवासम्, उपेत्य=समधिगत्य, लोचनयोः = नयनयोः, कान्तेः, संविभागः = समादानं, कृतः = कृतं, [ मत्प्रियालोचनतुल्यनयनानां हरिणानामुपरि ]—नमयितुं = व्यापारयितुं, नोत्सहिष्ये = बाणपातं कर्त्तुं न समर्थोऽस्मि, प्रियालोचनसदृशलोचनेषु हरिणेषु कथं प्रहरिष्ये ? । [पूर्वार्द्धवाक्यार्थं प्रति उत्तरार्धवाक्यर्थो हेतुरिति काव्यलिङ्गमलङ्कारः, उत्प्रेक्षा, श्रुत्यनुप्रासश्च । ] ॥३॥

किमपि हृदये कृत्वा = किमपि वस्तु विषयीकृत्य, मन्त्रयसि = विचारयसि, अरण्ये रुदितम् = निष्फलं स्वदुःखं प्रकटितं, भवान्न किमपि शृणोति—

राजा—(सस्मितम्-) अनतिक्रमणीयं सुहृद्वाक्यमिति स्थितोऽस्मि ।

विदूषकः—(सपरितोषम्-) तेन हि त्वं चिरञ्जीव, ( इत्यु-त्थातुमिच्छति ) ।

[ तेण हि तुमं चिरं जीव ]

राजा—तिष्ठ, शृणु मे सावशेषं वचः ।

विदूषकः—आज्ञापयतु भवान् ।

[ आणवेदु भवं ]

राजा—विश्रान्तेन भवता ममान्यस्मिन्ननायासे कर्मणि सहायेन भवितव्यम् ।

विदूषकः—किं मोदकखादिकायाम् ? ।

[ किं मोदअखज्जिआए ]

राजा—यद्वक्ष्यामि ।

विदूषकः—गृहीतः क्षणः ।

[ गहीदो क्खणो ]

---

इत्याशयः । अनतिक्रमणीयम् = अनुल्लङ्घनीयम्, स्थितोऽस्मि = मृगया-विमुखीभूतोऽस्मि । सपरितोषं = सानन्दं । तेन = अनेन निर्णयेन, अव-शेषमपरित्यज्य—सावशेषं = संपूर्णं, साकल्येऽव्ययीभावः । अनायासे = परिश्रमशून्ये, अन्यस्मिन् = मृगयाभिन्ने,

मोदकानां खादनं—मोदकखादिका, तस्यां = लड्डुकभक्षणमहोत्सवे । यद्वक्ष्यामि = यत्कार्यं कथयामि, तत्र, न तु मोदकभक्षणे । गृहीतः क्षणः = सावधानोऽहं, कथयेत्यर्थः ।

राजा—कः कोऽत्र भोः !

दौवारिकः—(प्रविश्य–) आज्ञापयतु भर्त्ता।

[ आणवेदु भट्टा ]

राजा—रैवतक ! सेनापतिस्तावदाहूयताम्।

दौवारिकः—तथा (–इति निष्क्रम्य सेनापतिना, सह प्रविश्य–) एतु एतु आर्य्यः, एष[1] आलापदत्तकर्णो भर्त्ता इहैव तिष्ठति, उपसर्पत्वेनमार्य्यः।

[ तह, एदु एदु अज्जो, एस आलावदिण्णकण्णो भट्टा इधज्जेव चिट्ठदि उव्वसप्पदु णं अज्जो ]

सेनापतिः—(राजानमवलोक्य, स्वगतम्–) दृष्टदोषापि मृगया स्वामिनि केवलं गुणायैव संवृत्ता, तथाहि देवः[2]—

अनवरतधनुर्ज्यास्फालनक्रूरवर्ष्मा,
रविकिरणसहिष्णुः, स्वेदलेशैरभिन्नः।

---

अत्र = द्वारदेशे, रेवत्यां जातो रैवतः, स एव रैवतक इति = द्वारपालनामेदं, आलापे दत्तौ कर्णौ येनासौ = विदूषकेन सहालपन्, दृष्टाः = शास्त्रेषु निर्दिष्टाः, दोषाः = हिंसाजन्यपापादयः यस्यां सा–अनेकदोषनिन्दिताऽपि, [यद्वा—दृष्टा संभाविता दोषा यया सा–दृष्टदोषा = भूरिदोषकारिणीत्यर्थः।] संवृत्ता = जाता, तदेव दर्शयति—तथाहीति।

देवः = महाराजः, पदमेतत्–श्लोकस्थेन 'बिभर्त्ती'त्यनेन सम्बध्यते। अनवरतेति। गिरिषु चरतीति–गिरिचरः = शैलविहारी, नागः = कुञ्जर इव, देवः = राजा–अनवरतं = निरन्तरं, धनुषः = शरासनस्य, ज्यायाः =

---

१ 'एष आशीर्वचनोत्कण्ठः, इत एव दत्तदृष्टिः' पा०।

२ "देवेति नृपतिर्वाच्यो भृत्यैः प्रकृतिभिस्तथे"ति भरतः।

अपचितमपि गात्रं व्यायतत्वादलक्ष्यं
गिरिचर इव नागः प्राणसारं बिभर्त्ति ॥४॥

(उपगम्य–) जयति जयति स्वामी, स्वामिन्! गृहीतमृग-प्रचारं सूचितश्वापदमरण्यम्, तत् किमन्यदनुष्ठीयताम् १।

---

मौर्व्याः, आस्फालनेन = क्रूरं = कठोरं, १वर्ष्म = शरीरं यस्यासौ = निरन्तर-धनुश्चालनव्यायामकठोरकायः। रवेः किरणान् सहते तच्छीलो–रवि-किरणसहिष्णुः = प्रखरदिवाकरकिरणसहनशीलः। स्वेदस्य लेशैः–स्वेदलेशैः-श्रमजन्यप्रस्वेदकणैरपि, अभिन्नः = असंस्पृष्टः, अपचितमपि = कृशमपि [उपचितमिति पाठे–मांसलमपीत्यर्थः] २व्यायतत्वात् = दृढाङ्गत्वात् [उपचितमिति पाठे–व्यायतत्वात् = व्यायामशीलत्वात्–इत्यर्थः.] अल-क्ष्यम् = ज्ञातुमशक्यम्। प्राणः सारो यस्मिन्, तत् प्राणसारं = बलपूर्णं "प्राणोऽनिले बले" इति हैमः। "सारो बले दृढांशे" चेत्यमरः। दृढप्रा-वा, गात्रं = वपुः, "गात्रं वपुः संहनन" मित्यमरः।

गजपक्षेऽपि—धनुषः = प्रियालतरोः ["धनुस्सञ्ज्ञा प्रियालद्रौ राशि-भेदे शरासने" इति विश्वः।] ज्यायाः = भूमेः, "ज्या–मौर्वी च वसुन्धरे" इ-धरणिः। आस्फालनेन = घर्षणेन, क्रूरं वपुः शरीरं यस्यासौ, रविकिरण-सहिष्णुः = आतपसहः, स्वेदलेशैरभिन्नः, प्रस्वेदशून्यः, अपचितमपि = नातिस्थूलमपि-व्यायतत्वात् = दृढत्वात्, सन्नाहवत्त्वात्, अलक्ष्यम् = अज्ञातकार्श्यं, गात्रं = वपुः बिभर्त्तीति–योजनीयम्। एतेन–राज्ञो विरह-कार्श्यं सूचितम्। [श्रुतिवृत्तिच्छेकानुप्रासाः। श्लेषः। परिकरालङ्कारश्च] ॥४॥

"राजा–स्वामीति देवेति भृत्यैर्वाच्य" इति दर्पणोक्तेः स्वामीति राज-सम्बोधनं, गृहीतो मृगाणां प्रचारो यस्मिन् तत्–गृहीतमृगप्रचारम् = निरु-

---

१ "शरीरं वर्ष्म विग्रह" इत्यमरः।
२ "व्यायतं व्यापृते दीर्घे दृढे चातिशयेऽन्यव" दिति मेदिनी।

राजा—भद्रसेन ! भग्नोत्साहः कृतोऽस्मि मृगयापवादिना माधव्येन ।

सेनापतिः—(जनान्तिकम्-) सखे ! माधव्य ! स्थिरप्रतिज्ञो भव, अहं तावत् स्वामिनश्चित्तवृत्तिमनुवर्तिष्ये । (प्रकाशम्) देव, ! प्रलपत्येष वैधेयः; ननु प्रभुरेव निदर्शनं, पश्यतु देवः—

मेदश्छेदकृशोदरं लघु भवत्युत्साहयोग्यं वपुः,
सत्त्वानामपि लक्ष्यते विकृतिमच्चित्तं भयक्रोधयोः ।

---

मृगयातायातम् । सूचिताः श्वापदा यस्मिन्, तत्—सूचितश्वापदं = ज्ञातसिंहादिनिवासम्, अरण्यम् = वनं, तत् = तस्मात्, किमन्यदनुष्ठीयताम् = इतोऽधिकं किमाचरणीयम् ?

मृगयामपवदति तच्छीलेन—मृगयापवादिना = आखेटनिन्दापरेण, माधव्येन = विदूषकेण, भग्न उत्साहो यस्यासौ = मन्दीकृतोत्साहः । जनान्तिकम् = "त्रिपताककरेणान्यानपवार्यान्तरा कथाम् । अन्योन्यामन्त्रणं यत्स्यात्तज्जनान्ते जनान्तिकम्"—इत्युक्तरीत्या द्वयोर्गुप्तं भाषणं जनान्तिकम् । त्रिपताकलक्षणन्तु भरते—

"प्रसारिताः समाः सर्वा यस्याङ्गुल्यो भवन्ति हि ।
कुञ्चितश्च तथाङ्गुष्ठः स पताक इति स्मृतः ।
पताके तु यदा वक्राऽनामिका त्वङ्गुलिर्भवेत् । त्रिपताकः स विज्ञेय"—इति ।

स्थिरा प्रतिज्ञा यस्यासौ = दृढनिश्चयः ।मृगयाविरोधी, मृगयानिषेधमेव कुर्वित्याशयः, तावत् = तु, चित्तमनुवर्त्तिष्ये = तदिच्छामेव प्रशंसामि, दूषितामपि मृगयां, शोभनामेव निर्दिशामि, राजप्रीतिहेतुत्वात्, प्रकाशम् = "सर्वश्राव्यं प्रकाशं स्यात्" इति दर्पणम् । वैधेयः = मूर्खः । "मूर्खवैधेयबालिशाः" इत्यमरः, प्रलपति = निरर्थकं वक्ति, ननु != निश्चितं, निदर्शनम् = उदाहरणम् । पश्यतु = विचारयतु ।

मेद इति । मेदसां छेदेन कृशमुदरं यत्र तत् = मेदोविनाशतनुतरोदरं,

उत्कर्षः स च धन्विनां यदिषवः सिध्यन्ति लक्ष्ये चले,
मिथ्या हि व्यसनं वदन्ति मृगयामीदृग् विनोदः कुतः ॥५॥

विदूषकः—(सरोषम्-) अपेहि रे उत्साहहेतुक ! अत्रभवान् प्रकृतिमापन्नः, त्वं तावत् दास्याः पुत्रोऽटवीतोऽटवीमाहिण्डमानो यावत् 'शृगालमृगलोलुपस्य कस्यापि जीर्णऋक्षस्य मुखे निपतितो भव ।

लघु = भारशून्यम्, उत्साहस्य योग्यम् = उत्साहयोग्यम् = उत्साहशालि, वपुः = शरीरं, भवति = जायते । भये च क्रोधे च—भय-क्रोधयोः = भीति-रोषयोः, विकृतिर्विद्यते यस्मिंस्तत्—विकृतिमत् = विकारि, सत्त्वानां = जन्तूनां हरिणादीनां, चित्तं = मनः, लक्ष्यते = ज्ञायते । चले = चञ्चले, लक्ष्ये = शरव्ये, यत् = यस्मात्, इषवः = बाणाः, सिध्यन्ति = अस्खलिता भवन्ति, स च-धन्विनां = धानुष्काणाम्, उत्कर्षः = वैशिष्ट्यं, भवतीत्यनुपलनीयम् । अतो—मृगयाम् = आखेटं, मिथ्यैव = मुधैव, व्यसनं = दोषाधायकं, वदन्ति = कथयन्ति, नीतिविद इति शेषः। हि = यतः, ईदृक् = ईदृशः, विनोदः = गुणाधायकं क्रीडनकं, कुतः ? = क्व दृश्यते ? । नैव दृश्यत इत्याशयः । [ क्रियासमुच्चयालङ्कारः, काव्यलिङ्गं, वृत्त्यनुप्रासश्च । "चित्तानुवर्त्तनं यत्र तद्दाक्षिण्यमितीरितम्" इत्युक्तेश्च चित्तानुवर्त्तनाद्दाक्षिण्यं भूषणमुपक्षिप्तं, किञ्च पूर्वोक्तश्लोकद्वयेन मृदवं नामवीथ्यङ्गं दर्शितम्—

"दोषा गुणा, गुणा दोषा यत्र स्युर्मृदवं हि तत्" इति दर्पणोक्तेः] ॥५॥

उत्साहे ( हेतुरेव—) हेतुकः, तत्सम्बुद्धौ हे—उत्साहहेतुक ! = उत्साहवर्द्धक,! अपेहि = अपगच्छ, अत्रभवान् = महाराजः, प्रकृतिं = शान्तिम्, आपन्नः = प्राप्तः, लम्भितो वाऽस्माभिः, आहिण्डमानः = परिभ्राम्यन्, अटवीतोऽटवीं = वनाद्वनम्, नरनासिकाया लोलुपस्य—नर

१ 'नरनासिकालोलुपस्य' पा० ।

[ अवेहि रे उच्छाअहेतुअ ! अत्तभवं पइदिं आवण्णो, तुम दाव दासीए पुत्तो अडइदो अडइं आहिण्डन्तो जाव सिआलमिअलोलुअस्स कस्स वि जिण्णरिच्छस्स मुहे णिवडिदो होहि ]

राजा—सेनापते ! आश्रमसन्निकर्षे स्थितोऽस्मीति वचनं ते नाभिनन्दामि ! अद्य तावत्—

गाहन्तां महिषा [1]निपानसलिलं शृङ्गैर्मुहुस्ताडितं,
छायाबद्धकदम्बकं मृगकुलं रोमन्थमभ्यस्यतु ।

नासिकालोलुपस्य = नरनासिकाच्छेदनदुर्ललितस्य, जीर्णस्य = वृद्धस्य, ऋक्षस्य = भल्लूकस्य, आश्रमस्य सन्निकर्षः = सान्निध्यं, तत्र स्थितस्य, अभिनन्दामि = स्वीकरोमि, सम्प्रति मृगयां नेच्छामि । अद्य तावत्=इदानीम्, [इदमग्रिमश्लोकान्वयि । ]

गाहन्तामिति । महिषाः = वनलुलायाः, "लुलायो महिषो वाहद्विषत्कासरसैरिभा"—इत्यमरः, शृङ्गैः = विषाणैः, मुहुः = वारम्वारं, ताडितं = समास्फालितं, निपानस्य = आहावस्य, "आहावस्तु निपानं स्यादुपकूपजलाशये" इत्यमरः, सलिलं = जलं, गाहन्ताम्=आलोलयन्तु । निर्भयत्वात्, शृङ्गैर्जलस्य ताडनं महिषजातिः, छायायां बद्धं कदम्बकं येन तत्—छायाबद्धकदम्बकं = अनातपप्रदेशबद्धयूथं, मृगाणां कुलं=मृगनिकुरम्बकं, रोमन्थं = चर्वितचर्वणम्, ['उगाली' 'जुगाली' इति भाषा] अभ्यस्यतु = विधत्ताम्, मृगाणां—छायाबद्धयूथता चर्वितचर्वणञ्च—जातिः । वराहाणां पतयस्तैः—वराहपतिभिः = सूकरयूथनाथैः, पल्वले = अल्पसरसि, जलगर्त्तेषु—इति यावत् । "वेसन्तः पल्वलं चाल्पसरः"—इत्यमरः । मुस्तानां क्षतिः = मुस्ताख्यजलतृणोत्खननं, "कुरुविन्दो मेघनामा मुस्ता मुस्तकमस्त्रि-

१ पशुपक्ष्यादीनां पानाय कूपादुद्धृत्य यत्रेष्टकादिचिते जलाधारे जलं स्थाप्यत, तन्निपानं, 'खेल' 'कोठा' इति भाषा ।

विश्रब्धैः[१] क्रियतां वराहपतिभिर्मुस्ताक्षतिः[२] पल्वले,
विश्रामं लभतामिदञ्च शिथिलज्याबन्धमस्मद्धनुः ॥६॥

सेनापतिः—यथा प्रभविष्णवे रोचते।

राजा—तेन हि निवर्त्तय पुरोगतान् धनुर्ग्राहिणः, यथा च मे सैनिकास्तपोवनं नाभिरुन्धति, दूरात् परिहरन्ति च, तथा निषेद्धव्याः, पश्य—

शमप्रधानेषु तपोवनेषु
गूढं हि दाहात्मकमस्ति तेजः।

या"मित्यमरः। विस्रब्धं = निर्भयं, शिथिलो ज्याया बन्धो यत्र तत्—शिथिलज्याबन्धं, = अवरोपितशिञ्जिनीकम्, अस्माकमिदं धनुश्च, विश्रामं = विश्रान्तिं, लभताम् = अधिगच्छतु। शिथिलज्याबन्धमिति क्रियाविशेषणं वा। केचित्तु—महिषाश्च महिष्यश्च, मृगाश्च मृग्यश्चेत्येवं महिषादिमिथुनपरतया, मुस्ता-विश्रान्ति-ज्यानां स्त्रीलिङ्गनिर्दिष्टानां नायिकात्वारोपेण, क्षतौ-दन्तक्षतारोपेण, बन्धपदेन सुरतकरणाक्षेपेण, बन्धशब्दस्य स्नेहवाचकतया-सुरततान्तमौर्वीरूपनायिकाप्रणयवत्त्वेन च, नायकनायिकामिथुनव्यापारसूचकतयाऽमुं—व्याख्यानयति, च्छात्रानुपयोगितयाऽत्रास्माभिर्जोषमेवास्यते। [स्वभावोक्तिः, कार्यकारणयोः समकालं कथनादतिशयोक्तिश्च] ॥६

प्रभवति तत्साधुकारी प्रभविष्णुः, तस्मै—प्रभविष्णवे = स्वामिने, रोचते, 'तथा करणीय'मिति शेषः,। पुरोगतान् = अग्रेगतान्, मृगया व्यवस्थार्थं पुरो यातान्, धनुर्ग्राहिणः = धानुष्कान्, दूरात् परिहरन्ति = दूरत एव त्यजन्ति, तथा निषेद्धव्याः = नियन्तव्याः।

शमेति। हि = यतः—शम एव प्रधानं येषु-तेषु-शमप्रधानेषु = शान्तिकलितेष्वपि, तपोवनेषु = आश्रमपदेषु, गूढं = प्रच्छन्नं, दाह-एवात्मा

१ विस्रब्धैरिति पा०। २ "नागरमोथा"।

स्पर्शानुकूला अपि सूर्यकान्ता-
स्ते ह्यन्यतेजोऽभिभवाद्दहन्ति ॥७॥

सेनापतिः—यथाज्ञापयति स्वामी ।

विदूषकः—भोः ! उत्साहहेतुक ! निष्क्राम निष्क्राम ।
[ भो उच्छाअहेतुअ । णिक्कम णिक्कम ]

( सेनापतिर्निष्क्रान्तः । )

राजा—( परिजनानवलोक्य ) मृगयावेशमपनयन्तु भवन्तः, रैवतक ! त्वमपि स्वनियोगमशून्यं कुरु ।

रैवतकः—यन्महाराज आज्ञापयति ! ( इति निष्क्रान्तः ) ।
[ जं महाराओ आणवेदि ]

विदूषकः—कृतं भवता निर्म्मक्षिकम्, तदस्मिन् पाद-

यस्य तत्—दाहात्मकं = दाहस्वभावकं, तेजः = धाम, "तेजो धाम्नि पराक्रमे" इति विश्वः । अतो दूरत एव परिहरणीया आश्रमा इत्युपदिष्टं भवति । हि = यतः, स्पर्शस्यानुकूलाः—स्पर्शानुकूला—अपि = स्पर्शसहा-अपि, सूर्यकान्ताः = सूर्यकान्तमणयः,तेऽपि,-अन्यस्य तेजसाऽभि = सर्वतः, भवनं= प्राप्तिस्तस्मात्-अन्यतेजोऽभिभवात् = अन्यतेजःसमाक्रमणात् , दहन्ति = दाहसमर्था भवन्ति । [एवञ्च बहिः सुखस्पर्शा अपि यथा सूर्यकान्तमणयोऽभिभवाद्दहन्ति, तथैव तपोवनान्यपि पराभवाद्दहन्त्येवेति दृष्टान्तालङ्कारः । काव्यलिङ्गं केचिदाहुः] ॥७॥

निष्क्राम्य = अपगच्छ । परिजनान् = भृत्यान् , मृगयानुकूलो वेशो-मृगयावेशः = सन्नाहः, तम् अपनयन्तु = त्यजन्तु । स्वस्य नियोगं-स्वनियोगं = स्वाधिकारं, द्वारपालनम् , अशून्यम् = अरिक्तं, स्वकार्यमाचर, बहिर्गच्छेति यावत् । साम्प्रतम् = इदानीं, मक्षिकाणामभावो निर्मक्षिकं, = जनशून्यमिति यावत् । पादपानां छायासु विरचितेन वितानेन सनाथे—

पच्छाया-विरचितवितान-सनाथे शिलातले उपविशतु भवान्; यावदहमपि सुखासीनो भवामि।

[किदं भअदा णिम्मक्खिअं; ता इमस्सिं यादवच्छाआ-विरइद-विदाण-सणाहे सिलाअले उववसदु भवं; जाव अहम्पि सुहासीनो होमि]

राजा—गच्छाग्रतः।

विदूषक—एतु एतु भवान्।

[एदु एदु भव]

(उभौ—परिक्रम्योपविष्टौ—)

राजा—सखे! माधव्य!

---

पादपच्छायाविरचितवितानसनाथे = वृक्षच्छायाकृतोल्लोचमनोहारिणि, "अस्त्री वितानमुल्लोच" इत्यमरः, "चन्दवा" इति भाषा। शिलातले = शिलापट्टे, सुखमासीनः—सुखासीनः = सुखोपविष्टः,। अग्रतो गच्छ = मार्गं प्रदर्शय कुञ्जशिलातलस्य, एतु = मत्पृष्ठत आयातु। परिक्रम्य = किञ्चिद्गत्वा, उपविष्टौ = वल्लीमण्डपसनाथे शिलाखण्डे इति शेषः।

राजेति। इत आरभ्य द्वितीयः प्रतिमुखसन्धिः प्रारभ्यते, स च तृतीयाङ्कसमाप्तिपर्यन्तं भविष्यति। तल्लक्षणं रसार्णवे—

"बीजप्रकाशनं यत्र दृश्यादृश्यतया भवेत्, तत्स्यात्प्रतिमुखम्"—इति। धनिकोऽपि—

बिन्दु-प्रयत्नानुगमादङ्गान्यस्य त्रयोदश।

विलासः, परिसर्पश्च, विधुतं, नर्म-शर्मणी।

नर्मद्युतिः, प्रगमनं, निरोधः, पर्युपासनं।

"वज्रं, पुष्पमुपन्यासो, वर्णसंहार इत्यपि"—इति।

तत्र बिन्दुलक्षणं—"प्रयोजनानां विच्छेदे यदविच्छेदकारणम्।

यावत्समाप्तिं बन्धस्य स बिन्दुरिति सञ्ज्ञितः",—इति भरते। प्रकृतं च मृगयागुणदोषवर्णनप्रसङ्गेन विच्छिन्नस्य प्रयोजनस्य—"अनवाप्तचक्षु

अनाप्तचक्षुःफलोऽसि; येन त्वया द्रष्टव्यानां परं न दृष्टम् ।

विदूषकः—ननु भवानेव मे अग्रतो वर्त्तते ।

[ णं भवज्जेव मे अग्गदो वट्टदि ]

राजा—सर्वः खलु कान्तमात्मानं पश्यति, अहन्तु तामेवाश्रमललामभूतां शकुन्तलामधिकृत्य ब्रवीमि ।

विदूषकः—(स्वगतम्—) भवतु, नास्य प्रश्रयं वर्द्धयिष्यामि, (प्रकाशम्—) भोः ! यदि सा तपस्विकन्यका अनभ्यर्थनीया; तत् किं तया दृष्टया ? ।

---

फलोऽसि"—इत्यादिना पुनः प्रवर्त्तनाद्बिन्दुरयम् । प्रयत्नलक्षणमपि भरते—

"अपश्यतः फलप्राप्तिं यो व्यापारः फलं प्रति । परं चौत्सुक्यगमनं 'प्रयत्नः' स प्रकीर्त्तितः"—इति । यथा "—राजा—'तपस्विभिः परिज्ञातोऽस्मि" 'केनापदेशेनाश्रमे व्रजामः' इत्यादिः । केचित्तु—द्वितीयाङ्कप्रारम्भादेव प्रतिमुखं–कथयन्ति ।

अनाप्तेति । अनाप्तं–चक्षुषः फलं येनासौ = अनधिगतनयनसाफल्यः, द्रष्टव्यानां = दर्शनीयवस्तूनामपि, परम् = उत्कृष्टं, शकुन्तलारूपम् , भवानेवेति । त्वत्तोऽधिकं सुन्दरस्यासम्भवात्कथमुच्यते, द्रष्टव्यानां परं न दृष्टमिति, भवत एव तथात्वेन मया दर्शनादिति भावः । सर्वः = सकलोऽपि लोकः, कान्तं = सुन्दरं, पश्यति = मनुते । ललामभूतां = प्रधानभूतां, भूषणीभूतां, "ललामं—पुच्छपुण्ड्राश्वभूषाप्राधान्यकेतु"ष्वित्यमरः । शकुन्तलामधिकृत्य = तां विषयीकृत्यैव—द्रष्टव्यानां परं न दृष्टमित्युक्तं, न त्वात्मनं तथा मत्वेत्याशयः ।

अस्य = दुष्यन्तस्य, प्रश्रयम्=अनुरागातिशयं, "प्रश्रय-प्रणयौ समौ"—इत्यमरः, अनभ्यर्थनीया = न प्रार्थनीया ।

[ भोदु, ण से पस्सअं वड्ढइस्सं । भो ! जइ सा तवस्सिकण्णआ अणब्भत्थणीआ, ता किं ताए दिट्ठआए ? ]

**राजा**—धिङ्मूर्ख !—

निवारितनिमेषाभिर्नेत्रपङ्क्तिभिरुन्मुखः ।
नवामिन्दुकलां लोकः केन भावेन[1] पश्यति ? ॥८॥

न च परिहार्य्ये वस्तुनि दुष्यन्तस्य मनः प्रवर्त्तते ।

**विदूषकः**—तत् कथय ।

[ ता कधेहि ]

**राजा**—

ललिताप्सरोभवं किल मुनेरपत्यं तदुज्झिताधिगतम् ।
[2]अर्कस्योपरि शिथिलं च्युतमिव नवमालिकाकुसुमम् ॥९॥

निवारितेति । निवारितो निमेषो यासु ताभिः—निवारितनिमेषाभिः = निमेषशून्याभिः, नेत्राणां पंक्तिभिः, नेत्रपंक्तिभि = लोचनराजिभिः, उत् ऊर्ध्वं मुखं यस्यासौ—उन्मुखः = उद्ग्रीवः सन् , नवाम् = अभिनवोदितास् , इन्दोः कलाम्—इन्दुकलां = चन्द्रलेखां, केन भावेन = केन मनोरथेन, पश्यति = दृष्ट्वा मोदते ? न केनापीत्यर्थः । यथा—चन्द्ररेखां दृष्ट्वा सहजा प्रीतिर्लोकस्य जायते, तथाऽस्माकमपि अभिसन्धिशून्यैव स्नेहप्रवृत्तिरित्युत्तराशयः, [अप्रस्तुतप्रशंसा, दृष्टान्त इति केचित् , अनुप्रासश्च] ॥८॥

परिहार्ये = क्षत्रपरिग्रहायोग्ये, ललितेति । शिथिलं=श्लथम् , अत एव —अर्कस्य = मन्दाराख्यपादपस्य, उपरि, च्युतं = पतितं, नवमालिकायाः = सप्तलायाः, कुसुममिव = पुष्पमिव, किल = प्रसिद्धमेतत् ,—ललितायाः =

१ "भावः सत्ता स्वभावाभिप्रायचेष्टात्मजन्मसु"—इत्यमरः ।
२ "अर्कोऽर्कपर्णे स्फटिके रवौ ताम्रे" इति मेदिनी ।

**विदूषकः**—(विहस्य—) भोः ! यथा पिण्डीखर्ज्जूरैरुद्वेजितस्य तिन्तिड्यां श्रद्धा भवति तथा अन्तःपुरस्त्रीरत्नपरिभोगिनो भवत इयं प्रार्थना ।

[ भो ! जधा पिण्डीखज्जूरेहिं उव्वेजिदस्स तिन्तिडीए सद्धा भोदि, तधा अन्तेउर-इत्थिआरअणपरिभोइणो भअदो इअं पत्थणा ]

**राजा**—सखे ! तावदेनां न जानाति, येन त्वमेवमवादीः ।

**विदूषकः**—तत् खलु रमणीयं नाम, यत् भवतोऽपि विस्मयमुत्पादयति ।

[ तं क्खु रमणीअं णाम, जं भअदोवि विह्मअं उप्पादेति । ]

---

निकामरमणीयायाः, अप्सरसः = मेनकायाः, भवः = उत्पत्तिर्यस्य तत्—ललिताप्सरोभवं, तया = अप्सरसा उज्झितं = परित्यक्तं, सत्—अधिगतम्—तदुज्झिताऽधिगतम् = मेनकात्यक्तं सत्प्राप्तम्, अत एव—मुनेरपत्यम् = कण्वदुहिता, "सुतः पुत्रः स्त्रियान्त्वमी—आहुर्दुहितरं सर्वेऽपत्यं तोकं तयोः समे"—इत्यमरः । एवञ्च पालकत्वादेव कण्वस्य शकुन्तलापितृत्वं, न तु तदात्मजेयमिति स्वयोग्यत्वमस्यां प्रकटितम् । [ कुसुममिवेत्युपमा, अनुप्रासश्च ] ॥९॥

**विहस्येति** । वनेऽस्मिन् क्व विशिष्टस्त्रीरत्नसम्भव इति, अन्तः पुरगतरमणीयरमणीरत्नसम्भोगवतोऽप्यन्यत्र बद्धाभिलाषितोपहासायैवेति भावः । पिण्डखर्जूरैः = खर्जूरप्रभेदैः, मधुरतरैः, उद्वेजितस्य, तिन्तिड्याम् = अम्लिकायाममधुरायां, श्रद्धा = अभिलाषः, अन्तःपुरे यानि स्त्रीरत्नानि, तानि—परिभुंक्ते तच्छीलः तस्य = त्रैलोक्यसौन्दर्यशालिप्रमदारत्नभोगशीलस्य, इयं = शकुन्तलाविषयिणी, प्रार्थना = अभिलाषा, अनुराग इति यावत् । मधुरेणोद्विग्नो यथाऽहृद्यमम्लं चिञ्चिकाफलं बहु मन्यते, तथैव त्वयापि शकुन्तला प्रशस्यते इति भावः ।

तत् = तद् वस्तु, रमणीयं नाम = अवश्यमेव रमणीयं भवेत्,

राजा—वयस्य ! किं बहुना—

[1]'चित्ते निवेश्य परिकल्पितसर्वयोगान्
रूपोच्चयेन विधिना विहिता कृशाङ्गी ।

विस्मयं = कौतुकम् , उत्पादयति = जनयति । त्वत्कौतुकात्सौन्दर्यातिशय-शालिनी सेत्यनुमिनोमीति भावः, बहुना = अनल्पजल्पनेन ।

चित्त इति । धातुः = विधेः, विभुत्वं = निर्माणकौशलं, तस्याः = शकुन्तलायाः, वपुश्च = अतुलसौन्दर्यसारसमुज्ज्वलं शरीरञ्च, अनुचिन्त्य = विभाव्य, विमृशतो, मे = मम,—विधिना = ब्रह्मणा, परिकल्पिताश्च ते सर्वे योगाश्च तान्—परिकल्पितसर्वयोगान् = अद्य यावद्ब्रह्मणा ये ये निर्माणयोगा अनुभूताः तान् सर्वानेव निर्माणसमर्थसिद्धयोगान्, चित्ते=स्वान्ते, निवेश्य= विभाव्य, बुद्ध्युपारूढान् कृत्वा, रूपाणामुच्चयः, तेन—रूपोच्चयेन = सौन्दर्य-लावण्यादिराशिना, विहिता = समुत्पादिता, कृशाङ्गी = तनुतरगात्रयष्टिः, अपरा = अत्युत्कृष्टा—अद्य यावदनिर्मिता, स्त्री-रत्नमिव,—स्त्रीरत्नं, तस्य सृष्टिः—स्त्रीरत्नसृष्टिः = प्रमदारत्नसृष्टिः, सा = सेयं शकुन्तला,—इति प्रति-भाति = प्रतिभासते ।

अन्योऽपि कुशलः शिल्पी,—आत्मनः सर्वतोऽनुभूतैः सिद्धप्रयोगैः महता संरम्भेण विशिष्टसामग्रीसम्भारात्सारतरमाकृष्य पूर्वकल्पितस्वशिल्प-जालादुत्कृष्टं वस्तु,—सम्पादयति; तथैव भगवान् प्रजापतिरपि सकललोक-सर्जनलब्धानुभूतिविशेषान्महता बुद्धियोगेन स्मारं स्मारं चित्रान्योगानिमां निर्ममे, कथमन्यथा जगदतिशायिरूपसम्पदस्तस्याः सृष्टिर्ब्रह्मणा कर्तुं शक्येत, अद्य यावदीदृशसृष्टेस्तेनाकल्पनादिति शकुन्तलायाः सर्वतो वैशिष्ट्यं ध्वनितम् ।

१ "चित्रे निवेश्य परिकल्पितसत्त्वयोगा, रूपोच्चयेन विधिना मनसा कृता नु"—पा० ।

स्त्रीरत्नसृष्टिरपरा प्रतिभाति सा मे
धातुर्विभुत्वमनुचिन्त्य वपुश्च तस्याः ॥१०॥

विदूषकः—सव्वंथा प्रत्यादेशः खलु सा रूपवतीनाम् ।
[ सव्वधा पच्चादेसो क्खु सा रूववदीणं ]

राजा—इदञ्च मे मनसि वर्त्तते—

अनाघ्रातं पुष्पं, किसलयमलूनं कररुहै-
रनाविद्धं रत्नं, मधु नवमनास्वादितरसम् ।
अखण्डं पुण्यानां फलमिव च तद्रूपमनघं
न जाने भोक्तारं कमिह समुपस्थास्यति विधिः॥११॥

---

'चित्रे निवेश्ये'त्यादि पाठे तु–चित्रे = प्रतिरूपके, निवेश्य = आलिख्य, परिकल्पितसत्त्वयोगा = आहितप्राणा, मनसैव ब्रह्मणा कृता, न तु हस्तादिना, हस्तादिस्पर्शे हि नेदृशमनिन्द्यं कोमलत्वसीमातिगं रूपं सम्भवेदित्यर्थो बोध्यः। 'रूपं स्वभावे सौन्दर्ये' इति मेदिनी, "योगः सन्नहनोपायध्यानसङ्गति-युक्तिषु"–इत्यमरः । [ अपरा–सकलस्त्रीसृष्टिविलक्षणेत्यभेदे भेदारोपात्–अभेदे भेदरूपातिशयोक्तिः । श्रुति–वृत्त्यनुप्रासौ । पूर्वार्द्धवाक्यार्थे उत्तरार्ध-वाक्यार्थस्य हेतुत्वात्काव्यलिङ्गञ्च, अनेन गुणकीर्त्तनं नाम नाट्यलक्षण-मुक्तम् । ] ॥ १० ॥

यद्येवं तर्हि—सर्वथा = रूपेण, लावण्येन, गुणैश्च सर्वतो भावेन, रूपवतीनां = सुन्दरीणां वाणिनीनां, प्रत्यादेशः = प्रत्याख्यानं, रूपगर्वस्ये-त्यर्थाद्बोध्यं, "प्रत्यादेशो निराकृतिः"–इत्यमरः ।

इदम् = इत्थं, वर्त्तते = विचारो जायते, तमेवाह–अनाघ्रातमिति । न आघ्रातम्–अनाघ्रातम् = अकलितघ्राणसम्पर्कम्, अकृतोपभोगं, पुष्पमिव, [ एतेन परोपमर्दाभावादखण्डितसौन्दर्यामोदशालित्वं ध्वन्यते ] कररुहैः =

**विदूषकः**—तेन हि लघु-लघु गच्छतु भवान्, मा याव सा कस्यापि तपस्विन इङ्गुदीतैलचिक्कणशीर्षस्य हस्ते निपतिष्यति।

[ तेण हि लहुं लहुं गच्छदु भवं; मा जाव सा कस्सवि तवस्सिणो इङ्गुदीतेल्लचिक्कणसीसस्स हत्थे णिवडिस्सदि ]

**राजा**—परवती खलु तत्रभवती, न च सन्निहितगुरुजना-

नखैः, अलूनम् = अच्छिन्नं, किसलयमिव = पल्लवमिव, एतेनाक्रान्त-मुपभोगवैरूप्यशून्यत्वञ्च ध्वनितम्। अनाविद्धम् = अखण्डितं, दोपले-नाकलितं वा, रत्नमिव, न आस्वादितो रसो यस्य तत्—अनास्वादितरसम् अगृहीतास्वादं, नवं = सद्यःसमानीतं, तेन रजोदोषलेशसम्पर्कराहित्यं हृद्यत्वञ्च ध्वन्यते। मधु इव = क्षौद्रमिव, पुण्यानां = सुकृतानाम् अखण्डं = सम्पूर्णं, फलमिव = परिपाक इव, तेनात्यन्ताभिलषणीयः व्यज्यते। अनघं = निष्कलङ्कं, निर्दोषं, मनोज्ञम्, "अनघो निर्मलाऽपा-मनोज्ञेषु च भेदव"दिति विश्वः। च, तस्या शकुन्तलाया रूपं = सौन्दर्यं लावण्यञ्च, इह = जगति, कं भोक्तारं = कं भाग्यवन्तं भोगशीलं पुरुषं विधिः = दैवम्, उपस्थास्यति = उपनेष्यति, अन्तर्भावितण्यर्थः, कस्य भोगाय कल्पयिष्यति, इति, न जाने = न वेद्मि ? [मालोपमा, श्रुतिवृत्त्यनु-प्रासौ, परिकरालङ्कारश्च, श्लोकाभ्यामाभ्यां गुणकीर्त्तनं नाम नाट्यलक्षणञ्च- "गुणानां कीर्चनं यत्तु तदेव गुणकीर्त्तन"मिति विश्वनाथोक्तेः।] ॥११॥

तेन = यदीदृशं सकलातिगं सौन्दर्यं तदा, लघु—लघु = द्रुततरं, "लघु क्षिप्रमरं द्रुत"मित्यमरः—यावत्—, 'इङ्गुदीनां तैलेन चिक्कणं शीर्षं यस्य तस्य—इङ्गुदीतैलचिक्कणशीर्षस्य = तापसपादपफलतैललिप्तोत्तमाङ्गस्य। हस्ते निपतनं = विवाहः। येषामिङ्गुदीतैलेन केशप्रसाधनं, तेषां का कथा ऽन्यभूषणसम्पर्चोरिति तत्रानादरः सूच्यते। परवती = परतन्त्रा, तत्र-भवती = तपस्विनी, सन्निहितो गुरुजनो यस्याः सा तथा न, एवञ्च सहसा विवाहमङ्गलसम्भव इत्याशयः, चित्तरागः = अनुरागः।

१ इङ्गुदी = 'हिंगोट' इति भाषा।

विदूषकः—अथ तवोपरि कीदृशोऽस्याः चित्तरागः ? ।

[ अध तुह उवरि कीदिसो से चित्तराओ ]

राजा—वयस्य ! स्वभावादेवाप्रगल्भास्तपस्विकन्यकाः,

तथापि तु,—

अभिमुखे मयि संहृतमीक्षितं,
हसितमन्यनिमित्तकथोदयम् ।
विनयवारितवृत्तिरतस्तया
न विवृतो मदनो, न च संवृतः ॥१२॥

विदूषकः—(विहस्य—) किं दृष्टमात्रेणैव भवतोऽङ्क-

---

अप्रगल्भाः = अनुरागप्रकाशनकौशलशून्याः तथापि = एवं वस्तुस्थितावपि, तु = पुनः, तया द्वद्गतो भावः किञ्चित्सूचितः, किञ्चिच्च संवृत इत्यग्रिमश्लोकेन सम्बध्यते । अभिमुख इति । मयि अभिमुखे = सम्मुखं संस्थिते, तया—ईक्षितम् = विलोकनं, संहृतम् = पराङ्मुखं कृतम्, एतेन शृङ्गारलज्जा—प्रकटिता । किञ्च—अन्येन—निमित्तेन = हेतुना कथाया वाग्व्यवहारस्य उदयो यत्र तत्—अन्यनिमित्तकथोदयं यथा स्यात्तथा = कथान्तरव्याजेन, तया-हसितं = हसनं कृतम् , एतेन अनुरागः सूचितः । अतः—विनयेन वारिता वृत्तिः = प्रसरो यस्यासौ—विनयवारितवृत्तिः = लज्जावरुद्धप्रसरः, मदनः = कामः, न विवृतः = न प्रकटीकृतः, नच संवृतः=न निगूहितः, अन्यनिमित्तकथादिभिर्हसितादिभिश्च स्वानुरागप्रकटनात् । मुग्धात्वेन निगूहितोऽपि भावो हसितादिभिः स्फुटीकृतः । [ प्रकटनाप्रकटनयोरुक्तेर्विरोधो मुग्धात्वेन परिहारश्चेति — विरोधाभासोऽलङ्कारः ] ॥१२॥

दृष्टमात्रेणैव = अवलोकनादेव, अङ्कमारोहतु = त्वामभिसरतु, शनैः

मारोढुं ?" [ किं दिट्ठिमेत्तेण ज़्जेव भअदो अङ्कआरोहदु ]

राजा—सखीभ्यां मिथः प्रस्थाने पुनः सलीलया तत्र भवत्या मयि भूयिष्ठमाविष्कृतो भावः, तथाहि—

दर्भाङ्कुरेण चरणः क्षत इत्यकाण्डे,
तन्वी स्थिता कतिचिदेव पदानि गत्वा ।
आसीद्विवृत्तवदना च विमोचयन्ती
शाखासु वल्कलमसक्तमपि द्रुमाणाम् ॥१३॥

---

शनैः सर्वं भविष्यतीति भावः, सखीभ्यां=सखीभ्यां सह, प्रस्थाने = गमने, सलीलया = लीलाऽञ्चितलोललोचनया, मिथः = "रहसि, मिथोऽन्योऽन्यं रहस्यपी"त्यमरः । भूयिष्ठं = बहुलम्, आविष्कृतः = प्रकटितः, भावः = चित्तानुरागः, सख्योरग्रे गमनाद्रहस्यलाभः ।

दर्भेति । तन्वी = कृशतनुः, शकुन्तला, कतिचिदेव पदानि = किञ्चिद् दूरं, गत्वा = चलित्वा, दर्भस्याङ्कुरेण—दर्भाङ्कुरेण = कुशाग्रसूचिकया चरणः = पादः, क्षतः = विद्धः, इति = इत्युक्त्वा, अकाण्डे = अनवसरेऽपि, "काण्डं चावसरे बाणे" इति धरणिः । कुशाग्रेण चरणक्षताभावेऽपि, स्थिता = विलम्बितगमनाऽभूत्, च = किञ्च, द्रुमाणां=तरूणां, शाखासु = विटपेषु, असक्तमपि = संलग्नमपि, वल्कलं = वल्कवसनं, विवृत्तं वदनं यस्याः सा—विवृत्तवदना=पराचीनमुखी, मत्सम्मुखीनेति यावत्, विमोचयन्ती = विश्लेषयन्तीव, आसीत् = स्थिता । कुशसूचीव्यधनाभावेऽपि तद्व्याजेन वल्कलस्य शाखास्वनासक्तस्यापि विमोचनच्छलेन च रुद्धगमना स्वाशयं प्राकाशयदिति भावः । कामशास्त्रेषु—"विलम्बश्च पथि व्याजात्परावृत्त्यापि दर्शनं"मित्यादिना—विलम्ब्य गमनादेरनुरागलक्षणतयाऽभिधानात् । [अनुप्रासः हेतुश्चालङ्कारौ] ॥१३॥

विदूषकः—गृहीतपाथेयः कृतोऽसि त्वया, अतोऽनुरक्तं तपोवनमिति तर्कयामि¹ । [गहीदपाधेओ क्किदोसि तए, अदो अणुरत्तं तपोवणं त्ति तक्केमि ।]

राजा—सखे ! तपस्विभिः कैश्चित् परिज्ञातोऽस्मि, चिन्तय तावत्केनापदेशेन पुनराश्रमपदं गच्छामः ।

विदूषकः—कोऽपरोऽपदेशः; ननु भवान् राजा ।

[ को अवरो अवदेसो; णं भवं राआ ]

राजा—ततः किम् ? ।

---

गृहीतः पाथेयो येनासौ—गृहीतपाथेयः = स्वीकृतशम्बलः, तया = शकुन्तलया । प्रस्थिताय पथिकाय बान्धवा उत्साहवर्धनार्थं पाथेयं प्रयच्छन्तीति—लोकस्थितिः । अनुरागसूचनेन च सा भवन्तमुत्साहयतीवेत्याशयः । त्वया तपोवनम् = आश्रमपदम् , उपवनं = क्रीडाकाननं, कृतं = निष्पादितं, परस्परानुरागाङ्कुरोत्पत्तेरनुरूपमुपवनमेव न तपोवनमिति तादृशानुरागचर्चाविष्करणादिभिरिदमाश्रमपदमुपवनतां नीतमिति शमप्रधानस्य तपोवनस्यानुरागप्रधानतेदानीं जातेत्याशयः ।

परिज्ञातः = महाराजोऽयं दुष्यन्त इति तैर्ज्ञातोऽस्मि, अत एव "नेपथ्ये—संनिहितो मृगया विहारी राजा दुष्यन्त" "—" इत्यादि तपस्विभिर्भाषितम् । अतो विना प्रयोजनं गमनमिदानीं न सम्भाव्यते, राज्ञस्तथाऽनौचित्यात् , अपदेशेन = व्याजेन, "व्याजोपदेशो लक्ष्यञ्चे" त्यमरः । तावता किं निष्पन्नं ? । नीवाराणां = तृणधान्यानां, षष्ठं भागं = राजदेयं करस्वरूपं षष्ठमंशं, तदुक्तं मनुना—"धान्यानामष्टमो भागः षष्ठो द्वादश एव वे"ति ।

---

१ 'कृतं त्वयोपवनं तपोवनमिति पश्यामि'। [ किदं तुए उववणं तपोवणं त्ति पेक्खामि ] पा०

विदूषकः—नीवारषष्ठभागं तापसा मे उपहरन्तु—इति।

[ णीवारच्छट्ठभाअं तावसा मे उवहरन्तु त्ति ]

राजा—मूर्ख ! अन्यमेव भागधेयमेते तपस्विनो मे निर्व्व-
पन्ति, यो रत्नराशीनपि विहायाभिनन्द्यते । पश्य—

यदुत्तिष्ठति वर्णेभ्यो नृपानां क्षयि तद्धनम् ।
तपःषड्भागमक्षय्यं ददत्यारण्यका हि नः ॥१४॥

( नेपथ्ये )

हन्त ! सिद्धार्थौ स्वः ।

---

अन्यं = धान्यषष्ठभागातिरिक्तं तपोरूपं भागधेयं = करं, "भाग-धेयः करो बलिः—"इत्यमरः, निर्वपन्ति = समर्पयन्ति । रत्नानां राशीनपि विहाय = महार्हरत्नजातमप्यविगणय्य, अभिनन्द्यते = प्रशस्यते । नीवार-षष्ठांशापेक्षयाऽभिनन्दनीयं पुण्यभागं मे स्वयमेव वितरन्ति, अतो रत्नप्रदा-त्काचयाचनमिव तवेदं नीवारभागयाचनमिति भावः । पश्य = विचा-रय । यदुत्तिष्ठतीति । वर्णेभ्यः = क्षत्रियवैश्यादिभ्यः, नृपाणां = राज्ञां, यत् = करस्वरूपं, धनं=स्वर्णधान्यादिरूपम् , उत्तिष्ठति = लभ्यते, तत् = धनं, क्षयि = विनाशशीलम् । नः = अस्मभ्यम् , आरण्यकाः = अरण्ये भवास्तापसाः, क्षेतुं शक्यं—क्षय्यं, न क्षय्यम् , अक्षय्यम् = अविनाशि, तपसः षष्ठो भागस्तं—तपःषड्भागं ददति = वितरन्ति । [ अत्र साधारण-धनापेक्षया सुकृतांशस्याधिक्येन वर्णनाद् व्यतिरेकालङ्कारः, "विलासः सङ्ग-मार्थस्तु व्यापारः परिकीर्त्तित"इत्युक्तेः चिन्तयेत्यारभ्यैतदन्तं विलासो नाम मुखसन्ध्यङ्गमुपदर्शितम् । ] ॥१४॥

सिद्धोऽर्थो ययोस्तौ—सिद्धार्थौ = कृतार्थौ, स्वः = भवामः । हन्तेति हर्षेऽव्ययं, "हन्त ! हर्षेऽनुकम्पायां वाक्यारम्भविषादयोरि"त्यमरः । प्रशान्तः स्वरो येषान्तैः—प्रशान्तस्वरैः = शान्तमधुरस्वरैः । प्रतीहारभूमिम् =

राजा—( कर्णं दत्त्वा- ) अये ! प्रशान्तस्वरैस्तपस्विभिर्भवितव्यम् ।

( प्रविश्य दौवारिकः- ) जयतु जयतु भर्त्ता । एतौ द्वौ ऋषिकुमारौ प्रतिहारभूमिमुपस्थितौ ।

[ जअदु जअदु भट्टा । एदे दुवे इसिकुमारआ पडिहारभूमिं उवत्थिदा ]

राजा—अविलम्बं प्रवेशय तौ ।

दौवारिकः—यद्भर्त्ता आज्ञापयति । ( इति निष्क्रम्य, ऋषिकुमाराभ्यां सह पुनः प्रविश्य- ) इत इतो भवन्तौ ।

[ जं भट्टा आण इदो इदो भवन्ता । ]

(उभौ—राजानं विलोकयतः-)

एकः—अहो ! दीप्तिमतोऽपि विश्वसनीयताऽस्य वपुषः । अथवा उपपन्नमेतदस्मिन् ऋषिकल्पे राजनि । कुतः—

अध्याक्रान्ता वसतिरमुनाऽप्याश्रमे सर्व्वभोग्ये,
रक्षायोगादयमपि तपः प्रत्यहं सञ्चिनोति ॥
अस्यापि द्यां स्पृशति वशिनश्चारणद्वन्द्वगीतः
पुण्यः शब्दो मुनिरिति मुहुः केवलं राजपूर्व्वः॥१५॥

---

द्वारदेशम्, "स्त्री द्वार्द्वारं प्रतीहारः"—इत्यमरः । अविलम्बं = सत्वरं, क्रियाविशेषणम् ।" विलोकयतः = पश्यतः ।

दीप्तिमतोऽपि = तेजस्विनोऽपि, अस्य = दुष्यन्तस्य, वपुषः = शरीरस्य, विश्वसनीयता = विस्रम्भभाजनता, उपपन्नं = सङ्गतम् , एतत् = तेजोविश्वासयोरेकत्रावस्थानम् , ईषदसमाप्त ऋषिः—ऋषिकल्पः; तस्मिन्-ऋषिकल्पे = महात्मनि, मुनिसदृशे । मुनिसादृश्यमेव दर्शयति—अध्याक्रान्तेति । अनेनाऽपि = दुष्यन्तेनाऽपि, सर्वैश्चतुर्भिरप्याश्रमिभिर्ब्रह्मचार्यादिभिः

द्वितीयः—सखे ! अयं स वलभित्सखो दुष्यन्तः ?

प्रथम—अथकिम् ।

द्वितीयः—तेन हि—

नैतच्चित्रं यदयमुदधिश्यामसीमां धरित्री-
मेकः कृत्स्नां नगरपरिघप्रांशुबाहुर्भुनक्ति ।
आशंसन्ते समितिषु सुराः सक्तवैरा हि दैत्यै-
रस्याधिज्ये धनुषि विजयं पौरुहूते च वज्रे ॥१६॥

---

भोग्ये = समाश्रयणीये, आश्रमे = गृहस्थाश्रमे, वसतिरध्याक्रान्ता = वासो विधीयते । मुनिभिरपि सर्वैश्छात्रातिथ्यादिभिराश्रयणीये तपोवने आश्रमपदे निवासो विधीयते, रक्षायाः = सर्वभूतपरिरक्षणस्य, प्रजापालनस्य—योगात्=समनुष्ठानायासात्, अयमपि=राजाऽपि, न केवलं मुनिय एव, प्रत्यहं= प्रतिदिनं, तपः = पुण्यं, सञ्चिनोति = अर्जयति । मुनयोऽपि—रक्षाऽर्थम्= इन्द्रियान्तःकरणादिनियन्त्रणार्थं, योगात् = समाध्यादेः, तपोऽर्जयन्ति । वशिनः = इन्द्रियविजयिनः, अस्याऽपि = दुष्यन्तस्यापि, न केवलं मुनीनामेव, मुहुः = भृशं, चारणानां द्वन्द्वैर्गीतः—चारणमिथुनगीयमानः, पुण्यः = पवित्रः, केवलं राजपूर्वः=केवलं राजशब्दविशिष्टः, मुनिरिति शब्दः,=राजर्षिरिति शब्दः, द्यां = स्वर्गं, गगनञ्च, स्पृशति = व्याप्नोति । [व्यतिरेकालङ्कारः, उपमानादुपमेयस्येषन्न्यूनताया वर्णनात् । श्लेषश्च] ॥१५॥

वलभिदः सखा—वलभित्सखः = वासवमित्रं, "वलभिद्वज्री वासवो वृत्रहा वृषे"त्यमरः । अयं सः ? = इन्द्रमित्रतया प्रसिद्धो दुष्यन्तः किमयमेवेति प्रश्नाशयः । अथकिमित्युत्तरम्, अयमेवेत्युत्तरवाक्यार्थः ।

नैतदिति । यत्,—नगरस्य परिघ इव प्रांशू बाहू यस्यासौ—नगरपरिघप्रांशुबाहुः = पुरद्वारागर्लादीर्घपीवरभुजदण्डः, अयम् एकः = एकाकी खल्वयं

**उभौ**—( उपगम्य- ) विजयस्व राजन् !

**राजा**—( आसनादुत्थाय- ) अभिवादये भवन्तौ ।

**उभौ**—स्वस्ति भवते ( इति फलान्युपहरतः- )

**राजा**—( सप्रणामं परिगृह्य- ) आगमनप्रयोजनं श्रोतुमिच्छामि ।

**उभौ**—विदितो भवानिहस्थस्तपस्विनाम् । ते च भवन्तमभ्यर्थयन्ते ।

---

दुष्यन्तः, उदधिरेव श्यामः, [ यद्वा—श्यामश्चासावुदधिश्चोदधिश्यामः, राजदन्तादेराकृतिगणत्वाच्छ्यामशब्दस्य परप्रयोगः ] सीमा यस्याः सा—ताम्—उदधिश्यामसीमां = समुद्रश्यामायमानसीमां, [ समुद्रमेखलां, ] [1]कृष्णसागरपर्यन्तामिति वाऽर्थः । समग्रां = निखिलां, धरित्रीं = भुवं, भुनक्ति = पालयति,—एतन्न चित्रम् = न—आश्चर्यकारकम् । हि = यतः, दैत्यैः = दानवैः, सक्तवैराः = बद्धवैराः, देवाः = सुराः, अपि—समितिषु = युद्धेषु, अस्य दुष्यन्तस्य अधिज्ये = समौर्वीके, धनुषि = कोदण्डे, पुरुहूतस्येदं—पौरुहूतं—तस्मिन् = इन्द्रसम्बन्धिनि, वज्रे=कुलिशे, च, विजयं = जयम्, आशंसन्ते = अभिलषन्ति ।

न केवलं निखिल भूवलयपालकोऽयं, किन्तु—महेन्द्रसमपराक्रमो देवानामपि युद्धेषु साहाय्यमाचरतीति—माहात्म्यातिशयोऽस्योक्तः । ['अनेन भुजबलात् सर्वे शत्रवो जिता' इति कारणे वक्तव्ये कार्यमात्रं भूवलयविजय एवोक्त इति—पर्यायोक्तम् । 'नैतच्चित्र'मित्यर्थं प्रति उत्तरवाक्यार्थस्य हेतुत्वात्काव्यलिङ्गञ्च । समुच्चयः, उपमा च ] ॥१६॥

उपगम्य = समीपमुपसृत्य, अभिवादये = प्रणतोऽस्मि, उपनयतः = अर्पयतः । इहस्थः = आश्रमपरिसरे स्थितः, तपस्विभिः = आश्रमवासिभिर्मुनिभिः, अभ्यर्थयन्ते = प्रार्थयन्ते, असान्निध्यात् = अनुपस्थित्या, इष्टि-

---

[1] कृष्णसागरः='काला पानी' ।

राजा—किमाज्ञापयन्ति ?

उभौ—तत्रभवतः कण्वस्य कुलपतेरसान्निध्यात् रक्षांसि न इष्टिविघ्नमुत्पादयन्ति; तत्कतिपयदिवसमात्रं सारथिद्वितीयेन भवता सनाथीक्रियतामाश्रम इति ।

राजा—अनुगृहीतोऽस्मि ।

विदूषकः—( अपवार्य– ) एष इदानीं भवतोनुकूलो गलहस्तः । [ एस दाणिं भअदो अणुऊलो गलहत्थो ] ।

राजा—(स्मितं कृत्वा–) रैवतक ! मद्वचनादुच्यतां सारथिः, सबाणकार्मुकं रथमुपस्थापयेति ।

दौवारिकः—यद्देव आज्ञापयति । [ जं देवो आणवेदि । ]

उभौ—( सहर्षम्– )

---

विघ्नम् = यज्ञविघ्नम्, तत् = तस्मात्, कतिपये दिवसा एव–कतिपयदिवसमात्रं = कियन्त्यपि दिनानि, सारथिरेव द्वितीयः-सहायो यस्यासौ तेन, = सारथिसहायेन, सनाथीक्रीयताम् = परिपाल्यताम्, परिजनसम्बन्धे तपोवनोपरोधसम्भवात्सारथिद्वितीयेनेत्युक्तम् ।

अपवार्य, = परावृत्य, तदुक्तं = विश्वनाथेन,—"भवेत्तदपवारितं,—रहस्यं तु यदन्यस्य परावृत्य प्रकाश्यते"—इति । अनुकूलः = अभीष्टः, गलहस्तः = अर्धचन्द्र इव, आयाससाध्यस्याप्यस्याश्रमनिवासस्य भवतोऽभिमतसाधकतयाऽनुकूलगलहस्तता। ग्रीवायां हस्तं दत्त्वाऽभिमतकार्ये योजनं ( बलान्नियोगः– ) प्रकृते गलहस्तः । उपहाससमाचाराद्विदूषकस्येत्थमुक्तिः। मद्वचनादुच्यतां = महाराजदुष्यन्त इत्थमाज्ञापयतीत्युच्यताम् । बाणैः कार्मुकेण च सहितं–सबाणकार्मुकम्, = धनुर्बाणसनाथम् । उपस्थापय =

अनुकारिणि पूर्वेषां युक्तरूपमिदं त्वयि ।
आपन्नाभयसत्रेषु[1] दीक्षिताः खलु पौरवाः ॥१७॥

राजा—( सप्रणामम्- ) गच्छतां भवन्तौ; अहमनुपदमागत एव ।

उभौ—विजयस्व । ( इति निष्क्रान्तौ ) ।

राजा—माधव्य ! अप्यस्ति कुतूहलं शकुन्तलादर्शनं प्रति ? ।

विदूषकः—[2]प्रथममपरिबाधमासीत्; साम्प्रतं राक्षसवृत्तान्तेन सपरिबाधम् । [ पढमं अपरिवाधं आसी; सम्पदं रक्खसवुत्तन्तेण सपरिवाधं । ]

---

आनय । उभौ = तापसौ, 'सहर्षम्' 'ऊचतु'रिति शेषः। अनुकारिणीति—पूर्वेषां = ययातिपुरुप्रभृतिपूर्वनृपाणाम्, अनुकारिणी = सदृशे, त्वयि = श्रीमति, इदं = मुनिवचःपालनम्, युक्तरूपम् = अतिशयेन युज्यते, खलु = निश्चयेन, आपन्नानां = विपन्नानाम्, अभयमेव = अभयदानमेव सत्रं = यज्ञः, तेषु विपन्नरक्षणयज्ञेषु 'सत्रमाच्छादने यज्ञे इत्यमरः, पुरोरपत्यानि पौरवाः = पुरुवंश्याः, दीक्षिताः = धृतनियमाः । [ काव्यलिङ्गं, रूपकमर्थान्तरन्यासश्च । ] ॥१७॥

पदमनु-लक्ष्यीकृत्य—अनुपदं = पादन्यासचिह्नमनुसरन्, आगत एव = आगन्तुं प्रवृत्त एव, आदिकर्मणि क्तः । अप्यस्तीति ।।अपिरत्र प्रश्ने । प्रथमम् = इतो राक्षसवृत्तश्रवणात्पूर्वं, सपरीवाहं = विपुलं [वेगेन विपुलं वहन्, प्रणाल इव कौतुकप्रवाह आसीदित्याशयः । ] इदानीं = तापसमुखाद्राक्षसवृत्तान्तश्रवणाद्, बिन्दुरपि = अल्पमात्रमपि, नेदानीं तापसाश्रमे गन्तुमभिलषामीत्याशयः, पाठान्तरे—अपरिबाधम् = निरर्गलम्, सपरिबाधम् =

---

१ सत्रं='छेत्र' इति भाषा ।
२ "प्रथमं सपरीवाहमासीत् इदानीं राक्षसवृत्तान्तेन बिन्दुरपि नावशिष्टः" पा०

राजा—मा भैषीः, ननु मत्समीप एव वर्त्तिष्यसे।

विदूषकः—एष तव रथचक्ररक्षीभूतोऽस्मि, यदि न कोऽपि आगत्य विघ्नं करोति। [एस तुह रध-चक्क-रक्खीभूदोह्मि, जइ ण कोवि आअच्छिअ विग्घं करेदि।]

दौवारिकः—(प्रविश्य-) जयतु जयतु भर्त्ता, सज्जो रथो भर्तुर्विजयप्रयाणमपेक्षते। एष पुनर्नगराद्देवीनामाज्ञप्तिहरः करभक आगतः। [जअदु जअदु भट्टा। सज्जो रधो भत्तुणो विजअप्पआणं अवेक्खदि। एस उस णअरादो देवीनं आणत्तिहरो करभओ आअदो।]

राजा—(सादरम्-) किमम्बाभिः प्रेषितः?।

दौवारिकः—अथ किम्। [अध इं।]

राजा—तेन हि प्रवेश्यताम्।

दौवारिकः—तथा। (इति निष्क्रम्य पुनः करभकेण सह प्रविश्य-) करभक! एष भर्त्ता उपसर्पतु भवान्। [तह, करभअ! एसो भट्टा, उवसप्पदु भवं।]

करभकः—(उपसृत्य, प्रणम्य च-) जयतु जयतु भर्त्ता। देव्य आज्ञापयन्ति। [जअदु जअदु भट्टा। देवीओ आणवेन्ति]

राजा—किमाज्ञापयन्ति?

---

अवरुद्धमित्यर्थो बोध्यः। मत्समीप इति। एवञ्च मदभिरक्षितस्य कुतस्ते राक्षसाद्भयमित्याशयः। रथचक्रस्य—रक्षीभूतः=रक्षकः, तव पृष्ठतस्तिष्ठामीति भयातिशयो दर्शितः, शूरत्वञ्च साटोपमात्मन उच्यत इति परिहासानुगुण्यमस्य वचसो बोध्यम्। विघ्नं करोतीति। यावन्न कोऽपि तर्जयति माम् तावदहं रक्षक इति—अहो! शौर्यं विदूषकभट्टस्येति—परिहासपेशलं वचो बोध्यमेतत्। सज्जः = सन्नद्धः। भर्त्तुः = महाराजस्य, विजयप्रया-

**करभकः**—आगामिनि चतुर्थदिवसे 'पुत्रपिण्डपालनो नाम उपवासो भविष्यति, तस्मिन् दीर्घायुषाऽवश्यं वयं सम्भावयितव्या—इति । [ आगामिणि चउट्टदिअसे पुत्तपिण्डपालणो णाम उववासो भविस्सदि; तहिं दीहाउणा अवस्सं अह्मे सम्भावइदव्व त्ति ]।

**राजा**—इतस्तपस्विनां कार्य्यम्, इतो गुरुजनाज्ञा, उभयमप्यनतिक्रमणीयम्, तत् किमत्र प्रतिविधेयम् ? ।

**विदूषकः**—भोः ! त्रिशङ्कुरिवान्तरा तिष्ठ । [ भो ! तिसङ्कु विअ अन्तरा चिट्ठ ]।

**राजा**—सत्यमाकुलीभूतोऽस्मि ।—

कृत्ययोर्भिन्नदेशत्वात् द्वैधीभवति मे मनः ।
पुरः प्रतिहतं शैलैः स्रोतः स्रोतोवहां यथा ॥१८॥

णम् = विजयार्थं गमनम्, अपेक्षते = प्रतीक्षते, देवीनां = राजमातृणाम्, आज्ञप्तिं हरति तच्छील—आज्ञप्तिहरः=समाचारवाहकः । अस्माभिः=मातृभिः, अथ किम् = एवमेतत् । प्रवृत्ता पारणा यस्यासौ – प्रवृत्तपारणः = क्रियमाणोपवाससमाप्तिः, प्रारब्धस्योपवासस्य समाप्तिश्चतुर्थे दिवसे भविष्यतीति भावः । सम्भावयितव्याः = तत्रोपस्थित्या परितोषणीयाः । उपवासः प्रारब्ध एव, केवलं तस्य समाप्तिश्चतुर्थेऽह्नि भविष्यतीति उपवासाकरणप्रार्थना नैवायुष्मता कार्येति व्यज्यते पाठान्तरे'–पुत्रदत्तपिण्डेन = कवलेन, पारणा = व्रतसमाप्तिर्यत्रेत्यर्थो बोध्यः । अनतिक्रमणीयम् = अनुल्लङ्घनीयम्, प्रतिविधेयम् = कर्त्तव्यम् ।

अन्तरा = मध्ये, न नगरं गच्छ, न च तपोवनं गच्छेत्याशयः । आकुलीभूतः = व्याकुलः ।

कृत्ययोरिति । कृत्ययोः = कार्ययोः, भिन्नो देशो ययोस्तयोर्भावस्तत्त्वं

१ "प्रवृत्तपारणो नाम" पा०

( विचिन्त्य- ) सखे ! माधव्य ! त्वमप्यम्बाभिः पुत्र इ गृहीतः, स भवानितः प्रतिनिवृत्य तपस्विकार्य्यव्यग्रतामस्माकमा वेद्य तत्रभवतीनां पुत्रकार्य्यमनुष्ठातुमर्हति ? ।

विदूषकः—भोः ! मा राक्षसभीरुकं मामवगच्छ ।

[ भो ! मा रक्खसभीरुअं मं अवगच्छ ]

राजा—( स्मितं कृत्वा- ) भो महाब्राह्मण ! कथमिदं त्वयि सम्भाव्यते ? ।

विदूषकः—तेन हि राजानुज इव गन्तुमिच्छामि ।

[ तेण हि राआणुअ बिअ गच्छिदुं इच्छामि ]

---

तस्मात् – भिन्नदेशत्वादिति = मातृकार्यं राजधान्यां, मुनिकार्थं तपोव इत्येकदाऽनुष्ठानासम्भवादित्याशयः । मे मनः—पुरः = अग्रे, शैलैः = पर्वतैः, = प्रतिहतः = अवरुद्धः, स्रोतोवहां = नदीनां, स्रोतः = प्रवाह यथा = इव, द्वैधीभवति = संशयाकुलो भवति । नदीप्रवाहोऽपि–पर्वतैरव रुद्धो द्विधा भवति । [ उपमा, अतिशयोक्तिश्च ] ॥ १८ ॥

इति=आश्रमपरिसरात्, तपस्विनां कार्येषु व्यग्रस्तस्य भावस्तां–तपस्वि कार्यव्यग्रतां = मुनिजनकार्यसंसक्तताम्, राक्षसैर्भीरुकस्तं = राक्षसभीतं,

यद्यहं राजधानीमभिगच्छामि भवान्मां राक्षसभीतं मन्येत, अतो यदि तथा न मनुते भवान् तदा गच्छामीत्याशयः । महाब्राह्मण ! = ब्राह्मणश्रेष्ठ!, अत्र महाब्राह्मणेति सम्बोधनमुपहासादेव, महाब्रह्मणपदस्य पुण्यजनादि शब्दवद्विपरीतलक्षणया रूढ्या वा निन्दितब्राह्मणपरत्वात्, तदुक्तं "शङ्खे, तैले, तथा मांसे, वैद्ये, ज्यौतिषिके, द्विजे, । यात्रायामथ, निद्रायां महच्छब्दो न दीयते" इति । राजानुजः = राजकनिष्ठभ्रातेव, नन्विति । स्वीकृतावत्रननुः, तपोवनस्योपरोधः—तपोवनबाधा, इति = इति हेतोः अनुयात्रिकान् = सैनिकान्, प्रेषयिष्यामीति = एवञ्च तव राजभ्रातृवद्

राजा—ननु तपोवनोपरोधः परिहरणीय इति सर्वानेवानुयात्रिकांस्त्वयैव सह प्रेषयिष्यामि ।

विदूषकः—( सगर्वम्— ) युवराजोऽस्मि इदानीं संवृत्तः ।

[ जुअराओह्मि दाणिं स वुत्ता ]

राजा—( आत्मगतम्— ) चपलोऽयं ब्राह्मणवटुः कदाचिदिमामस्मत्प्रार्थनामान्तःपुरिकाभ्यो निवेदयेत् । भवत्वेवन्तावद्वक्ष्यामि—( विदूषकस्य हस्तं गृहीत्वा, प्रकाशम्— ) सखे ! माधव्य ! ऋषिगौरवादाश्रमपदं प्रविशामि, न खलु सत्यमेव तापसकन्यायामभिलाषो मे पश्य ।

क्व वयं, क्व परोक्षमन्मथो
मृगशावैः[१] सह वर्द्धितो जनः ।
परिहासविजल्पितं सखे !
परमार्थेनन गृह्यतां वचः ॥ १९ ॥

गमनाभिलाषः सम्भवत्येवेत्याशयः । युवराजः, = राजप्रतिनिधिः । ब्राह्मणवटुः = ब्राह्मणबालको माधव्यः, अस्मत्प्रार्थनाम् , = शकुन्तलाऽनुरागं, आन्तःपुरिकाभ्यः = अन्तः पुरसुन्दरीभ्यः ।

एवन्तावदिति । मनसि किञ्चिद्विभाव्येत्यर्थः । ऋषीणां गौरवात् = मुनिवचनादरात्, आश्रमपदं=तपोवनं, प्रविशामि = गच्छामि, सत्यमेव= वास्तविकः,—पश्य=विचारय ।

क्वेति । क्व वयं = महाकुलीनाः, सम्राट्पदे स्थिताः, परोक्षः मन्मथो यस्यासौ = अज्ञातकामकथः, मृगाणां शावैः = हरिणशिशुभिः, सह, परिवर्द्धितः = पालितः, जनः = शकुन्तलारूपः, क्व, नास्माकमीदृशकर्मणि कथमपि प्रवृत्तिः सम्भाव्यत—इत्याशयः । मृगशावैः सह परिवर्धित इत्य-

१ 'सममेधितो जनः' पा० ।

**विदूषकः**—एवमेत्। [ एवण्णेदं ]

**राजा**—माधव्य! त्वमपि स्वनियोगमनुतिष्ठ, अहमपि तपोवनरक्षार्थं तत्रैव गच्छामि।

( इति निष्क्रान्ताः सर्वे। )

❀ द्वितीयोऽङ्कः ❀

---

नेन मौग्ध्यातिशयः, कामकलाशून्यता च सूचिता। सखे!=मित्र! परिहासेन=उपहासेन, विजल्पितम्, उक्तं वचः = वाक्यं, परमार्थेन = तत्त्वतः [सत्यमेतदिति ] न गृह्यताम् = विभाव्यताम्।

एतेन—शकुन्तलानुरागादिवर्णनं सर्वं मत्कृतं काल्पनिकमासीदित्याशयः। [एवञ्च "संवृत्तिः स्वयमुक्तस्य स्वयं प्रच्छादनं भवे" दिति दर्पणोक्तविवृत्तिर्नाम मुखसन्ध्यङ्गं प्रदर्शितं वेदितव्यम्। विषमोऽलङ्कारः। ] ॥१९॥ एवमेतत् = सत्यमाह भवान्, स्वस्य नियोगः—कार्यम्, राजधानीगमनलक्षणम्, तत्रैव = आश्रमपदे,

इति श्रीगुरुप्रसादशास्त्रिकृतायामभिनवराजलक्ष्मीटीकायां—

द्वितीयोऽङ्कः।

# ❀ तृतीयोऽङ्कः । ❀

( ततः प्रविशति कुशानादाय यजमानशिष्यः )

**शिष्यः**—( विचिन्त्य, सविस्मयम्— ) अहो ! महाप्रभावो राजा दुष्यन्तः; येन प्रविष्टमात्र एवाश्रमं तत्रभवति सारथिद्वितीये राजनि निरुपप्लवानि नः कर्म्माणि संवृत्तानि—

का कथा बाणसन्धाने ज्याशब्देनैव दूरतः ।
हुङ्कारेणेव धनुषः स हि विघ्नान् व्यपोहति ॥१॥

---

## ❀ अभिनवराजलक्ष्मीः ❀

कथान्तरमारभमाणो वस्तुसङ्घटनाय विष्कम्भकनामकमर्थोपक्षेपकमारचयति—तत इति । कुशानादाय = वनात्कुशानादाय, यजमानस्य = यज्ञकर्तुर्मुनेः, शिष्यः = छात्रः, विचिन्त्य = विचारमभिनीय, विस्मयेन सहितं यथा स्यात्तथा—सविस्मयम्—उवाचेति शेषः । महान् प्रभावो यस्य स महाप्रभावः,=महानुभावः, "अनुभावः—प्रभावेपी"त्यमरः, येन = यतः, सारथिद्वितीये = सूतमात्रपरिजने, तत्रभवति = माननीये, राजनि= दुष्यन्ते, आश्रमं = तपोवनं, प्रविष्ट एव प्रतिष्टमात्रं, तस्मिन् प्रविष्टमात्रे = समागतवति, उपप्लवान्निर्गतानि—निरुपप्लवानि = निरुत्पातानि, "उपप्लवः सैंहिकेये विप्लवोत्पातयोरपी"ति—मेदिनी । नः =अस्माकं, कर्माणि = यज्ञादिकार्याणि, संवृत्तानि = निष्पन्नानि । का कथेति । हि = यतः, स = राजा, दूरतः = दूरादेव, धनुषः = कार्मुकस्य, हुङ्कारेणेव = 'हुं'शब्देनेव, ज्यायाः शब्देन = मौर्वीध्वनिना, विघ्नान् = राक्षसादिकृतोपद्रवान्, व्यपोहति = अपसारयति, बाणस्य सन्धाने = शरसन्धाने, का कथा = विघ्नानां कथैव

यावदेतान् वेदिसंस्तरणार्थं दर्भान् ऋत्विग्भ्य उपाहरामि ( परिक्रम्यावलोक्य च, आकाशे- ) प्रियम्वदे ! कस्येदमुशीरानुलेप मृणालवन्ति च नलिनीदलानि नीयन्ते ? ( श्रुतिमभिनीय- ) कथयसि—"आतपलङ्घनाद्बलवदसुस्थशरीरा शकुन्तला, तस्य शरीरनिर्वापणाय"—इति ?

प्रियम्वदे ! यत्नादुपचर्य्यताम्; सा हि तत्रभवतः कुलपते तीयमुच्छ्वसितम्, अहमपि तावद्वैतानिकं शान्त्युदकमस्या गौतमीहस्ते विसर्जयामि ( इति निष्क्रान्तः ) ।

विष्कम्भकः ।

---

विलयं व्रजेदित्याशयः, एवञ्च दुष्यन्तेनानायासेन विघ्ना निरस्ता प्रकटितम् । [उत्प्रेक्षाऽलङ्कारः] ॥१॥

शिष्यः स्वागमनप्रयोजनमाह—यावदिति । एतान् = मद्धस्तस्था वेद्याः संस्तारणायेति—वेदिसंस्तरणार्थं =यज्ञवेदिसमास्तरणार्थं, कुशकण्डि कार्थमिति यावत्, ऋत्विग्भ्यः = होतृभ्यः, यावदुपाहरामि = उपनेष्यामि "यावत्पुरानिपातयो"रिति लट् । परिक्रम्य = किञ्चिच्चलनं नाटयित्व आकाश—इति । रङ्गमध्ये नेपथ्यातिरिक्तं स्थानमाकाश इत्युच्यते । तदु दशरूपके—"किं ब्रवीष्येवमित्यादि विनापात्रं ब्रवीति यत् । श्रुत्वेवानु मप्येकः तत्स्यादाकाशभाषितम्"—इति । कस्य = कस्योपभोगाय, इदं तव हस्तस्थम्, उशीरकल्पितमनुलेपनम्—उशीरानुलेपनम् = वीरणमू कल्पितमङ्गानुलेपनं, नलिनीदलानि = कमलिनीपत्राणि, मृणालानि सन्त्येषु तानि मृणालवन्ति = बिससहितानि, श्रुतिमभिनीय = श्रवणं नाटयित्व किं कथयसि ?= किमभिदधासि, आतपेन = घर्मेण, लङ्घनात् = अतिक्रमात् बलवत् = दृढम्, असुस्थशरीरा = पीडिताङ्गयष्टिः, शरीरस्य तापस्य निर्वापणं, तस्मै—शरीरनिर्वापणाय = शरीरसन्तापशमनाय, इति इत्येवं वदसि किमिति योजना । एतेन शकुन्तलाया विरहावस्था दर्शि

( ततः प्रविशति समदनावस्थो राजा )

राजा—( सचिन्तं निःश्वस्य- )

जाने तपसो वीर्य्यं, सा बाला परवतीति मे विदितम्।
न[1] च निम्नादिव सलिलं निवर्त्तते मे ततो हृदयम् ॥२॥

यत्नात् = सावहितम्, उपचर्यताम् = चिकित्स्यताम्, कुलपतेः = कण्वस्य, द्वितीयम् = अपरम्, उच्छ्वसितम् = जीवनम्, बहिश्चराः प्राणा इत्यर्थः। वितानस्य = यज्ञस्य सम्बन्धि—वैतानिकं = यज्ञियं, शान्त्युदकम् = अभिमन्त्रितं रक्षाजलं, अस्यै—शकुन्तलायै, तदर्थमिति यावत्। विसर्जयामि, प्रेषयामि, गौतमी = कण्वभगिनी,

विष्कम्भक इति। तदुक्तं दर्पणे—"अङ्केष्वदर्शनीया या वक्तव्यैव च संमता। या च स्याद्वर्षपर्यन्तं कथा दिनद्वयादिजा। अन्या च विस्तरास्सूच्या सार्थोपक्षेपकैर्बुधैः,"—इति। "अर्थोपक्षेपकाः पञ्च विष्कम्भकप्रवेशकौ, चूलिकाङ्कावतारोऽथ स्यादङ्कमुखमित्यपि"—इति। तल्लक्षणन्तु—"वृत्तवर्त्तिष्यमाणानां कथांशानां निदर्शकः। संक्षिप्तार्थस्तु 'विष्कम्भ' आदावङ्कस्य दर्शितः"—इति। प्रकृते चानेन—दुष्यन्तस्याश्रमप्राप्तिः, मुनिकार्यनिर्वहणं च भूतोऽर्थः, शकुन्तलाविरहावस्था, गौतमीसमागमश्च भविष्यन्नर्थः सूचित इति—विष्कम्भकोऽयम्। स च मध्यमपात्रप्रयोजितत्वाच्छुद्धविष्कम्भकः, तदुक्तं—"मध्येन मध्यमाभ्यां वा पात्राभ्यां संप्रयोजितः। शुद्धः स्यात्, स तु सङ्कीर्णो नीचमध्यमकल्पितः"—इति। संस्कृतभाषिपात्रप्रयोजितः शुद्धः, संस्कृत-प्राकृतभाषिपात्रप्रयोजितः सङ्कीर्ण इति तत्त्वम्।

ततः = शिष्यनिर्गमनानन्तरं, मदनस्यावस्था यस्यासौ-मदनावस्थः = कामकृतावस्थां नाटयन्, 'कामयमानावस्थ' इति क्वचित्पाठः, तत्र-कामयमानः = कामी, तस्येवावस्था यस्येत्याद्यर्थः। सचिन्तं = चिन्ताव्याकुलं, क्रियाविशेषणमेतत्। जान इति। तपसः = कण्वस्य तपसः, वीर्य =

१. "अलमस्मि ततो हृदयं तथापि नेदं निवर्त्तयितु" मिति पा०।

'भगवन् ! मन्मथ ! कुतस्ते कुसुमायुधस्य सततस्तैक्ष्ण्यमेतत्।
( स्मृत्वा- ) आं ज्ञातम् !—

रमणीय- उत्प्रेक्षा नर्म -तुलसीदास

अद्यापि नूनं हरकोपवह्नि-
स्त्वयि ज्वलत्यौर्व इवाम्बुराशौ ।
त्वमन्यथा मन्मथ ! मद्विधानां
भस्मावशेषः कथमेवमुष्णः ॥ ३ ॥

सामर्थ्यं, 'वीर्यं शुक्रे प्रभावे च तेजः सामर्थ्ययोरपी'ति वैजयन्ती, जाने= वेद्मि, एवञ्च—बलाद्यदि शकुन्तलां हरामि, तदा शापहतो भवेयमिति ध्वनितम् । सा = शकुन्तला, बाला = अप्रगल्भा, परवती = गुरुजनपारतन्त्रा, मे = मम, विदितम् = ज्ञातम्, अतः स्वयमागमनमसम्भवीति ध्वनितम्, तर्हि तत्कथैव त्यज्यतामत आह—न चेति । निम्नात् = गम्भीरप्रदेशात्, "निम्नं गभीरं गम्भीर"मित्यमरः । सलिलमिव = जलमिव, ततः = शकुन्तलायाः, मे = मम, हृदयं = चित्तं, न निवर्त्तते = तां मनसो दूरीकर्त्तुं न शक्नोमीत्यर्थः । [ 'प्रसह्य हरणीयत्वाभावे' प्रस्तुते कार्ये वक्तव्ये ऽप्रस्तुतस्य कार्यस्य 'तपसो वीर्यं जाने' इत्यस्य कथनादप्रस्तुतप्रशंसा उपमा च । "उपायादर्शनं यत्तु तापनं नाम तद्भवे"दिति विश्वनाथोक्ते स्तापनं नाम प्रतिमुखसन्ध्यङ्गञ्च ॥२॥ ]

मन्मथ ! = कन्दर्प !, कुसुमानि—आयुधं यस्यासौ—कुसुमायुधः तस्य = पुष्पायुधस्य, एतत् = ईदृशं; तीक्ष्णस्य भावस्तैक्ष्ण्यं = हृदयवेधकत्वम् । 'आम्' इति स्मृतौ, "आं ज्ञाने निश्चयस्मृत्यो" रिति मेदिनी ।

अद्यापीति । मन्मथ ! = मदन !, अम्बुराशौ = समुद्रे, और्वं इव = वडवानल इव, नूनं, त्वयि = मदने, अद्यापि = बहुतिथे कालेगतेऽपि, हरको-

१. 'मदनबाधां निरूप्ये'ति पाठान्तरमधिकमुपलभ्यते ।

अपि च—त्वया चन्द्रमसा [1]चातिविश्वसनीयाभ्यामति-सन्धीयते कामिसार्थः, कुतः—

तव कुसुमशरत्वं शीतरश्मित्वमिन्दो-
द्वयमिदमयथार्थं दृश्यते मद्विधेषु।
विसृजति हिमगर्भैरग्निमिन्दुर्मयूखै-
स्त्वमपि कुसुमबाणान् वज्रसारीकरोषि॥४॥

कोप एव वह्निः–हरकोपवह्निः = रुद्रलोचनानलः, ज्वलति = दीप्यते, अन्यथा = नो चेत्, भस्मावशेषः = भस्ममात्रावशिष्टः, त्वं = मदनः, मद्विधानां = मादृशानां विरहिणाम्। एवमुष्णः=ईदृक् सन्तापकः, कथम्?। एवञ्च कालाग्निवन्मदनो मां दहतीत्युक्तम्। [ नूनमित्युक्तेरुत्प्रेक्षा, पूर्वार्धार्थं प्रत्युत्तरार्धार्थस्य हेतुत्वात्काव्यलिङ्गं, हरकोपवह्निरिति रूपकम्, ममेत्यनुक्त्वा मद्विधेत्युक्तेरप्रस्तुतप्रशंसा च ]॥ ३॥

त्वया = कुसुमायुधनामधेयेन, चन्द्रमसा = आह्लादकार्थकचन्द्रपदाभि-धेयेन, विश्वसनीयाभ्याम् = उक्तनाम्नोरन्वर्थत्वभ्रमेण जातविश्वासाभ्यां, कामिनां सार्थः,–कामिसार्थः = विरहिलोकः, अतिसन्धीयते = वञ्च्यते, जातविश्वासं लोकं पीडयन्तौ नूनं वञ्चकावेव भवन्तावित्याशयः। बहिरीदृशं नामधेयम्, अन्तस्तु महती क्रूरतेत्यहो! वञ्चनाचातुरी मदन-चन्द्रयोरिति हृदयम्। [ "मुख में राम, बगल में छुरी" ]

तदेव स्फुटयति—तवेति। मद्विधेषु = मादृशेषु विरहिषु, तव = कामस्य, कुसुमशरत्वं = कुसुमायुधपदवाच्यत्वम्, इन्दोः = चन्द्रस्य, शीता-रश्मयो यस्य, तस्य भावस्तत्त्वं—शीतरश्मित्वं = शीतकिरणनामव्यवहार्यत्वं, द्वयमिदम् = उभयमेतत्, अयथार्थम् = निरर्थकं, कथमेतदत आह—

१ 'विश्वसनीयाभ्यां'

अथ वा—

अनिशमपि मकरकेतुर्मनसो रुजमावहन्नभिमतो मे।
यदि मदिरायतनयनां तामधिकृत्य प्रहरतीति ॥५॥

भगवन्! एवमुपालब्धस्य ते न मां प्रत्यनुक्रोशः ?।

---

विसृजतीति। यतः—इन्दुः = चन्द्रः, हिमं गर्भे येषान्तैः—हिमगर्भैः = तुषारगर्भैः, मयूखैः = किरणैः, अग्निं = दहनं, विसृजति = विकिरति, बहिः शीतलैरपि अङ्गारैरिवान्तःसन्तापकैः किरणैर्दहतीत्याशयः। एवं—त्वमपि कुसुमबाणोऽपि, कुसुमान्येव बाणास्तान् = पुष्पमयानपि शरान्, बहिः पुष्परूपेण प्रतीयमानानपि, अवज्रसारान् वज्रसारान् करोषि वज्रसारी करोषि = वज्रकठोरान् करोषि, चन्द्रो हिमाच्छादितमग्निं वर्षति, त्वञ्च कुसुमत्वेन बहिःप्रतीतानपि कुलिशकठोरान् बाणान् मुञ्चसीति स्फुटं भवतो वंञ्चकत्वमित्याशयः। [ मयीति विशेषे वक्तव्ये मद्विधेष्विति सामान्योक्तेरप्रस्तुतप्रशंसा, पूर्वार्धार्थे उत्तरार्धार्थस्य हेतुत्वात् काव्यलिङ्गम्, हिमगर्भैरग्निमिति विरोधेऽपि विरहिस्वाभाव्याद्विरोधाभासः, कुसुमेषु बाणत्वमारोपितं विरहदुःखदत्वेन प्रकृतोपयोगीति परिणामश्च। यथासंख्यञ्च। छेकवृत्त्यनुप्रासाविति च राघवभट्टः। ] ॥४॥

अनिशमिति। यदि—मदिरे-आयते च नयने यस्याः सा तां-मदिरायतनयनां = उन्मादकविस्तृतलोचनां, तां = शकुन्तलाम्, अधिकृत्य = तामपि विषयीकृत्य, प्रहरति = तस्या अपि उपरि बाणान् क्षिपति, तदा अनिशम् = अनवरतम्, मे = मम, मनसः = चित्तस्य, रुजं = पीडाम्, आवहन् = कुर्वन्, अपि, मकरः केतौ यस्यासौ—मकरकेतुः = मकरध्वजः, अभिमतः = अभीष्टः, यदि साऽपि विरहपीडामनुभवति, मयि च सानुरागं मनो वहति, तदा कामं कृतोपकारमभिमतमेव मन्य—इति भावः, [ रुजमावहन्नभिमत इति विरोधाभासः, ] ॥५॥

उपालब्धस्य = दत्तोपालम्भस्य, अनुक्रोशः = कारुण्यं।

वृथैव सङ्कल्पशतैरजस्र-
मनङ्ग ! नीतोऽसि मयातिवृद्धिम् ।
आकृष्य चापं श्रवणोपकण्ठे
मय्येव युक्तस्तव बाणमोक्षः ? ॥६॥

( सखेदं परिक्रम्य- ) क्व नु खलु निरस्तविघ्नैस्तपस्विभिरनुज्ञातः खिन्नमात्मानं विनोदयामि ? । न च प्रियादर्शनादृते शरणमन्यत्, यावदेनामन्विष्यामि । ( ऊर्द्धमवलोक्य- ) [1]इमामुग्रतपां

वृथैवेति । हे अनङ्ग ! अजस्रम् = अनवरतं, सङ्कल्पानां शतैः—सङ्कल्पशतैः = मनोरथकोटिभिः, वृथैव = मुधैव, मया = दुष्यन्तेन, अतितमां वृद्धिमतिवृद्धिं=परिपोषं, नीतोऽसि = गमितोऽसि । श्रवणस्योपकण्ठे श्रवणोपकण्ठे = आकर्णं, चापं = धनुः, आकृष्य = आरोप्य, मय्येव = परिपालक एव, तव बाणानां मोक्षः—बाणमोक्षः = शरविक्षेपः, युक्तः ? = किमुचितः !, यो हि सादरमभिरक्षितोऽपि तमेव रक्षितारं पीडयति तर्हि स 'वृथा परिरक्षित' इत्युच्यते, एवमयं मनोजन्मा कामः सङ्कल्पशतैर्वर्द्धितोऽपि तमेव राजानं विध्यतीति 'वृथा परिवर्द्धितः' खल्वयमिति युक्त एवोपालम्भोऽस्येत्याशयः । [ काव्यलिङ्गमलङ्कारः । ] ॥६॥

खेदेन सहितं यथा स्यात्तथा सखेदमिति क्रियाविशेषणम् । परिक्रम्य= किञ्चित्पादन्यासं कृत्वा, निरस्ता विघ्ना येषान्तैः—निरस्तविघ्नैः = निर्विघ्नसमाप्तयज्ञैः, तपस्विभिः = मुनिभिः, अनुज्ञातः = 'यथेष्टं विश्रम्यतां, जातं नः कार्य'मिति दत्तानुज्ञः, खिन्नं = विरहविक्लवम् , आत्मानं = मनः, विनोदयामि = प्रसादयामि । प्रियाया दर्शनं—तस्मात् , शरणं = रक्षकं, [ "ततः प्रविशति कामयमानावस्थ" इत्यत आरभ्यैतदन्तं पञ्चमी कामावस्थोद्वेगाख्या सूचिता । ] प्रियादर्शनात् = प्रियाप्रेक्षणात्, यावदेनां = निश्चितमेनां शकुन्तलां, यावदिति निपातो निश्चयद्योतकः, अन्विष्यामि = अन्वेक्ष्यामि,

१ 'उग्रातपवेलां'

वेलां प्रायेण लतावलयवत्सु मालिनीतीरेषु ससखीजना तत्रभवती शकुन्तला गमयति, भवतु तत्रैव तावद् गच्छामि। (परिक्रम्यावलोक्य च) अनया बालपादपवीथ्या सुतनुरचिरं गतेति तर्कयामि। कुतः—

संमीलन्ति न तावद्बन्धनकोषास्तयावचितपुष्पाः।
क्षीरस्निग्धाश्चामी दृश्यन्ते किसलयच्छेदाः॥ ७॥

(स्पर्शं रूपयित्वा—) अहो! प्रवातसुभगोऽयं वनोद्देशः—

'यावत्पुरानिपातयो'रिति लडर्थे लट्। ऊर्ध्वं = गगनमभि, उग्रस्तपो यस्यां सा ताम्-उग्रतपां = प्रखरातपवतीं, वेलां = कालं, लतानां वलयानि येषु तेषु—लतावलयवत्सु = लतामण्डलमण्डितेषु, सखीजनेन सहिता—ससखीजना = सखीसहिता, प्रायेण गमयति = प्रायोऽतिवाहयति, [ 'यावदेना'मित्यारभ्य 'तावद्गच्छामी'त्यन्तेन सरिसर्पो नाम प्रतिमुखाङ्गं दर्शितम्, "दृष्टनष्टानुसरणं परिसर्प इतीरित"—इत्युक्तेः। ]

अनया = पुरतो दृश्यमानया, बालाश्च ते पादपाश्च बालपादपास्तेषां वीथिस्तया—बालपादपवीथ्या = अभिनवतरुपंक्तिपरिसरमार्गेण, सुतनुः = शकुन्तला, तर्कयामि = सम्भावयामि। सम्मीलन्तीति। तया = शकुन्तलया, अवचितानि—पुष्पाणि येभ्यस्ते—अवचितपुष्पाः = आच्छिन्नकुसुमाः, बन्धनानां कोषाः—बन्धनकोषाः=प्रसवबन्धनोदराणि, न यावत्=नाद्यापि, सम्मीलन्ति=सङ्कुचन्ति, क्षीरेण स्निग्धाः,—क्षीरस्निग्धाः = दुग्धमसृणाः, किसलयानां छेदाः = पल्लवभङ्गाः, अमी = पुरतः, दृश्यन्ते = विलोक्यन्ते, [ अचिरावचितकुसुमेषु पादपेषु कुसुमबन्धनाग्रभागकोशा विवृता एव लक्ष्यन्ते, पत्रभङ्गस्थानेषु च पयः क्षरदवलोक्यत इति नूनमद्यैवामुना पथा याता सेति सम्भावयितुं शक्यत एवेति भावः ] ॥७॥

स्पर्शं = वातस्पर्शं, रूपयित्वा = नाटयित्वा, अहो ! = हर्षे, प्रकृष्टेन वातेन सुभगः प्रवातसुभगः = सुरभिशीतलपवनललितः, वनस्योद्देशः—वनोद्देशः = वनप्रदेशः।

शक्योऽरविन्दसुरभिः कणवाही मालिनीतरङ्गाणाम् ।
अङ्गैरनङ्गतप्तैर्निर्दयमालिङ्गितुं पवनः ॥ ८ ॥

( विलोक्य— ) हन्त ! अस्मिन् वेतसलतामण्डपे सन्निहितया शकुन्तलया भवितव्यं, तथाहि—

अभ्युन्नता पुरस्तादवगाढा जघनगौरवात् पश्चात् ।
द्वारेऽस्य पाण्डुसिकते पदपङ्क्तिर्दृश्यतेऽभिनवा ॥९॥

---

शक्य इति । अरविन्दैः सुरभिः—अरविन्दसुरभिः=कमलामोदवासितः, मालिन्यास्तरङ्गाणां मालिनीतरङ्गाणां = मालिनीनदीकल्लोलानां, कणान् वहति तच्छीलः—कणवाही = जललवशीतलः, पवनः = वातः, अनङ्गेन तप्तैः—अनङ्गतप्तैः = कामसन्तप्तैः, अङ्गैः = अवयवैः, निर्गता दया यस्मिन् कर्मणि तत् निर्दयं = आतृप्ति, आलिङ्गितुं=समालिङ्गितुं, शक्यः । एतेनास्य प्रदेशस्य कामिजनसेवनयोग्यत्वं, पवनस्य सुरभित्वं शीतलत्वञ्च ध्वनितम् । शक्यमिति पाठे शक्यमित्यव्ययं बोध्यं, यथा—"शक्यमञ्जलिभिः पातुं वाता कैतकगन्धिन—"इति । [ अनुप्रासः, समाहितालङ्कारः. अरविन्दसुरभिः, पवनः = पवित्रः, कणवाही = शीतलसुहृदिवालिङ्गनार्हं इति अप्रस्तुतमित्रव्यवहारस्य समारोपात्समासोक्तिश्च ] ॥८॥

हन्तेति हर्षे, वेतसलताभिर्विरचिते मण्डपे—वेतसलतामण्डपे = वेत्रवल्लीविरचितमण्डपे, सन्निहितया = अत्रस्थितया । कथमेतज्ज्ञायतेऽत आह —अभ्युन्नतेति । पाण्डुः सिकता यस्मिन् तत् पाण्डुसिकतं, तस्मिन्— पाण्डुसिकते = पाण्डुरबालुकासनाथे, अस्य = लतामण्डपस्य, द्वारे = प्रतीहारे, पुरस्तात् = अग्रभागे, अभ्युन्नता = समुन्नता, पश्चात् = पार्ष्णिभागे, जघनस्य गौरवं, तस्मात्—जघनगौरवात् = नितम्बपुरःप्रदेशभारात् , अवगाढा = गभीरा, अभिनवा = अचिरोद्धृता, पादपंक्तिः = चरणचिह्नश्रेणिः, दृश्यते = विलोक्यते । "पदं शब्दे च वाक्ये च पादतच्चिह्नयोरपी"ति विश्वः । [ अनुमानम् , स्वभावोक्तिः, अत्रैव शकुन्तला प्रविष्टेत्यस्य भङ्ग्यन्तरेण प्रतिपादनात्पर्यायोक्तमपि । ] ॥९॥

यावद्विटपान्तरेणावलोकयामि ( तथा कृत्वा सहर्षम्— ) अये ! लब्धं नेत्रनिर्वाणम्, एषा मनोरथप्रिया मे सकुसुमास्तरणं शिलापट्टमधिशयाना सखीभ्यामुपास्यते, भवतु, लताव्यवहितः शृणोमि विश्वस्तकथितान्यासाम् ( —इति विलोकयन् स्थितः ) ।

( ततः प्रविशति यथोक्तव्यापारा सह सखीभ्यां शकुन्तला— ) ।

**सख्यौ**—( उपवीज्य— ) हला शकुन्तले ! अपि सुखयति ते नलिनीपत्रवातः ? [ हला सउन्तले ! अवि सुहाअदि दे णलिणीवत्तवादो ? ] ।

**शकुन्तला**—(सखेदम्—) किं बीजयतो मां प्रियसख्यौ ? ।

[ किं बीजअन्ति मं पियसहीओ ? ] ।

(**सख्यौ**—सविषादं परस्परमवलोकयतः )

---

विटपस्य = शाखायाः, अन्तरेण = मध्यभागेन, तथा कृत्वा = विटपान्तरेण विलोक्य, सहर्षमिति क्रियाविशेषणम् । नेत्रयोर्निर्वाणं = लोचनसुखं, शकुन्तलेति यावत्, मनोरथैः प्रिया=सङ्कल्पप्रिया, अद्य यावद्रतेरलाभात्, कुसुमानामास्तरणेन सहितं—सकुसुमास्तरणं=पुष्पास्तीर्णं, शिलायाः पट्टं= शिलाफलकम्, अधिशयाना = अधितिष्ठन्ती । विस्रम्भेण कथितानि— विस्रम्भकथितानि = निरशङ्कालापान् । "समौ विस्रम्भविश्वासौ" इत्यमरः । इति = इत्थमभिधाय । यथोक्तं व्यापारो यस्याः सा—यथोक्तव्यापारा = शिलाफलकमधिशयाना, उपवीज्य = व्यजनं दोलयित्वा ।

अपिरत्र प्रश्ने, "गर्हासमुच्चयप्रश्नशङ्कासम्भावनास्वपिः"—इत्यमरः । सुखयति = सुखमुत्पादयति । नलिन्याः पत्राणां वातः = कमलिनीदलपवमानः । किमितिप्रश्ने, मां भवत्यौ बीजयतः किम् ? इति प्रश्नः, एतेन विषयान्तरज्ञानशून्या विषयनिवृत्तिरूपा कामस्य षष्ठावस्था सूचिता । एतेन—विधूतं नाम प्रतिमुखाङ्गं—"विधूतं स्यादरति"रित्युक्तं दर्शितं । सविषादमिति । ईदृशीम-

राजा—बलवदसुस्थशरीरा तत्रभवती दृश्यते। (सवितर्कम्—) तत् किमयमातपदोषः स्यात्? उत यथा मे मनसि वर्तते?। (साभिलाषं निर्वर्ण्य—) अथवा कृतं सन्देहेन—

स्तनन्यस्तोशीरं प्रशिथिलमृणालैकवलयं,
प्रियायाः साबाधं तदपि कमनीयं वपुरिदम्।
समस्तापः कामं मनसिज-निदाघप्रसरयो-
र्न तु ग्रीष्मस्यैवं सुभगमपराद्धं युवतिषु ॥१०॥

वस्थां दृष्ट्वा विषादः, अनिष्टाशङ्कया परस्परावलोकनम्। बलवत् = अत्यन्तं, न सुस्थं—स्वस्थं, शरीरं यस्याः सा असुस्थशरीरा = अप्रकृतिस्थवपुः, सवितर्कम् = विचारमभिनीय, मे मनसि वर्त्तते = कामसन्तापोऽयमिति मम चेतसि समायाति। कृतम् = अलम्,

स्तनन्यस्त इति। प्रियायाः = प्रेयस्याः—स्तनयोर्न्यस्तमुशीरं यत्र तत्—स्तनन्यस्तोशीरं = पयोधरोत्सङ्गनिविष्टवीरणमूलं, प्रकर्षेण शिथिलं मृणालानामेकं वलयं यत्र तत् = सन्तापशुष्कशिथिलबिसैकवलयम्, एतेन—स्वर्णादिवलयं धारयितुमशक्यमिति ध्वनितम्। आबाधया सहितं साबाधम् = व्यथितं, तदपि = तथापि, इदं वपुः = शरीरमेतत्, कमनीयं = मनोहरं, कामं = बाढं, मनसिजश्च निदाघस्य प्रसरश्च, तयोः—मनसिज-निदाघप्रसरयोः = कामातपलङ्घनयोः, तापः = सन्तापः, समः = तुल्यः, कामताप—निदाघाभिगमनयोर्व्यथा तुल्येति सत्यमित्याशयः। तु = तथापि, "तु स्याद्भेदेऽवधारण" इत्यमरः। ग्रीष्मस्य = निदाघप्रसरस्य, युवतिषु = तरुणीषु, एवम् = ईदृशम्, सुभगं = कमनीयतासम्पादकम्, अपराद्धं = सन्तापः, न भवतीति शेषः। इयं सन्तापेऽपि मनोहरा दृश्यते, लावण्यमात्र-शेषा, न चातपलङ्घनादीदृशी मनोहरता भवति, अतो नूनमियं कामसन्ता-पपीडितैवेति बाढमनुमीयत इति भावः। [अत्रोपमानोपमेययोः स्मरातप-

**प्रियम्वदा**—( जनान्तिकम्— ) अनसूये ! तस्य राजर्षेः प्रथमदर्शनादारभ्य पर्य्युत्सुकमनाः शकुन्तला ; न खल्वस्या अन्यनिमित्त आतङ्को भवेत् । [ अणसूए ! तस्स राएसिणो पढमदंसणादो आरम्भिअ पज्जुस्सुअमणा सउन्तला; ण क्खु से अण्णणिमित्तो आतङ्को भवे]।

**अनसूया**—सखि ! ममापि एतादृशी आशङ्का हृदयस्य, भवतु प्रक्ष्यामि तावदेनाम् । (प्रकाशम्–) सखि ! प्रष्टव्यासि किमपि। बलीयान् खलु तेऽङ्गानां सन्तापः ।

[ सहि ! मम वि एआरिसी आसङ्का हिअअस्स, भोदु, पुच्छिस्सं दाव णं सहि ! पुच्छिदव्वासि किम्पि । बलीओ क्खु दे अङ्गाणं सन्दावो ] ।

**राजा**—वक्तव्यमेव ?

शशिकरविशदान्यस्यास्तथाहि दुःसहनिदाघशंसीनि ।
भिन्नानि श्यामिकया मृणालनिर्म्माणवलयानि ॥११॥

---

सन्तापयोरेकस्याधिक्यकथनाद्व्यतिरेकालङ्कारः, 'युवतिषु'–इति सामान्यनिर्देशादप्रस्तुतप्रशंसा च, अनुप्रासश्च । ] ॥ १० ॥

जनान्तिकम् = त्रिपताककरेणान्यानपवार्य, तस्य = दुष्यन्तस्य, प्रथम दर्शनं तस्मात् = अवलोकनमात्रादेव, पर्युत्सुकं मनो यस्याः सा–पर्युत्सुकमनाः = उत्कण्ठाकुलिता, खलु = निश्चये, अन्यन्निमित्तं यस्यासौ–अन्यनिमित्तः = कारणान्तरोत्पन्नः, आतङ्कः = सन्तापः, "रुक्तापशङ्कास्वातङ्कः"–इत्यमरः । एतादृशी = 'दुष्यन्तदर्शनकृत एवास्याः सन्तापप्रसर' इति । प्रष्टव्याऽसीति । भवतीं किमपि प्रष्टुमभिलषामीत्यर्थः । अतिशयेन बली बलीयान् = प्रबलतमः, सन्तापः = पीडा, खल्वत्र प्रश्ने । वक्तव्यमेव ? = किमेतदपि वक्तव्यम्, ? स्पष्टमेवैतदित्याशयः । शशीति । तथाहि = स्पष्टतामेव भणामि = अस्याः=शकुन्तलायाः, शशिन कर इव विशदानि–शशिकरविशदानि = चन्द्रकिरणस्वच्छानि, दुःसहं

**शकुन्तला**—( पूर्वाङ्गेन शयनादुत्थाय— ) हला ! भण, यद्वक्तुकामासि। [ हला ! भण जं वत्तुकामासि ]।

**अनसूया**—हला शकुन्तले ! अलब्धान्तरा वयं ते मनोगतस्य वृत्तान्तस्य, किन्तु यादृशी इतिहासकथानुबन्धेषु कामिजनानामवस्था श्रूयते ; तादृशी तवेति तर्कयामि। तत्कथय किंनिमित्तं तेऽयमायास इति। विकारं परमार्थतोऽज्ञात्वाऽनारम्भः किल प्रतीकारस्य।

[ हला सउन्तले ! अलब्भन्तरा अह्मे दे मणोगदस्स वुत्तन्तस्स ; किन्तु जादिंसी इदिहासकधाणुबन्धेसुं कामिजणाणं अवत्था सुणीअदि, तादिसी तुह तक्केमि। ता कधेहि किंनिमित्तम् दे अअं आआसोत्ति। विआरं परमत्थदो अजाणिअ अणारम्भो किल पदीआरस्स ]।

---

निदाघं शंसन्ति तच्छीलानि–दुःसहनिदाघशंसीनि = दुःसहसन्तापसूचकानि। मृणालैर्निर्माणं येषान्तानि–वलयानि–मृणालनिर्माणवलयानि = बिसनिर्मितकरकङ्कणानि, श्यामिकया = कृष्णरेखया भिन्नानि = संसक्तानि, एवञ्च स्पष्टोऽस्या अङ्गसन्ताप इति भावः। [ वाक्यार्थहेतुकं काव्यलिङ्गम् ] ॥ ११ ॥

पूर्वार्द्धेन=नाभ्यूर्ध्वभागेन। पूर्वाङ्गेनेत्यपि पाठः–भण=वद, वक्तुकामा= वक्तुमिच्छसि, न लब्धमन्तरं याभिस्ताः–अलब्धान्तराः = रहस्यानभिज्ञाः, मनसि गतस्य–मनोगतस्य = हृदयनिहितस्य, इतिहासेषु याः कथास्तासामनुबन्धेषु—इतिहासकथाऽनुबन्धेषु = पुराणादिकथाप्रसङ्गेषु, तादृशी = कामिजनावस्थासदृशी, तत् = तस्मात्, किंनिमित्तः = कं पुरुषरत्नं लक्ष्यीकृत्य, आयासः = कामजनितः खेदः, सन्ताप इति यावत्। विकारं = रोगम्, तत्त्वतः = किंनिमित्तोऽयमातङ्क इत्यादि रूपेण यथार्थतः, अज्ञात्वा = अविज्ञाय, प्रतीकारस्य = उपायस्य, न आरम्भः–अनारम्भः = प्रारम्भः–

राजा—अनसूययापि मदीयस्तर्कोऽवगतः ।

शकुन्तला—बलीयानायासः, न शक्नोमि सहसा निवेदयितुम्।
[ बलीओ आआसो, ण सक्कणोमि सहसा णिवेदिदुं ] ।

प्रियम्वदा—सुष्ठु खल्वेषा भणति, किमेतमात्मन उपद्रवं निगूहसि ? अनुदिवसं खलु परिहीयसे, अङ्गेषु लावण्यमयी छाया केवलं त्वां न मुञ्चति । [ सुठ्ठु क्खु एसा भणादि, किं एदं अत्तणो उपद्दवं णिगूहसि, अणुदिअसं क्खु परिहीअसि । अङ्गेसुं लावण्णमई छाआ केवलं तुम ण मुञ्चदि ] ।

राजा—अवितथमाह प्रियम्वदा, तथाहि—

---

कर्त्तुमशक्यः । किल = प्रसिद्धमेतत् । मदीयस्तर्कः = कामकृतेयमवस्थेति तर्कः, अवगतः = विज्ञातः बलीयान् = प्रबलः, आयासः = सन्तापः, सहसा = झटिति, निवेदयितुं = तत्त्वतो निवेदयितुं, न शक्नोमि = आमूलाद्वक्तुं न शक्नोमि,—

एषा = अनसूया, वदति = तव कामिजनसदृशी किलावस्थेति यद्भणति, तत्-सुष्ठु = ममापि सत्यं प्रतिभाति । एतं = स्पष्टं प्रतीयमानम्, उपद्रवं = सन्तापं, निगूहसि = निह्नुषे, अपलपसि, दिवसे दिवसे—इति—अनुदिवसं = प्रतिदिनं, परिहीयसे = क्षीणतां वहसि, खलु = निश्चितमेतत्, नन्वेतत् ग्रीष्मातपलङ्घनवशादेवेति चेदत आह—अङ्गेष्विति । लावण्यं प्रकृतं यत्र सा—लावण्यमयी = लावण्यप्रचुरा, छाया = कान्तिः, न मुञ्चति = न परिहीयते, एवञ्च कामकृतसन्तापेष्वेव खल्वीदृशी दशा, नातपलङ्घने, तत्र लावण्यस्यापि कालिम्ना विलयादिति भावः ।

अवितथं = सत्यं, क्षामेति । क्षामक्षामौ = कृशतरौ, कपोलौ यत्र तत्-क्षाम-क्षाम-कपोलम् = कृशतरकपोलम्, आननं = मुखं, 'अस्या आलक्ष्यत' इति शेषः । काठिन्येन मुक्तौ स्तनौ यत्र तत्—काठिन्यमुक्तस्तनम् = अकठोरपयोधरम्, उरः = वक्षःस्थलं, दृश्यत इति

Manu is conservative ?



क्षामक्षामकपोलमाननमुरःकाठिन्यमुक्तस्तनं
मध्यः क्लान्ततरः प्रकामविनतावंसौ छविः पाण्डुरा ।
शोच्या च प्रियदर्शना च मदनग्लानेयमालक्ष्यते
पत्राणामिव शोषणेन मरुता स्पृष्टा लता माधवी ॥ १२॥

शकुन्तला—(निःश्वस्य-) कस्य वाऽन्यस्य, कथयिष्यामि किन्तु आयासहेतुका वो भविष्यामि ।

[ कस्स वा अण्णस्स कधइस्सं, किन्तु आआसहेदुआ वो भविस्सं ]।

उभे—सखि! अत एव निर्बन्धः, स्निग्धजनसंविभक्तं खलु दुःखं सह्यवेदनं भवति। [ सहि ! अदो जेव णिब्बन्धो । सिणिद्धजण-संविभत्तं क्खु दुक्खं सज्झवेअणं होदि ]।

---

शेषः, अतिशयेन क्लान्तः—क्लान्ततरः = परिम्लानः, मध्यः = अवलग्नप्रदेशः । प्रकामं विनतौ—प्रकामविनतौ = अत्यन्तमनवतौ, अंसौ = स्कन्धप्रदेशौ, 'लक्ष्येते' इति शेषः, पाण्डुरा = पाण्डुवर्णा, छविः = कान्तिः, अतः—पत्राणां= दलानां शोषणकार्यकारिणा = मरुता = वायुना, स्पृष्टा = लङ्घिता, माधवी लतेव = वासन्तीवीरुदिव, मदनेन ग्लाना—मदनग्लाना = कामशरसन्तप्ता, शोच्या च = शोचनीया, क्षीणाङ्गयष्टित्वात्, प्रियं दर्शनं यस्याः सा—प्रियदर्शना च = मनोज्ञदर्शना च, इयं = शकुन्तला, आलक्ष्यते = परिदृश्यते, [ शोच्या च प्रियदर्शना चेति विरोधाभासः, शोच्या = दयनीयेत्यर्था-द्विरोधपरिहारात् । मदनग्लानेत्यस्य—शोच्यत्वे हेतुत्वेनोपादानात्काव्यलिङ्गम्, उपमा, अनुप्रासः । ] ॥ १२ ॥

कस्या इति । यदि युवाभ्यां न कथयिष्यामि, तर्हि कस्यै कथयिष्यामि, युष्मद्भिन्ना का मेऽन्तरङ्गभूतेत्याशयः । तर्हि कथं न कथयसीत्यत आह—किन्त्विति । आयासस्य हेतुरेव हेतुका = क्लेशकारिणी, कथमहं क्लेशकारिणी खल्वनयोर्जातास्मीति सन्तापाधिक्यात्—निःश्वासः । अत एव =

राजा—

पृष्टा जनेन समदुःखसुखेन बाला
नेयं न वक्ष्यति मनोगतमाधिहेतुम् ।
दृष्टो विवृत्य बहुशोऽस्म्यनया सतृष्ण-
मत्रोत्तरश्रवणकातरतां गतोऽस्मि ॥१३॥

शकुन्तला—यतः प्रभृति तपोवनरक्षिता स राजर्षिर्मम दर्शनपथं गतः—"( इत्यर्द्धोक्तेन—लज्जां नाटयति—)
[ जदो पहुदि तवोवणरक्खिदा सो रायसी मम दंसणपधं गदो—" ]

उभे—कथयतु कथयतु प्रियसखी । [कधेदु कधेदु पियसही]

---

भूयान् खलु ते क्लेश इति विभाव्यैव, निर्बन्धः = आग्रहोऽस्माकम्, खलु= निश्चयेन स्निग्धेषु जनेषु संविभक्तं = प्रियजननिवेदितम्, अत एव सम्यग्विभक्तमिव, दुःखं = क्लेशः, सह्या वेदना यस्य तत्–सह्यवेदनं = सहनीयपीडावेगम् ।

पृष्टेति । समं दुःखं सुखं च यस्य तेन–समदुःखसुखेन = दुःखेषु सुखेषु च तुल्यमेव दुःखं सुखञ्चानुभवता, जनेन = सखीजनेन, मनोगतम्= हृदयकोणनिगूहितम्, आधेर्हेतुस्तम्–आधिहेतुम् = मानसिकक्लेशकारणम्, पृष्टा = अनुयुक्ता, इयं बाला = शकुन्तला, न न वक्ष्यति = अवश्यमेवाभिधास्यति ।

अत्र = प्रश्नेऽस्मिन्, –अनया = शकुन्तलया, बहुशः = भृशं, विवृत्य= परावृत्य, सतृष्णं = साभिलाषं, दृष्टोऽपि = प्रेक्षितोऽपि,—अहं, उत्तरस्य श्रवणे कातरस्तस्य भावस्तत्ताम् = उत्तरश्रवणकातरताम् = [ किमियमभिधास्यति, किंनिमित्तास्याः पीडेति– ] उत्तरश्रवणातुरतां, गतोऽस्मि = प्राप्तोऽस्मि, अस्मीत्यहमर्थेऽव्ययम् । [ अवश्यमाधिहेतुं वक्ष्यतीत्यत्र समदुःखसुखेनेति हेतुगर्भविशेषणमुपात्तमिति काव्यलिङ्गमलङ्कारः, अनुप्रासः] ॥१३॥

यतः प्रभृति = यत आरभ्य, तपोवनस्य रक्षिता = आश्रमसंरक्षणे व्यापृतः, सः = वृक्षसेचनकालेऽनुभूतः, राजर्षिः = दुष्यन्तः । दर्शनस्य

शकुन्तला—ततः प्रभृति तद्गतेनाऽभिलाषेण एतावदवस्थास्मि संवृत्ता ।

[ तदो पहुदि तग्गदेण अहिलासेण एआवदवत्थह्मि संवत्ता ] ।

उभे—दिष्ट्या तेऽनुरूपे वरेऽभिलाषः । अथवा सागरमुज्झित्वा कस्मिन् महानद्या प्रवेष्टव्यम् ? ।

[ दिट्ठिआ दे अणुरूए वरे अहिलासो; अदवा साअरं उज्झिअ कहिं महाणईए पविसिदव्वं ] ।

राजा—( सहर्षम्— ) श्रुतं यच्छ्रोतव्यम्—

स्मर एव तापहेतुर्निर्वापयिता स एव मे जातः ।
दिवस इवाभ्रश्यामस्तपात्यये जीवलोकस्य ॥१४॥

पन्थाः–दर्शनपथस्तं = लोचनगोचरम्, इति = इत्येतदन्तेन, अर्धोक्तेन = अर्धमभिहितेन, कथयतु = अलं लज्जयेत्याशयः । ततः प्रभृति = ततः आरभ्य, स गतो यस्य तेन–तद्गतेन=दुष्यन्तविषयकेण, अभिलाषेण= मनोरथेन, एतावती अवस्था यस्याः सा–एतावदवस्था = ईदृशदशाविकला, संवृत्ता = जाता, एतेन लज्जानाशरूपा कामस्य सप्तमी खल्ववस्था शकुन्तलाया दर्शिता, दिष्ट्या = सौभाग्येन, अनुरूपे = समानशीलवयोलावण्यसौन्दर्ये, वरे = वरयितव्ये, उज्झित्वा = त्यक्त्वा, महानद्या = भागीरथ्यादिरूपया, श्रोतव्यं = श्रवणयोग्यं, मदभिलषितं श्रुतमित्याशयः ।

स्मर इति । स्मर एव = काम एव, तापस्य हेतुः–तापहेतुः=सन्तापकारणं, स एव = स्मर एव तपस्यात्ययस्तपात्ययस्तस्मिन्–तपात्यये = ग्रीष्मविगमे, जीवलोकस्य = प्राणिसङ्घस्य, अभ्रैः श्यामः–अभ्रश्यामः = जलदनीलः, दिवस इव = वासर इव, मे = मम, निर्वापयिता = हर्षप्रदः, जातः = सम्पन्नः । अहो मे सौभाग्यं, यत्सन्तापकस्वभावोऽपि मारः प्रियानुरागप्रापणेन सुखप्रदः संपन्न इत्याशयः । [ यस्तापहेतुः स निर्वापयितेति

शकुन्तला—तद्यदि वामनुमतं, ततस्तथा प्रवर्तितव्यं यथा तस्य राजर्षेरनुकम्पनीया भवामीति, अन्यथा 'स्मरतं माम्।

[ ता जइ वो अणुमदं, तदो तधा पउत्तिदव्वं, जधा तस्स राएसिणो अणुकम्पणीआ होमि त्ति। अणधा सुमरेध मं ]।

राजा—अहो विमर्शच्छेदि वचनम्, एतदेव कामफलम्, यत्नफलमन्यत्, एतावदवस्थापि मां सुखयति।

प्रियम्वदा—( जनान्तिकम्— ) अनसूये! दूरङ्गतोस्या मनोरथः, अक्षमेयं कालहरणस्य'।

[ अणसूए ! दूरगदो से मणोरहो, अक्खमा इअं कालहरणस्स ]।

---

विरोधाभासः, नायिकागतस्य निर्वापकतया, स्वहृद्गतस्य तापकतया वास्तवविरोधाभावात्। दिवस इवेत्युपमा, अनुप्रासः, आर्या। ] ॥ १४ ॥

तत् = इत्थं कामस्य नितरां प्रवर्धनात्, वां = युवयोः, अनुमतम् = अभीष्टं, ततः = तदा, प्रवर्त्तितव्यं = समाचरणीयं, यथा = येनोपायेन, अनुकम्पनीया = दयनीया, तेन स्वीकृतेति यावत्, अन्यथा = नो चेदभिमतं, तदा—अवश्यं = ध्रुवं, मे=मह्यं, तिलमिश्रमुदकं—तिलजलाञ्जलिं, सिञ्चतं = निक्षिपतम्, नूनं मृतैवाद्य श्वो वाऽहमित्याशयः।

[शमो-नाम मुखसन्ध्यङ्गं—"तस्योपशमनं यत्तु शमन तदुदाहृत" मिति तल्लक्षणात्। (क्वचित्स्मरतं मामित्येव पाठः, तत्रापि स एवार्थः।) विमर्शं छिनत्ति तच्छीलं—विमर्शच्छेदि = संशयनिरासकं, 'संशयच्छेदी'ति पाठेऽपि स एवाऽर्थः। [ एतेन दृढं निश्चयो जातो यदियं मामवश्यमेव कृतार्थयिष्यतीति। ]

एतदेव = उभयोस्तुल्या प्रीतिः, कामस्य फलं=स्मरकरणीयं, अन्यत्=

---

१ अवश्यं सिञ्चतं मे तिलोदकं।

२ यस्मिन्बद्धभावा एषा, स ललामभूतः पौरवाणां, तद्युक्तमस्या अभिलाषोऽभिनन्दितुम्। अनसूया—तथा यथा भणसि। प्रियम्वदा—(प्रकाशं) सखि!

सङ्गमनादिकं तु, यत्नस्य = प्रयत्नस्यैव, फलं = कार्यं, प्रीतिरेव कामजन्या, सङ्गमनादिकन्तु प्रयत्नसाध्यमिति भावः, एषा अवस्था यस्याः सा-एतदवस्था= कामशरसन्तप्ताङ्गयष्टिरपि, सुखयति = प्रीणाति । दूरं गतो—दूरगतः = अतिभूमिं गतः, [ परां काष्ठां गतः, ] मनोरथः=अनुरागः, कालस्य हरणं तस्य= कालक्षेपस्य, न क्षमत इत्यक्षमा = अयोग्या, कालक्षेपे हि म्रियेतेत्याशयः । [ अद्य यावत् कामस्यसप्तमींमवस्थां नीतेयं, कालक्षेपेऽचिकित्स्यातङ्केयं भवेत् कामदशास्तु—"नयनप्रीतिः प्रथमं, चित्तासङ्गः, ततोऽर्थसङ्कल्पः । निद्राच्छेदस्तनुता, विषयनिवृत्तिस्त्रपानाशः ॥ उन्मादो मूर्च्छा, मृतिरित्येता दशैव स्मरदशाः स्युः"—इति । तत्र सखीसन्निधौ स्वेच्छाप्रकाशनात्त्रपानाशावस्था जाता, यदिदानीमपि नेयमुपचरिता भवेदन्त्यास्तिस्रोऽपि कामावस्था अमङ्गलरूपा भवेयुरिति । ] अत्र पाठान्तरमप्यस्ति तस्येत्थं व्याख्या—

यस्मिन् = राज्ञि दुष्यन्ते, बद्धो भावो यया सा—बद्धभावा = बद्धानुरागा, ललामभूतः=भूषणीभूतः, प्रधानतमो वा, पौरवाणां = पुरुवंश्यानां, युक्तं = योग्यः, योग्यार्थकमव्ययमेतत्, अभिनन्दितुम् = अनुमोदयितुं, तथा = तथैव युक्तम्, यथा भणसि = यथात्वं वदसि, सखि ! = शकुन्तले ! दिष्ट्या = भाग्येन, अनुरूपः = योग्यः, अभिनिवेशः = स्नेहबन्धः, अतिमुक्तलतां = वासन्तीलताम्, पल्लवितां = किसलयवतीं, जातानुरागां वा, सहकारमन्तरेण = रसालपादपं विना, सहते = रञ्जयति,स्वीकुरुते इति वा । वासन्तीलतासमानायाः शकुन्तलाया जातरागायाः सहकार इवानुरूपे दुष्यन्ते भक्तिरित्याशयः । विशाखे = तारकाविशेषयुगलं, चन्द्रलेखाम् = इन्दुलेखाम्, अनुवर्तेते=अनुगच्छतः । [अत्र सख्योर्विशाखासादृश्यं, शकुन्तलायाश्चन्द्रलेखासादृश्यं बोध्यम् । सखीभ्यामस्या अभिलाषोऽनुमत इति युक्तमेवैतदित्याशयः । ]

---

दिष्ट्याऽनुरूपस्तेऽभिनिवेशः, सागरमुज्झित्वा क्व वा महानदी अवतरति । क इदानीं सहकारमन्तरेणातिमुक्तलतां पल्लवितां सहते ? । **राजा**—किमत्र चित्रं—विशाखे शशांकलेखामनुवर्त्तेते । पा०

अन्यसुन्दरी अत्रे ध्रुतीया

**अनसूया**—प्रियम्वदे ! को नु उपायो भवेत् ? येन अविलम्बितं निभृतञ्च सख्या मनोरथं सम्पादयावः ।

[ पियम्वदे ! को णु उवाओ भवे, जेण अविलम्बिदं णिहुदञ्च सहीए मणोरहं सम्पादेह्म ]।

**प्रियम्वदा**—निभृतमिति चिन्तनीयम्, शीघ्रमिति न दुष्करम् । [ णिहुदं त्ति चिन्तणीअं, सिग्घं त्ति ण दुक्करं । ]

**अनसूया**—कथमिव ? । [ कधं विअ ? । ]

**प्रियम्वदा**—ननु सोऽपि राजर्षिरस्मिन् जने स्निग्धदृष्ट्या सूचिताभिलाष एषु दिवसेषु प्रजागरकृश इव लक्ष्यते ।

[ णं सो वि राएसी इमस्सिं जणे सिणिद्धदिट्ठिआ सूइदाहिलासो इमेसुं दिअसेसुं पजाअरकिसो विअ लक्खीअदि । ]

**राजा**—( आत्मानमालोक्य— ) सत्यमित्थम्भूत एवास्मि । तथा हि—

अशिशिरतरैरन्तस्तापैर्विवर्णमलीमसं
निशि निशि भुजन्यस्तापाङ्गप्रवर्तिभिरश्रुभिः ।
अनतिलुलितज्याघाताङ्कान्मुहुर्मणिबन्धनात्
कनकवलयं स्रस्तं स्रस्तं मया प्रतिसार्य्यते ॥१५॥

अविलम्बितं = त्वरितं, निभृतं = निगूढं सविनयञ्च, मनोरथं=दुष्यन्तसमागमलक्षणं, निभृतमिति चिन्तनीयं = केनोपायेन निभृतं भवेदित्येव विचारणीयं, न दुष्करं = न कठिनम् ।

सोऽपि = दुष्यन्तोऽपि, अस्मिन् जने = शकुन्तलायां, स्निग्धया दृष्ट्या= स्नेहमसृणया दृष्ट्या, सूचितोऽभिलाषो यस्यासौ–सूचिताभिलाषः=प्रकटितानुरागः, एषु दिवसेषु = इदानीं, प्रजागरेण कृशः–इव=अनिद्रातान्त इव, लक्ष्यते = दृश्यते । एतेनानिद्रालक्षणाऽवस्था दर्शिता । आत्मनं = स्वशरीरम् , इत्थम्भूतः = प्रियम्वदोक्तावस्थः, कृशतर इति यावत् ।

अशिशिरेति । निशि निशि = प्रतिनिशं, अन्तस्तापैः = हृदयदाहैः,

**प्रियम्वदा**—( विचिन्त्य— ) हला ! मदनलेखनमिदानी-मस्याः क्रियताम्, अहं तत् सुमनोगोपितं कृत्वा देवतासेवापदेशेन तस्य राज्ञो हस्तं प्रापयिष्यामि।

[ हला ! मअणलेहणं दाणिं से करीअदु, अहं तं सुमणोगोविदं कदुअ देवदासेवावदेसेण तस्स रण्णो हत्थं पावइस्सं। ]

**अनसूया**—सखि ! रोचते मे एष सुकुमारः प्रयोगः, किं वा शकुन्तला भणति ?।

[सहि ! रोअदि मे सुउमारो एसो पओओ। किं वा सउन्तला भणादि ?]

---

हेतुभूतैः, अशिशिरतरैः = अत्युष्णैः, भुजे न्यस्तादपाङ्गाद्विवर्त्तन्ते तच्छीलैः—भुजन्यस्तापाङ्गविवर्त्तिभिः=हस्ततलन्यस्तनयनान्तनिर्गतैः, अश्रुभिः=लोचनजलबिन्दुभिः, विवर्णं च तन्मलीमसञ्च—विवर्णमलीमसं = विवर्णमलिनं, कनकस्य वलयं—कनकवलयं, = स्वर्णकङ्कणम्,—न अतिलुलितो ज्याघातस्याङ्को यस्यासौ, तस्मात्—अनतिलुलितज्याऽऽघाताङ्कात् = अनभिव्यक्तमौर्वीकिणभूषितात्, मणिबन्धनात् = प्रकोष्ठात्, मुहुः = भृशं, स्रस्तं—स्रस्तं = भ्रष्टं—भ्रष्टं, पुनः = पुनरपि, प्रतिसार्यते = स्वस्थाने स्थाप्यते। [ स्वभावोक्तिः हरिणीवृत्तम् ] ॥ १५ ॥

मदनलेखनं=कामावस्थासूचकं पत्रलेखनं, तत् = मदनलेखनं, सुमनोभिर्गोपितं—सुमनोगोपितं = पुष्पपटलनिहितं, कृत्वा = विधाय, देवतानां प्रसादस्यापदेशस्तेन = देवताप्रसादापदेशेन = देवताप्रसादोऽयमिति छलेन 'देवतासेवापदेशेने'ति पाठे देवतानां सेवा येन तत्—देवतासेवं = पुष्पादिकं, तस्यापदेशो = व्याजस्तेनेत्यर्थः, सुकुमारः = सरलतरः, अनायासप्रयोज्यः, प्रयोगः = उपायः, किं भणति = तस्यै रोचते किमेतत् ? सखीनां

**शकुन्तला**—सखीनियोगोऽपि विकल्प्यते !

[ सहीणिओओ वि विकप्पीअदि ? ]

**प्रियम्वदा**—तेन आत्मन उपन्यासानुरूपां चिन्तय ललितपदावलिबन्धां गीतिकाम्। [ तेण हि अत्तणो उवण्णासाणुरूअं चिन्तेहि ललिदपदावलिबन्धं गीदिअं। ]

**शकुन्तला**—चिन्तयामि; किन्तु अवधीरणाभीरुकं वेपते मे हृदयम्। [चिन्तेमि ! किन्तु अवहीरणाभीरुअं वेवदि मे हिअअं।]

**राजा**—( विहस्य। )—

अयं स ते तिष्ठति सङ्गमोत्सुको
विशङ्कसे भीरु ! यतोऽवधीरणाम्।
लभेत वा प्रार्थयिता न वा श्रियं,
श्रिया दुरापः कथमीप्सितो भवेत् ? ॥१६॥

---

नियोगः—सखीनियोगः=सख्यादेशः, सख्युपदिष्टं, विकल्प्यते=विचार्यते ?। तेन = यद्यनुमतं पत्रलेखनं तर्हि, उपन्यासस्यानुरूपाम्—उपन्यासानुरूपाम्= स्वाभिप्रायप्रकाशिकां, ललितः पदावलीनां बन्धो यस्यां, तां—ललित-पदावलिबन्धां = कोमलप्रसन्नपदकदम्बगुम्फितां, गीतिकां = छन्दोभेदं, "आर्यापूर्वार्द्धसमं द्वितीयमपि यत्र भवति हंसगते। छन्दोविदस्तदानीं गीतिं तामसृतवाणि भाषन्ते" इत्युक्तलक्षणां। चिन्तय=विरचय, अवधीरणा-भीरुकम् = अवज्ञाभीतं, वेपते = कम्पते, विहस्येति। वृथाऽऽशङ्कमानां शकुन्तलां दृष्ट्वा हासः।

अयमिति। भीरु ! = वृथाभीतितरले !, यतः = दुष्यन्तात्, अवधीरणाम् = अवहेलनम्, विशङ्कसे = आशङ्कसे, सोऽयं = दुष्यन्तः,

अपि च—

अयं स यस्मात्प्रणयावधीरणा—
मशङ्कनीयां करभोरु ! शङ्कसे ।
उपस्थितस्त्वां प्रणयोत्सुको जनो,
न रत्नमन्विष्यति, मृग्यते हि तत् ॥१७॥

सख्यौ—अयि आत्मगुणावमानिनि ! को नाम सन्ताप-

---

ते = तव, सङ्गमे उत्सुकः—सङ्गमोत्सुकः = सङ्गमोत्कण्ठाकुलः, तिष्ठति = त्वदाज्ञां प्रतीक्षमाणस्तिष्ठति । प्रार्थयिता = लक्ष्मीसमुत्सुकः, श्रियं = लक्ष्मीं, लभेत वा = प्राप्नुयाद्वा, न वा = न लभेत वा, परन्तु—श्रिया = लक्ष्म्या, ईप्सितः = प्रार्थयिता, कथं दुरापः ? = कथं न सुलभः ? श्रियाः प्रार्थयिता कदाचित्तां लभते न वा लभत इति युक्तम्, किन्तु लक्ष्म्या किं प्रार्थयितारो दुर्लभाः ?, एवञ्च भवत्याः प्रार्थनां विहातुं नाहं समर्थ इत्याशयः [ सामान्येन विशेषसमर्थनादर्थान्तरन्यासः । 'वंशस्थं' वृत्तं ] ॥१६॥

अयमिति । [1]करभाविवोरू यस्याः सा, करभस्य गजकलभस्योरू इवोरू यस्याः सा वा—करभोरूः, तत्सम्बुद्धौ-हे ! करभोरु ! = करिकरोपमोरु ! यस्मात् = यस्माज्जनात्, अशङ्कनीयां = शङ्कितुमयोग्यां, प्रणयस्यावधीरणां-प्रणयावधीरणां = स्नेहप्रार्थनाभङ्गम्, शङ्कसे = आशङ्कसे, सोऽयं जनः = दुष्यन्तलक्षणो जनः, प्रणये उत्सुकः-प्रणयोत्सुकः = स्नेहोत्कण्ठितः, त्वां = त्वां प्रार्थयितुम्, उपस्थितः=बहिरवतिष्ठते, हि = यतः, रत्नं नान्विष्यति = रत्नं न स्वप्रार्थयितारमन्विष्यति, किन्तु—तत् = रत्नं, मृग्यते = अन्विष्यते, प्रार्थिभिरिति शेषः [ अर्थान्तरन्यासः । 'वंशस्थं' ] ॥ १७ ॥

आत्मनो गुणानवमनुते तच्छीला-आत्मगुणावमानिनी, तत्सम्बुद्धौ-

---

१ "मणिबन्धादाकनिष्ठं करस्य करभो बहिः"रित्यमरात्-करभः=कनिष्ठिकाप्रान्तभागः ।

निर्वाणहेतुकां शारदीं ज्योत्स्नामातपत्रेण निवारयति ? ।

[ अइ अत्तगुणावमाणिणि ! को णाम सन्दावणिव्वाणहेतुअं सारदीअं जोण्णं आदवत्तेण णिवारेदि । ]

शकुन्तला—( सस्मितम्- ) नियोजितास्मि । ( इत्युपविष्टा चिन्तयति । ) [ णिओइदह्मि । ]

राजा—स्थाने खलु विस्मृतनिमेषेण चक्षुषा प्रियामवलोकयामि । यतः—

उन्नमितैकभ्रूलतमाननमस्याः पदानि रचयन्त्याः ।
पुलकाञ्चितेन कथयति मय्यनुरागं कपोलेन ॥१८॥

शकुन्तला—हला ! चिन्तिता मया गीतिका, असन्निहितानि पुनः लेखनसाधनानि ।

[ हला ! चिन्तिदा मए गीदिआ, असण्णिहिदाणि उण लेहणसाहणाणि । ]

---

आत्मगुणावमानिनि ! = स्वगुणगौरवानभिज्ञे !, सन्तापस्य निर्वाणे हेतुरेव हेतुका, तां—सन्तापनिर्वाणहेतुकां = सन्तापशमनकारिणीं, शरदि भवां- शारदीं = शरत्कालभवां, ज्योत्स्नां = चन्द्रिकाम्, आतपत्रेण = छत्रेण, एवञ्च भवत्या सङ्गतः स नूनमात्मानं धन्यमनुमंस्यते, का कथाऽवधीरणाया इति भावः । नियोजिता = कामलेखे नियुक्ताऽस्मि सखीभ्याम्, विस्मृतौ निमेषौ येन तेन-विस्मृतनिमेषेण = निमेषशून्येन, प्रियां = शकुन्तलां स्थाने = उचितेऽवसरे "युक्ते द्वे साम्प्रतं स्थान" इत्यमरः ।

उन्नमितैकेति । पदानि = कवितापदानि, रचयन्त्याः = विरचयन्त्याः, अस्याः = शकुन्तलायाः, उन्नमिता एका भ्रूलता यस्मिन्, तत् = उन्नमितैकभ्रूलतम् = उत्क्षिप्तैकभ्रुकुटिमनोहरम्, आननम् = मुखम्, पुलकैरञ्चितेन- पुलकाञ्चितेन = रोमाञ्चितेन, कपोलेन = गण्डस्थलेन, मयि = दुष्यन्ते अनुरागं = प्रेमबन्धं, कथयति = सूचयति । [ स्वभावोक्तिः, भ्रूलतामित्यत्रोपमा । 'आर्या' ] ॥ १८ ॥

असन्निहितानि = असन्निकटस्थानि, लेखनस्य साधनानि—लेखन-

**प्रियम्वदा**—नन्वस्मिन् शुकोदरसुकुमारे नलिनीपत्रे [1]पदच्छेदभक्त्या नखैरालिख्यताम् । [णं इमस्सिं सुओदरसुउमारे णलिणीवत्ते पदच्छेदभत्तीए णहेहिं आलिहीअदु । ]

**शकुन्तला**—( यथोक्तं रूपयित्वा- ) हला ! शृणुतं तावत् सङ्गतार्था न वेति । [ हला ! सुणध दाव सङ्गदत्था ण वत्ति । ]

**उभे**—अवहिते स्मः । [ अवहिद म्ह । ]

( **शकुन्तला**—वाचयति । )

**तव न जाने हृदयं, मम पुनर्मदनो दिवापि रात्रिमपि ।**
**निष्कृप ! तापयति बलीयस्तव [2]हस्तमनोरथानि अङ्गानि ॥ १९ ॥**

---

साधनानि = लेखनोपकरणानि, मसीपत्रादीनि । शुकस्योदरमिव सुकुमारे-शुकोदरसुकुमारे = कीरक्रोडकोमले, नलिनीपत्रे = पद्मिनीपत्रे, पदानां छेद एव भक्तिस्तया-पदच्छेदभक्त्या, पदच्छेदविधानमार्गेण, नखैरालिख्यतां = नखैरक्षराणि लिख, तावत् = लिखनात्पूर्वं, सङ्गतोऽर्थोऽस्याः-सङ्गताऽर्था = युक्तार्था, अवहिते = दत्तावधाने,

तवेति । निष्कृप !=निर्दय ! तव हृदयं न जाने = तव कीदृशी दशेति न जानामि, पुनः = किन्तु, त्वयि = भवद्विषये, वृत्ता = जाता मनोरथा येषान्तानि-वृत्तमनोरथानि = जाताभिलाषाणि, भवदालिङ्गनादिकमीहमानानि, मे = मम, अङ्गानि = अवयवान्, मदनः = मन्मथः, दिवाऽपि = अहन्यपि, रात्रावपि = रजन्यामपि, रात्रिमपीति पाठे-कालाध्वनोरिति द्वितीया, बलीयः = अत्यर्थं, क्रियाविशेषणमेतत्, तापयति = सन्तापयति ।

यद्वा—तव हृदयं = गोपुरकपाटायमानं रिपुशरकोटिभिरप्यभेद्यमुरःस्थलं, न जाने इति न-किन्तु जान एव आप्तैः श्रवणात् । अत एव मेऽङ्गानि

---

१. पत्रच्छेद्यभक्त्ये'ति शोभनः पाठः । पत्रच्छेद्यं—कलाभेदः । २ 'युक्त' ।

[ तुज्झ ण आणे हिअअं मम उण मअणो दिवा वि रत्तिं वि ।
णिक्किव ! दावइ बलिअं, तुह हत्थमणोरहाइं अङ्गाइं । ]

**राजा**—अवसरः खल्वयमात्मानं दर्शयितुम् (सहसोपसृत्य-)—

तपति तनुगात्रि ! मदनस्त्वामनिशं मां पुनर्दहत्येव ।
ग्लपयति यथा शशाङ्कं, न तथा हि कुमुद्वतीं दिवसः ॥२०॥

---

सर्वाण्यपि दिवानिशं तापयति, तव तु वक्षोमात्रमपि न तापयति, कथमन्यथा निदाघेऽपि शीतलतरं मत्कुचयुगलं परिरम्भणाय भवान्नागच्छति । इत्थं च तादृशं तव वक्ष आलिङ्गितुमिच्छामीत्यर्थो बोध्यः । अनुमानमलङ्कारोऽत्रार्थे ।

यद्वा-हृद्-अयमिति च्छित्वा-अयं जनस्तव हृत् = हृदयमिति 'रूपकं' बोध्यम् ।

कामः पुनर्ममाङ्गानि यत्तापयति, तन्न जान इति प्रश्नकाकुः, वृथैव तापयतीत्यर्थः ।

यद्वा-अयं जनस्तव हृत् = हृदयरूप इति त्वत्कान्तिजितेन कामेन पीड्यत इति, तदहं न जान इति न-किन्तु जान एव । त्वां कठोरत्वात्पीडयितुमशक्तः कामो मां दहतीत्याशयः । प्रत्यनीकालङ्कारः—इत्येवमादयो नानाविधा अर्था राघवभट्टैरुद्दङ्किता विस्तरभयान्नात्र लिख्यन्ते ।

निष्क्रपेत्युक्तेर्वज्रनामकप्रतिमुखसन्ध्यङ्गं दर्शितं, "विरूक्षवचनं यत्तु वज्रमित्यभिधीयते" इत्युक्तेः । अत्र काव्यलिङ्गानुप्रासरूपकसमासोक्त्यादयो बहवोऽलङ्काराः सन्ति ते निपुणं निर्णेयाः । आर्या ] ॥२०॥

उपसृत्य = समेत्य, तपतीति । तनु गात्रं यस्याः सा तनुगात्री, तत्सम्बुद्धौ हे ! तनुगात्रि ! = तन्वि ! मदनः = कामः, त्वाम्, = भवतीम्, तपति = सन्तापयति, पुनः = 'तु,' मां = दुष्यन्तन्तु, अनिशम् = निरन्तरम्, दहत्येव = भस्मीकुरुत एव, हि = यतः–दिवसः = घस्रः, यथा शशाङ्कं = यादृक् चन्द्रमसं, ग्लपयति = म्लापयति, न तथा = न तादृक्, कुमुद्वतीं =

सख्यौ—( विलोक्य सहर्षमुत्थाय- ) स्वागतं यथासमीहितफलस्याविलम्बिनो मनोरथस्य ?।

[ साअदं जधासमीहिदफलस्स अविलम्बिणो मणोरहस्स ? ]

(शकुन्तला—उत्थातुमिच्छति।)

राजा—अलमलमायासेन—

सन्दष्टकुसुमशयनान्याशु विमर्दितमृणालवलयानि।
गुरुपरितापानि न ते गात्राण्युपचारमर्हन्ति ॥२१॥

---

कुमुदिनीं—ग्लपयति। दिवसे चन्द्रस्य यादृशी ग्लानिस्तथा न कुमुदिन्या इति कामेनाहमेव बलवाध्ये, न पुनर्भवतीत्याशयः। [ वाक्ययोर्बिम्बप्रतिबिम्बभावाद् दृष्टान्तालङ्कारः। मदनः=हर्षदः तपतीति विरोधाभासः, मदनपदस्य मन्मथपरत्वात्। 'तनुगात्री'ति पुनरुक्तवदाभासः। अनुप्रासः। यतस्तनुगात्री, अतस्तपतीति पदार्थहेतुकं काव्यलिङ्गञ्च—आर्या ] ॥ २० ॥

समीहितमनतिक्रम्य यथासमीहितं—यथासमीहितं फलं यस्यासौ—तस्य = अभीष्टफलशालिनः, फलोन्मुखस्येति यावत्, अविलम्बिनः=सहसोपयातस्य, मनोरथस्य = अभिलषणीयस्य, दुष्यन्तस्येति यावत्, अलमलमिति। आग्रहातिशयबोधनाय द्विरुक्तिः।

सन्दष्टेति। गुरुः परितः तापो येषान्तानि = गुरुपरितापानि = तीव्रसन्तापानि, अत एव सन्दष्टं कुसुमानां शयनं यैस्तानि—सन्दष्टकुसुमशयनानि = सन्तापपरिलग्नकुसुमशय्यानि, ग्लपितशयनीयकुसुमानि च, आशुविमर्दितानि मृणालानां वलयानि यैस्तानि—आशुविमर्दितमृणालवलयानि = अविलम्बितपरिमर्दितबिसाङ्गदानि, ते=तव, गात्राणि=अवयवाः, उपचारं = लौकिकमर्यादापालनमभ्युत्थानादिकं, नार्हन्ति = न कर्त्तुं योग्यानि। [परिकरालङ्कारः, उत्तरार्द्धं प्रति पूर्वार्द्धार्थस्य हेतुत्वात्काव्यलिङ्गञ्च। 'आर्या']॥२१॥

**शकुन्तला**—( ससाध्वसमात्मगतम्- ) हृदय ! तथा उत्तम्य इदानीं न किमपि प्रतिपद्यसे ।

[ हिअअ ! तधा उत्तम्मिअ दाणिं ण किम्पि पडिवज्जसि । ]

**अनसूया**—इतः शिलातलैकदेशमनुगृह्णातु महाभागः ।

[ इदो सिलादलेक्कदेसं अणुगेह्णदु महाभाओ । ]

( **शकुन्तला**—किञ्चिदपसरति )

**राजा**—( उपविश्य- ) कच्चित् सखीं वो नातिबाधतेऽशरीरतापः ? ।

**प्रियम्वदा**—( सस्मितम्- ) इदानीं लब्धौषध उपशमं गमिष्यति । [ दाणिं लद्धोषधो उव्वसमं गमिस्सदि । ]

( **शकुन्तला**—सलज्जा तिष्ठति । )

---

ससाध्वसं = सभयं, "भीतिर्भीः साध्वसं भय"मित्यमरः । तथोत्तम्य = दुष्यन्तप्रेक्षणे, एवं व्याकुलीभूतोऽपि, इदानीं = सहसोपगते, श्रुतसर्ववृत्तान्ते, किं प्रतिपद्यसे = किमभिधास्यसि, एवं स्वविरहौत्कण्ठ्यं स्वमुखादेव वर्णयित्वेदानीं भृशं लज्जितो भव, का प्रतिपत्तिरित्याशयः। दुष्यन्तस्य सहसोपगमाद् व्रीडिताया नायिकाया इयमुक्तिः ।

शिलातलस्यैकदेशं = शिलाखण्डम्, अनुगृह्णातु = स्वीकरोति । अपसरति = दूरीभवति, लज्जयैवेति बोध्यं । "कच्चित्कामप्रवेदने" वः = युवयोः, सखीं = शकुन्तलां, शरीरतापः = अङ्गपीडा । 'अशरीरे'ति च च्छेदः, अशरीरः = कामः, तज्जनितस्तापः-नातिबाधते-नातितमां बाधते कच्चिदिति प्रश्नः । सस्मितमिति । श्लेषेण कृतं प्रश्नं बुध्वा तथैवोत्तरयन्त्याः स्मितं युक्तमेव, मनोरथसम्पत्त्या वा स्मयः । इदानीं = त्वत्समागमे सति, लब्धमौषधं येनासौ—लब्धौषधः = लब्धभेषजः, शरीरतापः, उपशमं = शान्तिं, निर्वृतिं च, एतेनाक्षरसङ्घातो नाम नाट्यलक्षणमुक्तं—"वर्णानाऽक्षरसङ्घातश्चित्रार्थैरक्षरैर्मितै"रिति ।

प्रियम्वदा—महाभाग ! द्वयोरपि युवयोरन्योन्यानुरागः प्रत्यक्षः; सखीस्नेहः पुनर्मां पुनरुक्तवादिनीं करोति ।

[ महाभाअ ! दोण्णम्पि वो अण्णोण्णाणुराओ पच्चक्खो; सहीसिणेहो उण म पुणरुत्तवादिणीं करेदि । ]

राजा—भद्रे ! नैतत् परिहार्य्यम्, विवक्षितं ह्यनुक्तमनुतापं जानयति ।

प्रियम्वदा—तेन हि शृणोतु आर्य्यः ।

[ तेण हि सुणादु अज्जो । ]

राजा—अवहितोऽस्मि ।

प्रियम्वदा—आश्रमवासिनो जनस्य राज्ञा आर्त्तिहरेण भवितव्यमिति—नन्वेष धर्म्मः ।

[अस्समवासिणो जणस्स रण्णा अत्तिहरेण होदव्वं त्ति णं एसो धम्मो]

---

अन्योन्यानुरागः = परस्परस्नेहः, प्रत्यक्षः = स्पष्ट एव, सख्यां स्नेहः सखीस्नेहः = वयस्याऽनुरागः, पुनरुक्तं वदति तच्छीला, तां—पुनरुक्तवादिनीम् = पुनरुक्तभाषणशीलां, स्पष्टस्यापि परस्परानुरागस्यैवाभिधानात्पुनरुक्तिः, एवञ्च—सखीस्नेहात्तदीयमनुरागमेव भवद्विषयमधिकृत्य किञ्चिद्वच्मीत्याशयः । एतत् = पुनरुक्तिदोषसंसृष्टमपि वचनम्, न परिहार्यं=न त्याज्यम्, यतः—विवक्षितं = वक्तव्यम्, अनुक्तम् = अभाषितं सत्, अनुतापं = सन्तापं, जनयति = विधत्ते, अतोऽवश्यं विवक्षितं वदेत्याशयः । तेन = उत्सुकोऽसि चेत्, अवहितोऽस्मि = श्रोतुं सावधानोऽस्मि,—

आश्रमे वसति तच्छीलस्य—आश्रमवासिनः—जनस्य = तपस्विलोकस्य, आर्त्तिं हरति तच्छीलः—आर्त्तिहरस्तेन=पीडाहरेण, ननु = निश्चितः, एषः = अयं, धर्मः = धर्म्यः पन्थाः । अस्माकं परमस्मत्परं = अस्मदायत्तं, किन्तत् ?—येनार्त्तिपरिहारः स्यादिति प्रश्नाशयः, त्वामेवोद्दिश्य=त्वां निमित्तीकृत्य, इदं = विभाव्यमानम्, अन्याऽवस्था—अवस्थान्तरं = दशाविशेषं, प्रापिता = नीता, अभ्युपपत्त्या = स्वीकारेण, "अभ्युपपत्तिरनुग्रहः"—इति-

राजा—अस्मत्परं किन्तत् ? ।

प्रियम्वदा—तेन हि इयं नः प्रियसखी त्वामेवोद्दिश्य भगवता मदनेनेदमवस्थान्तरं प्रापिता; तदर्हसि अभ्युपपत्त्या जीवितमस्या अवलम्बयितुम् ।

[ तेण हि इअं णो पिअसही तुम जेव उद्दिसिअ भअवदा मअणेण इमं अवत्थन्तरं पाविदा, ता अरिहसि अब्भुववत्तीए जीविदं से अवलम्बइदुं ।]

राजा—भद्रे ! साधारणोऽयं प्रणयः, सर्वथानुगृहीतोऽस्मि ।

शकुन्तला—( अनसूयामवलोक्य— ) हला ! अलं वामन्तःपुरविरहपर्य्युत्सुकेन राजर्षिणोपरुद्धेन ।

[ हला ! अलं वो अन्तेउरविरहपज्जुस्सुएण राएसिणा उवरुद्धेण । ]

राजा—

इदमनन्यपरायणमन्यथा
हृदयसन्निहिते ! हृदयं मम ।
यदि समर्थयसे मदिरेक्षणे[1] !
मदनबाणहतोऽपि हतः पुनः ॥२२॥

---

शाश्वतः । अवलम्बयितुं = धारयितुम्, अर्हसि = योग्योऽसि । साधारणः = उभयोरपि समानावस्थः ।

सर्वथा = भवत्प्रार्थनया, सर्वतो भावेन, स्वीकृतिरतो दर्शिता । अन्तःपुरस्य—तत्रत्यरमणीलोकस्य विरहेण पर्युत्सुकस्तेन = आन्तःपुरिकालोकविरहविकलेन, राजर्षिणा = दुष्यन्तेन, उपरुद्धेन = अवरुद्धेन, वां = युवयोः अमुना व्यापारेण नास्ति किमपि प्रयोजनमित्याशयः ।

इदमिति । हृदये सन्निहिते ! = हृदयेश्वरि ! 'मदिरे ईक्षणे यस्या सा-

---

१ आघूर्णमानमध्या या क्षामा चाञ्चिततारका । दृष्टिर्विकासितापांगा 'मदिरा' तरुणे-मदे" इति भरतः ।

अनसूया—बहुवल्लभाः खलु राजानः श्रूयन्ते, तद्यथा इयं नः प्रियसखी बन्धुजनशोचनीया न भवति; तथा करिष्यति।

[ बहुवल्लहा क्खु राआणो सुणीअन्ति। ता जधा इअं णो पिअसही बन्धुअणसोअणीआ ण होदि, तधा करिस्सदि। ]

राजा—भद्रे! किं बहुना?—

परिग्रहबहुत्वेऽपि द्वे [1]प्रतिष्ठे कुलस्य नः।
समुद्ररसना चोर्वी, सखी च युवयोरियम्॥२३॥

सम्बुद्धौ हे मदिरेक्षणे! = चञ्चललोचने!, इदं = प्रकटिताशयम्, न अन्यत्–परमयनं यस्य तत्–अनन्यपरायणं = त्वदेकप्रणयप्रवणं, मे = मम, हृदयं = चित्तं, यदि—अन्यथा = अन्यपरायणतया, समर्थयसे = निश्चिनुषे, तर्हि, मदनस्य बाणैरेव हतोऽपि = स्मरशरार्दितोऽपि अहं—पुनः = पुनरपि–इतोप्यधिकं, हतः = विपन्नः, हृदयेश्वरी यद्यन्यथाऽस्मान् शङ्कते—का नु गतिरस्माकमिति महन्मे दौर्भाग्यमित्याशयः। [ मदिरेक्षण पदे उपमा, लाटानुप्रासः। परिकरश्च—'हृदयवासिनो' त्यादेः साभिप्राय-विशेषणघटितत्वात्। 'साम' नामकं प्रति मुखसन्ध्यङ्गं,—"तत्र साम प्रियं वाक्यं सानुवृत्तिप्रकाशक"मिति भरतोक्तेः। द्रुतविलम्बितं वृत्तं ] ॥ २२ ॥

बह्व्यो वल्लभा येषां ते–बहुवल्लभाः = अनेकपरिग्रहाः, तत् = तस्मात्, यथा = येनोपायेन, इयं = मुग्धा तपस्विनी, बन्धुभिर्जनैः शोचनीया—बन्धुजनशोचनीया = प्रियजनशोच्या, अयोग्ये पदे निवेशिता चेद्बान्धव-दुःखहेतुरस्या अयमनुरागो भवेदिति भावः। भद्रे! = शुभे! बहुना = अनल्पभाषितेन, किं = किं प्रयोजनं, सारं ते वच्मीत्याशयः।

परिग्रहेति। परिग्रहाणां बहुत्वं तस्मिन्–परिग्रहबहुत्वे = ललनाबा-हुल्येऽपि, "परिग्रहः परिजने पत्न्यां स्वीकारमूलयोः"–इति विश्वः। समुद्रो रसना यस्याः सा–समुद्ररसना = सागरमेखला ( समुद्रान्ता )। उर्वी

[1] प्रतिष्ठा गौरवे स्थिता'' विति हैमः।

उभे—निर्वृते स्वः। [ णिव्वुदाह्म । ]

(शकुन्तला—हर्षं सूचयति ।)

प्रियम्वदा—( जनान्तिकम्- ) अनसूये ! प्रेक्षस्व प्रेक्षस्व मेघवाताहतामिव ग्रीष्मे मयूरीं क्षणे क्षणे प्रत्यागतजीवितां प्रियसखीम् । [ अणसूए ! पेक्ख पेक्ख मेहवादाहदं विअ गिह्मे मोरीं क्खणे क्खणे पच्चाअदजीविदं पिअसहीं ।

शकुन्तला—हला ! मर्षयतं लोकपालम्, यदस्माभिर्विस्रब्धप्रलापिनीभिरुपचारातिक्रमेण भणितम् । [ हला ! मरिसावेध लोअपालं, जं अह्मेहिं विस्सद्धालाविणीहिं उवआरादिक्कमेण भणिदं । ]

---

च = वसुन्धरा च, युवयोः = भवत्योः, इयं = शकुन्तला, मुद्रया सहिता समुद्रा रसना यस्याः सा–समुद्ररसना = मितभाषिणी, मुदं राति ददातीति मुद्रं = रत्नं, तेन सहिता-समुद्रा, रसना यस्याः सेति समासे—रत्नमेखलाललिता चेत्यर्थः । इमे द्वे, मे कुलस्य = अस्मद्वंशस्य, प्रतिष्ठे = मानवर्धिन्यौ । एवञ्चेयमेव पट्टमहिषी भविष्यतीत्याशयः । [ प्रतिष्ठाहेतौ—प्रतिष्ठात्वारोपादतिशयोक्तिः, तुल्ययोगिता, श्लेषः रूपकमनुप्रासश्च । ] ॥२३॥

निर्वृत्ते = सुखिते, सूचयति=नाटयति । जनान्तिकम् = त्रिपताककरेणान्यानपवार्याऽनसूयायै कथयतीत्यर्थः । मेघवाताहतां = मेघप्रापकपवनान्दोलितां, मयूरीमिव = बर्हिणवधूमिव, क्षणे-क्षणे = प्रतिक्षणं, प्रत्यागतं जीवितं यस्याः सा तां–प्रत्यागतजीवितां = समागतप्राणां, वातेन मेघागमाशायाः परिवर्द्धितत्वात्प्रत्यागतप्राणता । मर्षयतं = क्षमापयतं युवां, लोकपालं = दुष्यन्तं, यतः–विश्रब्धं प्रलपितुं शीलं येषान्ताभिः—विश्रब्धप्रलापिनीभिः = यथेच्छमाभाषमाणाभिः, उपचारस्यातिक्रमेण = विनयब-

**सख्यौ**—( सस्मितम्- ) येन तन्मन्त्रितं स एव मर्षयतु, अन्यस्य कोऽत्ययः ?।

[ जेण तं मन्तिदं सो ज्जेव मरिसावेदु, अण्णस्स को अच्चओ ?। ]

**शकुन्तला**—अर्हति खलु महाराज इमं विषोढुम्, परोक्षं वा न किं को मन्त्रयति ?। [ अरिहदि क्खु महाराओ इमं विसोढुम्। परोक्खं वा ण किं को मन्तेदि। ]

**राजा**—( सस्मितम्- )

अपराधमिमं ततः सहिष्ये
यदि रम्भोरु ! तवाङ्गसङ्गमृष्टे।
कुसुमास्तरणे क्लमापहेऽत्र
स्वजनत्वादनुमन्यसेऽवकाशम् ॥२४॥

---

हिर्भावेण, भणितं = भाषितं, निष्कृपेत्यादिभिर्यदस्मै बहुशः उपालम्भो दत्तः, तस्मादस्माभिः क्षमायाचना कार्येत्याशयः।

येन = येन जनेन, त्वयेति यावत्, तत् = अनुचितं, मन्त्रितं = भणितं, स एव = स एव जनः, त्वमेवेति यावत्, मर्षयतु = क्षमापयतु, अन्यस्य = अस्माकं, कोऽत्ययः = का हानिः। त्वयैव क्षमा प्रार्थनीया, यतस्त्वमेव तथा निगदितवतीत्याशयः। इदं = मदुक्तमनुचितं, विषोढुं = क्षन्तुं, परोक्षम् = अप्रत्यक्षं, को वा = कः पुमान्, किं न मन्त्रयति = विमृशति, [ युक्तमयुक्तं वा स्वगृहचत्वरस्थः को न जल्पति, तत्क्षन्तव्यं स्खलितं न इत्याशयः।]

**अपराधमिति।** रम्भे इव ऊरू यस्याः सा—रम्भोरुः, तत्सम्बोधनं, कदलीकाण्डशीतपृथुलतरोरु! इत्यर्थः। इमं = त्वत्कृतम्,—अपराधम् = अविनयं, ततः = तदैव, सहिष्ये = क्षमिष्ये,—यदि = यदा, अङ्गानां

१०

**प्रियम्वदा**—( सोपहासम्- ) ननु एतावता पुनस्तुष्टो भविष्यति ? । [ णं एत्तिकेण उण्ण तुट्ठो भविस्सदि ? । ]

**शकुन्तला**—(सरोषमिव-) विरम विरम दुर्विनीते ! एतावदवस्थां गतया मया क्रीडसि ? ।

[ विरम विरम दुव्विणीदे ! एतावदवत्थं गदाए मए कीलसि ? ]

**अनसूया**—(बहिः-सदृष्टिंक्षेपम्-) प्रियम्वदे ! एष तपस्विमृगपोतक इतस्ततो दत्तदृष्टिर्नूनं मातरं प्रभ्रष्टामन्विष्यति, तत्संयोजयाम्येनम् । [ पिअम्वदे ! एस तवस्सिमिअपोदओ इदो तदो दिण्णदिट्ठी नूणं मादरं पब्भट्टं अण्णेसदि; ता संजोजेमि णं ]

---

सङ्गेन मृष्टे—अङ्गसङ्गमृष्टे = अङ्गसंसर्गपरिम्लाने, अत एव क्लमम पहन्ति तस्मिन् क्लमापहे = क्लान्तिहरे, तव = भवत्याः, अत्र = अस्मिन् , कुसुमानामास्तरणे—कुसुमास्तरणे = पुष्पशयनीये, स्वजनस्य भावस्तत्त्वं तस्मात्- स्वजनत्वात् = आत्मीयबुद्ध्या, अवकाशम् = मदवस्थानम् , अनुमन्यसे = स्वीकुरुषे चेत्, यदि शयनीये मां स्थापयसि, क्षमिष्ये तवापराधमित्याशयः । [ 'रम्भोरु'पदे उपमा, 'त्वदङ्गसंसर्गात्क्लमापहे'—इत्यत्र पदार्थहेतुकं काव्यलिङ्गम् , प्रगमनं नाम प्रतिमुखसन्ध्यङ्गम् , स्वागतमित्यारभ्यैतदन्तमुत्तरप्रत्युत्तरभावस्य सत्त्वात् , "उत्तरोत्तरवाक्यन्तु भवेत्प्रगमनं पुनः"— इत्युक्तेः, औपच्छन्दसिकं वृत्तं । ] ॥ २४ ॥

एतावन्मात्रेण = शय्योपान्तनिवेशमात्रेण, तुष्टः = कृतार्थः, किं मोदकदर्शनमात्रेणैव शक्या क्षुदुपहन्तुं ?, उपहासवाक्यमेतत्, दुर्विनीते = अविनीते ! विरम = मौनमास्स्व, एतावदस्थां = शोचनीयदशां, गतया = प्राप्तयाऽपि मया, क्रीडसि ! = उपहससि माम्, दृष्टिक्षेपेण सह–सदृष्टिक्षेपं = बहिर्विलोक्य, एषः = अतिबालः, स्वयं गन्तुमशक्तः, तपस्वी चासौ मृग-

**प्रियम्वदा**—हला ! चपलः खल्वेषः; नैनं संयोजयितुमेकाकिनी पारयसि, तदहमपि सहायत्वं करिष्यामि। (इत्युभे प्रस्थिते-)

[हला ! चवलो क्खु एसो; ण णं संजोजइदुं एआइणी पारेसि, ता अहम्पि सहाअत्तणं करिस्सं ।]

**शकुन्तला**—हला ! इतोन्यतो न वां गन्तुमनुमन्ये; यत एकाकिन्यस्मि ।

[हला ! इदा अण्णदो ण वो गन्तुं अणुमण्णे, जदो असहाइणी ह्मि ]।

**उभे**—(सस्मितम्-) त्वं तावदसहायिनी ! यस्याः पृथिवीनाथः समीपे वर्त्तते[1] ! ।

[तुमं दाव असहाइणी, जाए पहवीणाहो समीवे वट्टदि ! ]।

(इति निष्क्रान्ते ।)

**शकुन्तला**—कथं गते एव प्रियसख्यौ।

[कधं गदाओ ज्जेव पिअसहीओ ]।

---

पोतकश्च—तपस्विमृगपोतकः = मुग्धमृगकिशोरकः, "तपस्वी तापसे चानुकम्पार्हे"—इति विश्वः। इतस्ततः=प्रतिदिशम्, दत्ता दृष्टिर्येनासौ तथा = निविष्टलोललोचनः, नूनं = ध्रुवं, प्रभ्रष्टां = वियुक्ताम्, अन्विष्यति = गवेषयति। तत् = तस्मात्, संयोजयामि = तदन्तिकं प्रापयामि, चपलः = अतिचपलः, एषः = मृगशावकः, पारयसि = शक्ता भविष्यति । वर्त्तमानसामीप्ये लट्, सहायत्वं = साहाय्यम्, प्रथिते = चलिते। इतः = अस्मात्प्रदेशात्, अन्यतः = अन्यत्र देशे, वां = युवाम्, अनुमन्ये = आज्ञापयामि, असहायाऽस्मि = एकाकिन्यस्मि, तावदिति । 'यस्याः समीपे पृथ्वीनाथो वर्त्तते, सा कथमसहायेति—सोपहासं वचः, इति = इत्युक्त्वा, कथं गते = कुतोऽपयाते—इति सखेदं वचः । 'मद्वचनमनाकलय्य गते' इति एवकारेणो-

---

१ "पृथिव्यां यः शरणं स तव समीपे वर्त्तते" पा०। शरणं—रक्षकः।

राजा—सुन्दरि ! अलमावेगेन; नन्वयमाराधयिता जनस्ते सखीभूमौ वर्त्तते, तदुच्यताम्—

किं शीकरैः क्लमविमर्दिभिरार्द्रवातं-
सञ्चालयामि नलिनीदलतालवृन्तम् ।
अङ्के निधाय चरणावुत पद्मताम्रौ-
संवाहयामि करभोरु ! यथासुखन्ते ॥२५॥

शकुन्तला—न माननीयेषु जनेषु आत्मानमपराधयि-

---

द्वेगः सूचितः, आवेगेन = उद्वेगेन, अलं = न प्रयोजनम्, ननुर्वाक्यालङ्कारे, आराधयिता = हृदयनिवेशितत्वत्प्रतिमः, सखीनां भूमिस्तस्यां-सखीभूमौ= सखीस्थाने, सहचरपदे-इति यावत, तत् = तस्मात्, उच्यताम् = कथय-किं करोमीत्यग्रिमश्लोकेन सम्बध्यते ।

किमिति । क्लमं विमृद्नन्ति तच्छीलैः—क्लमविमर्दिभिः = सन्ताप-हारिभिः, शीकरैः = जलकणैः, आर्द्रो वातो यस्य तत्—आर्द्रवातं = क्लिन्न-पवनं, नलिनीनां दलैर्निर्मितं—तालवृन्तं—नलिनीदल-तालवृन्तं = पद्मिनी-पत्रविरचितं व्यजनं, "व्यजनं तालवृन्तं स्या"दित्यमरः । सञ्चालयामि=वीज-यामि किम् ?। उत = किं वा ? हे! करभोरु ! = परिवृत्तोरु ! पद्मवत्ताम्रौ—पद्मताम्रौ = कमलोदररक्तौ, ते = तव, चरणौ = पादौ, अङ्के = उत्सङ्गे, निधाय = स्थापयित्वा, यथासुखं = मन्दमन्दं, संवाहयामि = मर्दयामि, [ पूर्वार्धोत्तरार्धयोर्विकल्पालङ्कारः, काव्यलिङ्गपरिकरवृत्त्यनुप्रासाः । पद्मताम्र-करभोरुपदयोरुपमा, नलिनीदले तालवृन्तत्वारोपस्य प्रकृतोपयोगित्वात्परि-णामः, उपन्यासो नाम प्रतिमुखसन्ध्यङ्गं, तदुक्तं विश्वनाथेन—"उपन्यासः प्रसादन"मिति । माला नाम नाट्यभूषणञ्च प्रदर्शितं—"माला स्यादद-भीष्टार्थप्रकाशन"मिति भरतात् । वसन्ततिलकं छन्दः ] ॥२५॥

माननीयेषु = चक्रवर्त्तितया माननीयेषु, जनेषु = भवद्विधेषु, आत्मान-

ष्यामि, । (इत्यवस्थासदृशमुत्थाय प्रस्थातुमिच्छति) ।

[ ण माणणीएसुं जणेसुं अत्ताणं अवराहइस्सं ] ।

**राजा**—(अवष्टभ्य-) सुन्दरि! अपरिनिर्वाणो दिवसः, इयञ्च ते शरीरावस्था—

उत्सृज्य कुसुमशयनं नलिनीदलकल्पितस्तनावरणा ।
कथमातपे गमिष्यसि परिबाधाकोमलैरङ्गैः ॥२६॥

(इति बलान्निवारयति ।) ।

**शकुन्तला**—मुञ्च मुञ्च माम्; न खलु आत्मनः प्रभवामि; अथवा सखीमात्रशरणा किमिदानीमत्र करिष्यामि ! ।

---

मपराधयिष्यामि = संवाहनादिकर्मानुज्ञानेनात्मानं कृतपापाचरणं विधास्यामि, अवस्थासदृशं = विरहजन्मकार्श्यानुरूपं, मन्दं मन्दमिति यावत् । प्रस्थातुं = गन्तुम्, अवष्टभ्य=पटाञ्चलं धृत्वा । अपरिनिर्वाणः = अशान्ततापः, असमाप्तः, प्रखरताप इति यावत्, इयम् = ईदृशी, विरहविधुरा, शरीरस्य अवस्था—शरीरावस्था = देहदौर्बल्यादिकदर्थिता दशा ।

उत्सृज्येति । नलिनीदलैः कल्पितं स्तनयोरावरणं यया सा—नलिनीदलकल्पितस्तनावरणा = कमलिनीपत्रावृतस्तनाभोगा, परिबाधया कोमलानि तैः—परिबाधाकोमलैः = व्यथाकदर्थितैः, कृशतरैः, अङ्गैः = अवयवैरुपलक्षिता, कुसुमकल्पितं शयनं-कुसुमशयनं = पुष्पशय्याम्, उत्सृज्य = विहाय, आतपे = निदाघे, कथं गमिष्यति = द्वित्राणि पदान्यपि गन्तुं न समर्था भविष्यसीत्याशयः । [ अनुप्रासः, परिकरः, काव्यलिङ्गम्, "उपपत्तिकृतो योऽर्थं उपन्यासस्तु स स्मृतः—" इति भरतोक्तोपन्यासलक्षणानुसारेणोपन्यासो नाम प्रतिमुखसन्ध्यङ्गमेतेन दर्शितः । 'आर्या' ] ॥२६॥

बलान्निवारयति = अनिच्छन्तीमपि बलादवरुणद्धि । आत्मने = स्वशरीराय, गुरुजनाधीनाऽहं, न स्वयं वपुस्ते दातुम्प्रभवामीत्याशयः । सख्यावेव शरणं यस्याः सा—सखीमात्रशरणा = सखीमात्रपरिरक्षिता, [ नात्र

[ मुञ्च मुञ्च मं; ण क्खु अत्तणो पहवामि । अथवा सहीमेत्तसरणा किं दाणिं एत्थ करिस्सं ] ।

**राजा**—धिग् व्रीडितोऽस्मि ।

**शकुन्तला**—न खल्वहं महाराजं भणामि, दैवमुपालभे।
[ ण क्खु अहं महाराअं भणामि, देव्वं उवालहामि ] ।

**राजा**—अनुकूलकारि दैवं कथमुपालभ्यते ? ।

**शकुन्तला**—कथमिदानीं न उपालप्स्ये, यन्मामात्मनोऽनीशां कृत्वा परगुणैर्लोभयति । [ कधं दाणिं ण उवालहिस्सं, जं मं अत्तणो अणीसं कदुअ परगुणेहिं लोहावेदि । ]

**राजा**—( स्वगतम्- ) ।

अप्यौत्सुक्ये महति दयितप्रार्थनासु प्रतीपाः,
काङ्क्षन्त्योऽपि व्यतिकरसुखं कातराः स्वाङ्गदाने ।
आबाध्यन्ते न खलु मदनेनैव लब्धान्तरत्वात्,
आबाधन्ते मनसिजमपि क्षिप्तकालाः कुमार्य्यः ॥२७॥

---

तातकण्वः सन्निहितः, राजा चायं बलशाली, तत्को नस्त्राता भविष्यति, हा हताऽस्मि, ] किमिदानीं = बलात्कारमाचरितुं प्रवृत्ते राजनि, व्रीडितः = लज्जितः, [ अनिच्छन्त्यां बलात्कारेण प्रवर्त्तमानोऽनया शकुन्तलया तातकण्वं स्मरन्त्योपालब्धो—लज्जितोऽस्मि । ]

न खलु = नैव भणामि = उपालभे, किन्तु—दैवं = भाग्यम्, उपालभे = निन्दामि । अनुकूलं कर्त्तुं शीलमस्य—अनुकूलकारि = अभीष्टं सम्पादयत्, उपालभ्यते=निन्द्यते ? मत्सङ्गमनमभिलषन्त्यास्तव दैवेन मया योजनमनुकूलमेवेत्याशयः । उपालप्स्ये = निन्दिष्यामि, आत्मनोऽनीशाम् = स्वशरीरस्यापि अस्वतन्त्राम्, परस्य = दुष्यन्तस्य, गुणैः = सौन्दर्यादिभिः, लोभयति = तदभिलाषिणीं—विधत्ते, अतो दैवं निन्दामीत्याशयः ।

अप्यौत्सुक्य इति—महति = विपुलेऽपि, औत्सुक्ये = औत्कण्ठ्ये,

(शकुन्तला—गच्छत्येव—)

राजा—न कथमात्मनः प्रियं करिष्ये।

(उपसृत्य पटान्तमवलम्बते)।

शकुन्तला—पौरव! रक्ष रक्ष विनयम्, इतस्ततः ऋषयः सञ्चरन्ति। [पोरव! रक्ख रक्ख विणअं, इदो तदो इसिओ सञ्चरन्ति]।

राजा—सुन्दरि! अलं गुरुजनाद्भयेन, न ते विदितधर्म्मा तत्रभवान् कण्वः खेदमुपयास्यति, यतः—

---

दयितस्य = प्रियस्य, प्रार्थनासु = अभ्यर्थनासु, प्रतीपाः = विपरीताः, व्यतिकरेण = परस्परसमागमेन, यत्सुखं, तत् काङ्क्षन्त्योऽपि = अभिलषन्त्योऽपि, स्वस्य यदङ्गं तस्य दाने = स्वशरीरसमर्पणे, कातराः = भीरुकाः, कुमार्यः = मुग्धाङ्गनाः, लब्धमन्तरं येनासौ तस्य भावस्तत्त्वात्—लब्धाऽन्तरत्वात् = प्राप्तावसरतया, मदनेनैव = कामेनैव, आबाध्यन्ते = पीड्यन्ते, इति न खलु = नैवमेतत्, किन्तु—क्षिप्तः कालो याभिस्ताः—क्षिप्तकालाः=मौग्ध्येन—व्यतिक्रान्तसुरतसमयाः, सत्यः, मनसिजमपि = मदनमपि, = आबाधन्ते= पीडयन्ति, सङ्गमेच्छायां—सत्यामपि मदनेन ताड्यमाना अपि कालं क्षिपन्त्यः स्वाङ्गदाने कातरा मदनमपि विडम्ब्य पीडयन्तीति भावः। [अन्योन्यमलङ्कारः, क्षिप्तकालाः सत्यो मदनेन पीड्यन्त इति पदार्थहेतुकं काव्यलिङ्गं, शकुन्तलाप्रस्तावे मुग्धासामान्येन कथनादप्रस्तुतप्रशंसा च। 'मन्दाक्रान्ता'] ॥ २७ ॥

गच्छत्येव = निवर्त्यमानाऽपि गन्तुं प्रवर्त्तत एव, आत्मनः प्रियं = स्वेप्सितं, प्रियाऽवरोधनात्मकं, कथं न करिष्ये = करिष्याम्येव,—

उपसृत्य = गत्वा, पटान्तं = वल्कलाञ्चलम्, अवलम्बते = गृह्णाति। विनयं = शालीनतां, शिष्टतां, रक्ष = पालय, धाष्टर्यं मा कुरु, इतस्ततः = सर्वतः, सञ्चरन्ति = पर्यटन्ति, तत्कथं न लज्जसे, गुरुजनात् = कण्वादितः,

गान्धर्वेण विवाहेन बह्व्योऽथ मुनिकन्यकाः ।
श्रूयन्ते परिणीतास्ताः पितृभिश्चानुमोदिताः ॥२८॥

(दिशोऽवलोक्य –) कथं प्रकाशं निर्गतोऽस्मि । (शकुन्तलां हित्वा पुनस्तैरेव पदैर्निवर्त्तते ) ।

**शकुन्तला**—(पदान्तरे प्रतिनिवृत्य साङ्गभङ्गम्–) पौरव ! अनिच्छापूरकोऽपि सम्भाषणमात्रपरिचितोऽयं जनो न विस्मर्त्तव्यः । [ पौरव ! अणिच्छापूरओ वि सम्भासणमेत्तपरिचिदो अअं जणो ण विसुमरिदव्वो ] ।

---

भयेन = भीत्या, अलं = न प्रयोजनं, विदितो धर्मो येनासौ—विदितधर्मा = ज्ञातधर्मतत्त्वः, ("धर्मादनिच् केवलात्" इत्यनिच् ,) तत्रभवान् = पूज्यः, कण्वः = काश्यपः, ते = तवोपरि, खेदं = क्रोधम् , नोपयास्यति = न समेष्यति । तदलं भीरु ! शङ्कया, अनुभव स्मरोपनतं रतिसुखमित्याशयः ।

अथ = कार्त्स्न्येन, बह्व्यः = सहस्रशः, मुनिकन्यकाः = ऋषिकुमार्यः, गान्धर्वेण विवाहेन="इच्छयाऽन्योन्यसंयोगः कन्यायाश्च वरस्य च । गान्धर्वः स तु विज्ञेयो मैथुन्यः कामसम्भवः" इति मनूक्तलक्षणेन । विवाहविधिना, परिणीताः = कृतोद्वाहाः, ताः = गान्धर्वविधिना कृतोद्वाहाश्च, पितृभिः = गुरुजनैः, अनुमोदिताः = अभिनन्दिताः, श्रूयन्ते = पुराणादिषु गीयन्ते, अतो भयं विहाय विहर यथाकामं कामिनि ! सफलय स्मरपीडितं मामिति भावः । उपदिष्टं नाम नाटकलक्षणं सूचितमेतेन, तदुक्तम् ,—"उपदिष्टं मनोहारि वाक्यं शास्त्रानुसारतः—" इति ॥२८॥

दिशः = इतस्ततः, प्रकाशम् = अनावृतं प्रदेशं, निर्गतः = समायातः, शकुन्तलामनुसरन् लतामण्डपाद्बहिर्यातोऽस्मीति भावः । हित्वा = परित्यज्य, 'तैरेव पदै' रिति लोकोक्तिः । तथैव त्वरितं निवृत्त इति तदाशयः । पदान्तरे= द्वित्राणि पदानि गत्वा, प्रतिनिवृत्य = ततोऽपि पुनरागत्य, अङ्गभङ्गेन

राजा—सुन्दरि !

त्वं दूरमपि गच्छन्ती हृदयं न जहासि मे।
दिवावसाने च्छायेव पुरो मूलं वनस्पतेः ॥२९॥

शकुन्तला—(स्तोकमन्तरं गत्वा आत्मगतम्-) हा धिक् ! हा धिक् ! इदं श्रुत्वा न मे चरणौ पुरोमुखौ प्रसरतः। भवतु, एभिः पर्य्यन्तकुरबकैरपवारितशरीरा भूत्वा प्रेक्षिष्ये तावदस्य भावानुबन्धम्। (तथा कृत्वा स्थिता) [ हद्धी हद्धी ! इमं सुणिअ ण मे चलणा पुरमुहा पसरन्ति। भोदु, इमेहिं पज्जन्तकुरुवएहिं ओवारिदसरीरा भविअ पेक्खिस्सं दाव से भावाणुवन्धं। ]।

राजा—कथमेवं प्रिये ! अनुरागैकरसं मामुत्सृज्य निरपेक्षैव गतासि—

---

सहितं—साङ्गभङ्गम् = सलीलं, अङ्गानि मोटयित्वा वा, न इच्छायाः पूरकः—अनिच्छापूरकः = अपूरिताभिलाषः, सम्भाषणमात्रेण परिचितः = आलापमात्रपरिचितः, अयं जनः = शकुन्तलारूपः।

त्वमिति। दिवावसाने = दिनापगमे, वनस्पतेः = वृक्षस्य, पुरो मूलं = मूलाग्रभागं, छायेव = अनातप इव, त्वं = भवती, दूरमपि गच्छन्ती = दूरतरमपगच्छन्त्यपि, मे = मम, हृदयं = स्वान्तं, न जहासि = न त्यजसि, अतो विस्मरणवार्त्तैव कुत इत्याशयः। [ उपमा ] ॥२९॥

इदं श्रुत्वा = ईदृशं स्नेहानुबन्धं विज्ञाय। पुरोमुखौ = गन्तव्यदिगभिमुखम्, अग्रतः, प्रसरतः = चलतः। पर्यन्ते स्थिताः कुरबकाः—पर्यन्तकुरवकाः, तैः—पर्यन्तकुरबकैः = परिसरवर्त्तिकुरबकैः, अपवारितं शरीरं यस्याः सा—अपवारितशरीरा = तिरोहिताङ्गयष्टिः, भावस्यानुबन्धं–भावानुबन्धं = अनुरागसम्बन्धं, तथा कृत्वा = लतापिहिततनुः, अनुराग एव एको रसो यस्यासौ तम्—अनुरागैकरसं=प्रणयपेशलं, माम्=ईदृशीदशामुपगतम्,

अनिर्दयोपभोगस्य रूपस्य मृदुनः कथम् ।
कठिनं खलु ते चेतः शिरीषस्येव बन्धनम् ॥३०॥

शकुन्तला—इदं श्रुत्वा न मेऽस्ति विभवो गन्तुम्।
[ एदं सुणिअ ण मे अत्थि विभवो गच्छिदुं । ]

राजा—सम्प्रति प्रियाशून्ये किमस्मिन् लतामण्डपे करोमि। (अग्रतोऽवलोक्य ।) हन्त ! व्याहतं मे गमनम्—

मणिबन्धाद् गलितमिदं संक्रान्तोशीरपरिमलं तस्याः ।
हृदयस्य निगडमिव मे मृणालवलयं स्थितं पुरतः ॥३१॥

( सबहुमानमादत्ते ) ।

---

एवम् = अगणितनिर्बन्धम् , उत्सृज्य = विहाय, निरपेक्षैव = निःस्नेहैव ।

अनिर्दयोपेति—अनिर्दयमुपभोगो यस्य तस्य—अनिर्दयोपभोगस्य= मन्दमन्दमुपभोग्यस्य, मृदुनः = कोमलस्य, ते = तव, रूप्यते इति रूपं, तस्य–रूपस्य=शरीरस्य, शिरीषस्य = कुसुमविशेषस्य, बन्धनमिव= वृन्तमिव, कठिनं = कठोरं, चेतः = चित्तं, कथं खलु ? = कथं जातम् !। मृदूपभोगस्य वपुषोऽसदृशं ते कठिनं हन्त ! स्वान्तं सम्पन्नम् । [ विभावना- विशेषोक्त्योः सन्देहसङ्करः । शिरीषस्येवेत्युपमा च ] ॥३०॥

इदं श्रुत्वा = उपालम्भनमिदं श्रुत्वा, गन्तुं—विभवः=सामर्थ्यं, नास्ति। सम्प्रति = इदानीं, प्रियया शून्ये प्रियाशून्ये = शकुन्तलाविरहिते, लता- मण्डपे = वानीरलतामण्डपे, व्याहतं=केनापि वस्तुनाऽवरुद्धं, प्रियावलयस्य लाभादित्याशयः ।

मणिबन्धेति । तस्याः = शकुन्तलायाः, मणिबन्धात्=कलाचिकायाः, ( कलाई इति भाषा ) गलितं = स्रस्तं, सङ्क्रान्तम्—उशीरस्य परिमलो यस्मिंस्तत्–सङ्क्रान्तोशीरपरिमलं = संसर्गसङ्क्रान्तनलदामोदनिर्भरं, मे= मम, हृदयस्य = मनसः, निगडमिव = बन्धनकटकमिव, गमनावरोधि-

**शकुन्तला**—(हस्तं विलोक्य-) अहो ! दौर्बल्यशिथिलतया परिभ्रष्टमेतन्मृणालवलयं न मया परिज्ञातम् । [ अम्मो ! दोब्बल्लसिढिलदाए परिब्भट्टं एदं मिणालवलअं ण मए परिण्णादं । ]

**राजा**—(मृणालवलयमुरसि निक्षिप्य-) अहो ! स्पर्शः—

अनेन लीलाभरणेन ते प्रिये !
विहाय कान्तं भुजमत्र तिष्ठता । वंशस्थ
जनः समाश्वासित एष दुःखभा-
गचेतनेनापि सता न तु त्वया ॥३२॥

---

तया निगडौपम्यं, इदं मृणालवलयं = मृणालनिर्मितं हस्ताभरणं, मे पुरतः स्थितं = मदग्रे वर्त्तते, मध्यमणिन्यायान्मेशब्दस्योभयत्रान्वयः । [ उत्प्रेक्षा, काव्यलिङ्गमपि केचित्समर्थयन्ते । 'आर्या' ] ॥३१॥

सबहुमानं = सादरं, अम्मो ! इत्यव्ययं खेदे । दौर्बल्येन या शिथिलता, तया-दौर्बल्यशिथिलतया = अस्वास्थ्यकृतकार्श्यशैथिल्येन, परिभ्रष्टं = गलितम् । उरसि = हृदये, निक्षिप्य = आधाय, स्पर्शः—अहो ! = सुखदः स्पर्श इत्यर्थः ।

**अनेनेति ।** प्रिये ! = दयिते कान्तं = मनोज्ञं, तव भुजं = बाहुं, विहाय, परित्यज्य, तिष्ठता = समवस्थितेन, अचेतनेनापि = जडेनाऽपि, सता = दयालुना, अनेन = पुरतो विलोक्यमानेन, ते = तव, लीलायै-आभरणं, तेन—लीलाभरणेन = क्रीडाऽऽभूषणेन मृणालवलयेन, दुःखं भजतीति-दुःखभाक् = कामसन्तापकर्शितः, एष जनः = अयं दुष्यन्तलक्षणो लोकः, समाश्वासित एव = धैर्यं लम्भित एव, तु = पुनः, त्वया = सहृदयधोरणीधुरीणया भवत्या, न = नैव ! महदेव तेऽद्भुतमभिनवं काठिन्यं चेतस इत्याशयः । [ परिसंख्या, व्यतिरेकश्च । वंशस्थं वृत्तम् । ] ॥३२॥

**शकुन्तला**—अतः परं न समर्थास्मि विलम्बितुम्, भवतु एतेनैवापदेशेनात्मानं दर्शयिष्यामि । (इत्युपसर्पति) [अदो वरं ण समत्थह्मि विलम्बिदुं । भोदु, एदेणज्जेव अवदेसेण अत्ताणं दंसइस्सं]।

**राजा**—(दृष्ट्वा सहर्षम्-) अये ! जीवितेश्वरी मे प्राप्ता । परिदेवनानन्तरं प्रसादेनोपकर्त्तव्योऽस्मि खलु दैवस्य—

पिपासाक्षामकण्ठेन याचितश्चाम्बु पक्षिणा ।
नवमेघोज्झिता चास्य धारा निपतिता मुखे ॥३३॥

**शकुन्तला**—(राज्ञः सम्मुखे स्थित्वा-) आश्चर्य ! अर्द्धपथे स्मृत्वा एतस्य हस्तभ्रंशिनो मृणालवलयस्य कृते प्रतिनिवृत्तास्मि; कथितं मे हृदयेन, त्वया गृहीतमिति । तन्निक्षिपेदं मा मामात्मानञ्च

---

एतेन = मृणालवलयानयनरूपेण, अपदेशेन = व्याजेन, आत्मानं दर्शयिष्यामि = वानीरमण्डपं प्रविशामि, उपसर्पति = गमनं नाटयति। दृष्ट्वा=शकुन्तलां विलोक्य, मे जीवितस्येश्वरी = मम प्राणेश्वरी । परिदेवनानन्तरं = विलापानन्तरं, प्रसादेन = प्रियासमागमरूपानुग्रहेण, दैवस्य = विधेः = उपकर्त्तव्यः = अनुग्राह्यस्तद्वशम्वदः, अस्मि = जातः ।

पिपासेति । पिपासया क्षामः कण्ठो यस्य तेन—पिपासाक्षामकण्ठेन= तृषाक्षीणशुष्कगलबिलेन, पक्षिणा = चातकेन, च=अम्बु = जलं, याचितं = प्रार्थितम् । नवेन मेघेन उज्झिता = नवमेघोज्झिता = अभिनवजलधरविसृष्टा, च = पुनः, धारा = जलधारा, मुखे = आस्ये, पतिता = प्रविष्टा, [चकारद्वयेन प्रार्थनपतनक्रिययोरेककालिकत्वकथनात्समुच्चयालङ्कारः । अप्रस्तुतप्रशंसां केचन मन्वते । ] ॥३३॥

एतस्य = त्वत्करस्थितस्य, मृणालवलयस्य = बिसकङ्कणस्य, हस्तभ्रंसिनः = मञ्जुजभ्रष्टस्य, अर्धपथे = पथोऽर्धे, स्मृत्वा=विचिन्त्य, कृते=तदर्थं, तच्च त्वया गृहीतमिति मम हृदयेन कथितमिति सम्बन्धः । तत् = यतो

मुनिजनेषु प्रकाशयिष्यति। [ अज्ज ! अद्धपधे सुमरिअ एदस्स हत्थ-ब्भंसिणो मिणालवलअस्स किदे पड़िणिवुत्तह्मि, कधिदं मे हिअएण तुए गहिदं त्ति। ता णिक्खिव एदं, मा मं अत्ताणञ्च मुणिअणेसुं पआसइस्सदि। ]

राजा—एकेनाभिसन्धिना प्रत्यर्पयामि।

शकुन्तला—केन पुनः ?।

[ केणउण ? ]

राजा—यदीदमहमेव यथास्थानं निवेशयामि।

शकुन्तला—आः, का गतिः। भवत्वेवं तावत्। (इत्युपसर्पति-) [आ, का गदी। भोदु एदं दाव।]

राजा—इतः शिलापट्टैकदेशं संश्रयावः।

(इत्युभौ परिक्रम्योपविष्टौ।)

राजा—( शकुन्तलाया हस्तमादाय- ) अहो स्पर्शः—

हरकोपाग्निदग्धस्य दैवेनामृतवर्षिणा।

प्ररोहः सम्भृतो भूयः किं स्वित् कामतरोरयम् ?॥३३॥

---

भवतैव गृहीतं तस्मात्, निक्षिप = समर्पय, मा—मेति निषेधदार्ढ्याय। यदीदं त्वया धृतं स्यान्मुनयो मत्सङ्गतं त्वां जानीयुरिति भावः। अभिसन्धिना = लाभेच्छया, इदं = मृणालवलयं, स्थानमनतिक्रम्य यथास्थानं = समुचिते स्थाने त्वद्भुजलक्षणे, 'आः' इति पीडासूचनाय। गतिः = उपायः, एवन्तावत् = एवमेव, त्वमेव भुजे परिधापयेत्यर्थः। शिलापट्टस्यैकं देशं—शिलापट्टैकदेशं = शिलाफलकप्रदेशं, संश्रयावः = उपविशावः। स्पर्शः = शरीरसंस्पर्शोऽपि, अहो ! = अतितरां सुखदः।

हरेति। हरस्य कोप एवाग्निस्तेन दग्धस्य—हरकोपाग्निदग्धस्य = स्मरहरलोचनानलभस्मीकृतस्य, काम एव तरुस्तस्य = कामवृक्षस्य, अमृतं

**शकुन्तला**—(स्पर्शं रूपयित्वा—) त्वरतां त्वरतामार्यपुत्रः ।

[ तुवरदु तुवरदु अज्जउत्तो ]

**राजा**—( सहर्षमात्मगतम्— ) इदानीमस्मि विश्वसितः; भर्त्तुराभाषणपदमेतत् । ( प्रकाशम् ) । सुन्दरि ! नातिश्लिष्टः सन्धिरस्य मृणालवलयस्य; यदि तेऽभिमतं, तदन्यथा घटयिष्यामि ।

**शकुन्तला**—( स्मितं कृत्वा— ) यथा ते रोचते ।

[ जधा दे रोअदि । ]

**राजा**—(सव्याजं विलम्ब्य प्रतिमोच्य—) सुन्दरि ! दृश्यताम्—

अयं स ते श्यामलतामनोहरं
विशेषशोभार्थमिवोज्झिताम्बरः ।
मृणालरूपेण नवो निशाकरः
करं समेत्योभयकोटिमाश्रितः ॥३५॥

---

वर्षति तच्छीलेन—अमृतवर्षिणा = सुधामुचा, दैवेन = दिष्टेन, भूयः सम्भृतः= पुनरपि पोषितः, प्ररोहः = अभिनवोऽङ्कुरोद्भेदः । अयं किंस्वित् = किमयम् । [ रूपकं, सन्देहश्च । ] ॥३४॥

विश्वसितः = जाताश्वासः, एतत् = आर्यपुत्रेति पदं, भर्त्तुः = पत्युः, आभाषणे पदं—आभाषणपदं—संलापप्रयोज्यं सम्बोधनपदम्, "सर्वस्त्रीभिः पतिर्वाच्य आर्यपुत्रेति यौवने" इत्युक्तेः । अतिश्लिष्टः = सुश्लिष्टः, सन्धिः = ग्रन्थिसन्धिः, तेऽभिमतं = भवत्यै रोचते, अन्यथा = पुनरपि सुश्लिष्टं, घटयिष्यामि = रचयामि, सव्याजं विलम्ब्य = केनापि च्छलेन रचना-परिधापनादिव्यापारेषु कालविलम्बं विधाय, सुखस्पर्शलोभेनैव विलम्ब इति ध्येयम् । प्रतिमोच्य = भुजे परिधाप्य ।

अयमिति । विशेषशोभायै इति—विशेषशोभार्थम् = अतिशय-

**शकुन्तला**—न तावदेनत् प्रेक्षे, पवनकम्पितकर्णोत्पल-रेणुना कलुषीकृता मे दृष्टिः।

[ण दाव णं पेक्खामि, पवणकम्पिदकण्णुप्पलरेणुणा कलुसीकिदा मे दिट्ठी।]

**राजा**—( सस्मितम्- ) यद्यनुमन्यसे, तदहमेनां वदनमारुतेन विशदां करवाणि।

**शकुन्तला**—तदाऽनुकम्पिता भवेयम्; किन्तु पुनरहं न ते विश्वसिमि।

[ तदो अणुकम्पिदा भवेअं; किन्तु उण अहंण दे वीससेमि । ]

**राजा**—मा मैवम् , नवो हि परिजनः सेव्यानामादेशात् परं न वर्त्तते।

---

सौन्दर्यसम्पदर्थम्, उज्झितमम्बरं येनासौ–उज्झिताम्बरः = परित्यक्तगगनाङ्गणः, सोऽयं = जगद्विदितसौन्दर्यः, नवः = अभिनवा, कलामात्रसारः, कलङ्कविकलः, निशाकरः = कलानिधिः, श्यामलतया=नीलिम्ना, श्यामलता 'ज्योतिष्मती' तद्वन्मनोज्ञमिति वा, करं = भुजं, मृणालरूपेण = मृणालाकारेण, समेत्य = प्राप्य, उभयकोटिं = प्रान्तद्वयमाश्रितः = वलयाकारेण कुण्डलीकुरुते। वलयाकारतामाश्रयत इत्यर्थः। [उत्प्रेक्षा। वंशस्थं] ॥२५॥

एनत् = मृणालवलयं, प्रेक्षे = द्रष्टुं शक्नोमि, पवनेन कम्पितं यत् कर्णोत्पलं, तस्य रेणुना = वातान्दोलितकर्णपूरपरागेण, कलुषीकृता = आविला, एनां = दृष्टिं, वदनमारुतेन = मुखवातेन, विशदां = प्रसन्नां, अनुकम्पिता = अनुगृहीता, न विश्वसिमि = न ते विश्वासः, एतद्व्याजेन कमप्यविनयं भवान् विदध्यात्। मा मैवं=नैवमविश्वासो विधेयः। नवः = सद्यो नियुक्तः, परिजनः = सेवकः, सेव्यानां = स्वामिनाम्, आदेशात् = आज्ञायाः, परम् = अधिकं, न वर्त्तते = नाचरति। अत्यादरः = स्वामित्वेन निर्देशात्प्रतीयमानः, अविश्वासजनकः=अविश्रम्भभाजतां मे ऽग्रनक्तीत्यर्थः।

**शकुन्तला**——अयमेवात्यादरोऽविश्वासजनकः।
[ अअं ज्जेव अच्चाअरो अविस्सासजणओ। ]

**राजा**——( स्वगतम्— ) नाहमेवं रमणीयमात्मनः सेवावसरं शिथिलयिष्ये। (मुखमुन्नमयितु प्रवृत्तः।)

( [1]शकुन्तला— प्रतिषेधं रूपयन्ती विरमति। )

**राजा**—अयि मदिरेक्षणे ! अलमस्मदविनयाशङ्कया।

( शकुन्तला—किञ्चिद् दृष्ट्वा व्रीडावनतमुखी तिष्ठति। )

**राजा**—अङ्गलीभ्यां मुखमुन्नमय्य, आत्मगतम् )—

चारुणा स्फुरितेनायमपरिक्षतकोमलः।
पिपासतो ममानुज्ञां ददातीव प्रियाधरः ॥३६॥

---

एवं रमणीयम् = अतिपेशलं, सेवावसरं = उपचारावसरं, एकान्ते विस्रब्धप्रियालाभादुपनतं, नेत्रविशदीकरणरूपं, शिथिलयिष्ये = अपनयामि, मनसि विभाव्येत्थं,—लोचनरजोऽपनयनाय प्रवर्त्तमाने राजनि—शकुन्तला, प्रतिषेधं रूपयन्ती = निषेधं नाटयन्ती—

अविनयस्याशङ्का तया—अविनयाशङ्कया = धाष्टर्याशङ्कया, नाहं बलात्कारविरसं प्रणयं करिष्यामीत्याशयः। एवञ्च ते नेत्ररज एवापनेष्यामीति भावः।

**चारुणेति।** अपरिक्षतश्चासौ—कोमलश्च—अपरिक्षतकोमलः = अनुच्छिष्टो मृदुतरश्च, प्रियाया अधरः = प्रियाधरोष्ठः, चारुणा = मनोहरेण,

---

१ **शकुन्तला**—मुञ्च तावन्मां भूयोऽपि सखीजनमनुमानयिष्ये। **राजा**—भवतु मोक्ष्यामि, **शकुन्तला**—कदा, **राजा**—"अपरिक्षतकोमलस्य यावत्कुसुमस्येव नवस्य षट्पदेन। अधरस्य पिपासता मया ते सदयं सुन्दरि ! गृह्यते रसोऽस्य"—(इति मुखमस्याः समुन्नायितुमिच्छति, शकुन्तला परिहरीत नाट्येन।) पा°

**शकुन्तला**—परिज्ञानमन्थर इव आर्य्यपुत्रः।
[ परिण्णाणमन्थरो विअ अज्जउत्तो। ]

**राजा**—कर्णोत्पलसन्निकर्षादीक्षणमूढोऽस्मि।
( इति मुखमारुतेन चक्षुः सेवते। )

**शकुन्तला**—भवतु, प्रकृतिस्थदर्शनास्मि संवृत्ता। लज्जे पुनरनुपकारिणी प्रियकारिण आर्य्यपुत्रस्य। [भोदु, पइदित्थदंसणह्मि संवुत्ता। लज्जेमि उण अणुवआरिणी पिअआरिणो अज्जउत्तस्स। ]

**राजा**—सुन्दरि ! किमन्यत्—

इदमप्युपकृतिपक्षे सुरभि मुखं ते यदाघ्रातम्।
नन्वु कमलस्य मधुकरः सन्तुष्यति गन्धमात्रेण ॥३७॥

---

स्फुरितेन = स्फुरणेन, पिपासतः = सतृष्णस्य पानाभिलाषिणः, अनुज्ञाम् = अनुमतिं, ददातीव = प्रयच्छतीव, [ उत्प्रेक्षा। ] ॥३६॥

परिज्ञाने = लोचनपतितरजोविज्ञाने, मन्थरः = उदासीन इव, कर्णोत्पलस्य, सन्निकर्षात् = सान्निध्यात्, ईक्षणे = नेत्रपरिज्ञाने, ( इदं नेत्रमिदं वेति परिज्ञानाभावात्, एतेन लोचनस्य नीलोत्पलसादृश्यं सूचितम्। ) मूढोऽस्मि = अजातनिश्चयोऽस्मि। अथवा—ईक्षणे = प्रेक्षणे। सेवते = फूत्करोति। प्रकृतिस्थं दर्शनं–लोचनं–यस्याः सा = रेणवपगमात्स्वस्थलोचना, संवृत्ता = जाता। प्रियं कर्त्तुं शीलमस्य–तस्य–प्रियकारिणः = उपकार–परायणस्य, अनुपकारिणी = अप्रत्युपकारकारिणी, अन्यत् = उपकारान्तरम्।

इदमिति। सुरभि = सुगन्धि, ते = तव, मुखं = वदनकमलं, यदाघ्रातं = यदनुभूतं, इदमपि = एतदपि, उपकृतिपक्षे = उपकारकोटौ गण्यताम्। ननु = यतः—मधुकरः = भ्रमरः, कमलस्य = पद्मस्य, गन्धमात्रेण = सौरभमात्रेण, सन्तुष्यति = प्रसीदति। तदलमुपकारान्तरचिन्तयेत्याशयः। [ प्रतिवस्तूपमा, दृष्टान्तो वा 'आर्या' ] ॥३७॥

**शकुन्तला**—( सस्मितम्- ) असन्तोषे पुनः किं करोति ?
[ असन्तोसे उण किं करेदि ? ]

**राजा**—इदम्- (-इति व्यवसितः । )

( **शकुन्तला**— वक्त्रं ढौकते । )

( नेपथ्ये—) चक्रवाकवधु ! आमन्त्रयस्व सहचरम्, ननु उपस्थिता रजनी ।

[ चक्कवाअवहु ! आमन्तेहि सहचरं, णं उअत्थिदा रअणी । ]

---

असन्तोषे = गन्धमात्रेण यदि न सन्तुष्यति, तदा, किं करोति = भ्रमरः किं कुरुते ? । यदि भवान् वदनगन्धमात्रेण न तुष्येत्, तदा मया किं प्रत्युपकरणीयमिति सरलः प्रश्नाशयः । व्यवसितः=मुखं चुम्बितुं प्रवृत्तः । ढौकते = ददाति । अपनयतीति व्याख्यानं तु न रहस्यविदाम् ।

[ १६० पृष्ठे टिप्पण्याम्— अपरिक्षतेति । हे सुन्दरि ! = मानिनि ! अपरिक्षतं च तत्कोमलं च तस्य—अपरिक्षतकोमलस्य = भ्रमरादिनाऽक्षतस्य, मृदुनः, नवस्य = अभिनवस्य, कुसुमस्य = प्रसूनस्य, षट्पदेनेव = भ्रमरेणेव, पातुमिच्छता—पिपासता = सतृष्णेन, मया = त्वत्प्रणयिना, ते = तव, अस्य = कामनिधानभूतस्य, अधरस्य = अधरोष्ठस्य, सदयं = मन्दं मन्दं, यावदित्यवधिं द्योतयति । कात्स्न्येन वा—यदि, रसः—गृह्यते=आस्वाद्यते, यदि मह्यमिममधरोष्ठं दातुं प्रतिजानासि तदा त्वां मुञ्चामीत्याशयः । [ श्लेष-वाच्योपमा, अनुप्रासः 'औपच्छन्दसकं' । ]

संभोगस्य दर्शयितुमयोग्यतया तौ विघटयितुं द्वितीयं पताकास्थानकं योजयति-नेपथ्य इति । चक्रवाकवधु ! = हे ! चक्रवाकि ! सहचरं = प्रियम्, आमन्त्रयस्व = आपृच्छस्व = प्रस्थातुमाज्ञां याचस्व, रजनी=निशा, उपस्थिता = आयाति । रात्रौ चक्रवाकमिथुनं वियुज्यते इति वियोगसमयस्ते समुपस्थित इत्याशयः । अमुनाऽप्रकृतेन च— "शकुन्तले ! दुष्यन्त-

**शकुन्तला**—( कर्णं दत्त्वा ससम्भ्रमम्। ) आर्य्यपुत्र ! एषा खलु तातकण्वस्य धर्म्मकनीयसी मम वृत्तान्तोपलम्भननिमित्त-मार्य्या गौतमी आगच्छति; तद्विटपान्तरितो भव।

[अज्जउत्त ! एसा क्खु तादकण्णस्स धम्मकणीअसी मम वुत्तन्तोवलम्भ-णणिमित्तं अज्जा गोदमी आअच्छदि; ता विडवान्तरिदो होहि। ]

**राजा**—तथा। ( इत्येकान्ते स्थितः। )

( ततः प्रविशति पात्रहस्ता गौतमी- )

**गौतमी**—जाते ! अत्याहितं श्रुत्वा आगता; एतत् शान्त्युदकम्। ( दृष्ट्वा समुत्थाप्य च। ) इह देवतासहायिनी तिष्ठसि ?।

[ आदे ! अच्छाहिदं सुणिअ आअदा; एदंशान्तिउदअं। इध देवदास-हाइणीचिट्ठसि ?। ]

---

मापृच्छस्व, उपस्थिता तत्र भवती गौतमी" ति प्रस्तुतो गम्योऽर्थः। [अप्रस्तुतप्रशंसा चेयं, इत्थञ्च द्वितीयं पताकास्थानकमेतत्-तदुक्तं धनिकेन- "प्रस्तुतागन्तुभावस्य प्रस्तुताऽन्योक्तिसूचकम्। पताकास्थानवत्तुल्यसंविधान-विशेषण"मिति। प्रकृते चान्योक्त्या सूचनमर्थान्तरस्येति पताकास्थानक-मेतत्, "मुखे, प्रतिमुखे गर्भे, विमर्शे च चतुर्ष्वपि। भेदाः सन्धिषु कर्त्तव्याः पताकास्थानकस्य तु"-इति मातृगुप्ताचार्योक्तेर्युक्तं पताकास्थानकम्। ]

कर्णं दत्त्वा = श्रवणं नाटयित्वा, ससम्भ्रमं = सत्वरं, तातकण्वस्य = पितुः कण्वस्य, धर्मतः कनीयसी-धर्मकनीयसी = कनिष्ठा धर्मभागिनी, असहोदराऽपि धर्मसम्बन्धाद्भगिनी धर्मभगिनीत्युच्यते। वृत्तान्तस्योपलम्भनं, तस्य निमित्तं-वृत्तान्तोपलम्भननिमित्तं = मद्वृत्तान्तज्ञानार्थम्, आर्या=पूज्या, विटपान्तरितः = शाखाव्यवहितः, तथा = विटपान्तरितो भवामि, एतेन विरोधो नाम प्रतिमुखाङ्गं दर्शितं-"विरोधो व्यसनप्राप्तिः"-इति लक्षणात्। एकान्ते = रहसि, जाते ! = पुत्रि ! अत्याहितं=शरीरास्वास्थ्यम्, एतत्=इदं, शान्त्युदकं = शान्तिजलं, गृहाणे'ति शेषः, दृष्ट्वा=हस्तेन स्पृष्ट्वा, समुत्थाप्य=

**शकुन्तला**—इदानीमेवानसूयाप्रियम्वदे मालिनीमवतीर्णे।
[ दाणिं ज्जेव अणसूआपिअम्वदाओ मालिणीं ओदीण्णाओ। ]

**गौतमी**—( शान्त्युदकेन शकुन्तलामभ्युक्ष्य। ) जाते! निरावाधा मे चिरंजीव। अपि लघुसन्तापानि अङ्गानि ?। (इति स्पृशति)।
[ जादे ? णिरावाधा मे चिरंजीव। अवि लहुसन्दावाइं अङ्गाइं ?। ]

**शकुन्तला**—अम्मो ! अस्ति विशेषः।
[ अम्मो ! अत्थि विसेसो। ]

**गौतमी**—परिणतो दिवसः; तदेहि उटजमेव गच्छावः।
[ परिणदो दिअसो; ता एहि उडअं ज्जेव गच्छह्म। ]

**शकुन्तला**—( कथंचिदुत्थाय स्वगतम्- ) हृदय ! प्रथमं सुखोपनते मनोरथे कालहरणं करोषि, [1]साम्प्रतमनुभव तावत् दुःखम्। ( पदान्तरे प्रतिनिवृत्य प्रकाशम्- ) लतागृह ! सन्तापहर ! आमन्त्रयामि त्वां पुनरपि परिभोगार्थम् (-इति निष्क्रान्ते। )
[ हिअअ ! पढमं सुहावणदे मणोरहे कालहरणं करेसि; सम्पदं अणुभव दाव दुक्खं, लदाघर ! सन्दावहर ! आमन्तेमि तुमं पुणोवि परिभोअत्थं। ]

---

शिलाफलकादुत्थाप्य, देवतासहायिनी = देवतामात्रसहाया, एकाकिनीति यावत्। एकाकिनीत्यमङ्गलप्रायं वचोऽनया न प्रयुक्तं। मालिनीं = तदाख्यां स्रवन्तीम्, अवतीर्णे = स्नातुं गते। अभ्युक्ष्य = अभिषिच्य, निराबाधा = अपगतव्यथा, लघुः सन्तापो येषान्तानि—लघुसन्तापानि = शान्तव्यथानि, स्पृशति = हस्तेन परामृशति। अम्मो !—इति हर्षे देशी, विशेषः = पूर्वतो लाघवं, परिणतः = अस्तमितः, उटजं = पर्णशालां, सुखेन उपनते—सुखोपनते = अनायासलब्धे, मनोरथे = अभि-

[1] "सानुशयं विघटितस्य कथन्ते साम्प्रतं सन्तापः"। अनुशयः—पश्चात्तापः।

**राजा**—( पूर्वस्थानमुपेत्य सनिश्वासम् । ) अहो ! विघ्नवत्यः प्रार्थितार्थसिद्धयः । मया हि—

मुहुरङ्गुलिसंवृताधरोष्ठं
प्रतिषेधाक्षरविक्लवाभिरामम् ।
मुखमंसविवर्त्ति पक्ष्मलाक्ष्याः
कथमप्युन्नमितं, न चुम्बितं तु ॥३८॥

---

लापभूते प्रियतमे, कालस्य हरणं–कालहरणं = कालक्षेपं, वृथा मौग्ध्येन कालं क्षिपन्ती न कृतार्थमात्मानं कृतवती, साम्प्रतम् = इदानीं, दुःखं = प्रियवियोगं, लतागृह ! = लतागृहसन्निहितप्रियतम ! सन्तापं हरति तच्छील ! = सन्तापहर ! = तापहारिन्, प्रिय दुष्यन्त ! आमन्त्रये = प्रार्थये, परिभोगार्थं = सन्तापहरणार्थं, पुनरप्यागन्तव्यमिति भावः । लतागृहमपि शीतलतया सन्तापहारकं, परिभोगः = स्वसम्भोगः, सुखञ्च । अनेन मनोरथो नाम भूषणं–"मनोरथस्तु व्याजेन विवक्षितनिवेदन"मित्युक्त-लक्षणं सूचितम् । प्रार्थितानामर्थानां सिद्धयः–प्रार्थिताऽर्थसिद्धयः = अभि-लषितार्थसम्पत्तयः, विघ्नवत्यः = सान्तरायाः, गौतमीप्राप्त्या प्रियाविप्र-लम्भादभिलषितस्य विहतत्वात् ।

मुहुरिति । मुहुर्वारंवारम्, अङ्गुल्या संवृतः–अधरोष्ठो यत्र तत्, अङ्गुलिसंवृताधरोष्ठं = तर्जनीसमाच्छादिताधरोष्ठं, प्रतिषेधाक्षराणां विक्ल-वेन = वैक्लव्येन–स्फुटमनुच्चारणेनाभिरामं–प्रतिषेधाक्षरविक्लवाभिरामं = मा-माऽलमाद्यक्षरास्फुटोच्चारणहृद्यम् । विक्लवशब्दो धर्मपरः, अंसयोर्विवर्त्तितुं शीलं यस्य तत्—अंसविवर्त्ति = स्कन्धपरावर्त्तनशीलं, पक्ष्मले अक्षिणी यस्यास्तस्याः पक्ष्मलाक्ष्याः = चारुनेत्रलोमललितलोचनायाः, मुखं = वदनं, कथमपि = यत्नशतादपि, मया उन्नमितं = चुम्बनार्थमुन्नमितं, तु = किन्तु, न चुम्बितं, गौमतीसमागमादेव, [ स्वभावोक्तिः, श्रुतिवृत्त्यनुप्रासौ,

क नु खलु सम्प्रति गच्छामि। अथवा इहैव प्रियापरिभुक्ते लतामण्डपे मुहूर्त्तं तिष्ठामि। (सर्वतोऽवलोक्य—)

तस्याः पुष्पमयी शरीरलुलिता शय्या शिलायामियं,
कान्तो मन्मथलेख एष नलिनीपत्रे नखैरर्पितः।
हस्ताद् भ्रष्टमिदं बिसाभरणमित्यासज्जमानेक्षणो
निर्गन्तुं सहसा न वेतसगृहादीशोऽस्मि शून्यादपि॥३९॥

कथमपीत्येतदर्थं प्रति विशेषणत्रयार्थस्य हेतुत्वेनोपादानात्—काव्यलिङ्गम्। औपच्छन्दसकं वृत्तं] ॥३८॥

सम्प्रति = प्रियाविरहितः, प्रियया परिभुक्ते प्रियापरिभुक्ते = प्रियावस्थानमनोज्ञे, मुहूर्त्तं = क्षणमात्रं,—

तस्या इति। शिलायां = शिलापट्टे, तस्याः = प्रियायाः, शरीरेण = वपुषा, लुलिता = इतस्ततो विक्षिप्ता, पुष्पाणि प्रकृतानि यत्र सा—पुष्पमयी = कुसुमकल्पिता, इयं = पुरतो दृश्यमाना, नलिन्याः = कमलिन्याः, पत्रे = दले, नखैः = कररुहैः, अर्पितः = उल्लिखितः, कान्तः = ललितपदः, एषः = निकटतरं दृश्यमानः, मन्मथलेखः = कामलेखः, हस्तात् = भुजलतायाः, भ्रष्टं = परिगलितम्, इदं = पुरतो विभाव्यमानं, विसाभरणं = मृणालवलयं, दृश्यत इति शेषः। इति = इत्थम्, आसज्जमाने ईक्षणे यस्यासौ—आसज्जमानेक्षणः = संसक्तलोचनयुगलः, शून्यादपि = प्रियारहितादपि, वेतसगृहात् = वानीरकुञ्जात्। निर्गन्तुं = बहिर्यातुं, सहसा = अकस्मात्, न शक्नोमि = न पारयामि, प्रियापरिचितान्याभरणादीनि निरीक्षमाणो नास्माद्वेतसकुञ्जाद्बहिर्गन्तुं समर्थ इत्याशयः। [निर्गमस्य कारणे शून्यत्वे सति यस्तदभावः—सा विशेषोक्तिः, प्रियासद्भावरूपकारणाभावेऽपि गमनविलम्बरूपकार्योदयाद्विभावना। द्वयोरपि साधकबाधकप्रमाणाभावा-

(विचिन्त्य-) अहो धिग् ! असम्यक् चेष्टितं-प्रियां समासाद्य कालहरणं कुर्वता मया। तदिदानीम्—

रहः प्रत्यासत्तिं यदि सुवदना यास्यति पुन-
र्न कालं हास्यामि, प्रकृतिदुरवापा हि विषयाः।
इति क्लिष्टं विघ्नैर्गणयति च मे मूढहृदयं
प्रियायाः प्रत्यक्षं किमपि च तथा कातरमिव ॥४०॥

(नेपथ्ये-) भो भो राजन् !

सायन्तने सवनकर्म्मणि सम्प्रवृत्ते
वेदिं हुताशनवतीं परितः प्रकीर्णाः।

---

त्सन्देहसङ्करः। "पुष्पं वाच्यं विशेषवत्—" इति धनिकोक्तेः-पुष्पं नाम प्रतिमुखसन्ध्यङ्गं चतुर्थचरणे बोध्यम्। शार्दूलविक्रीडितम् ] ॥३९॥

धिक् = मां धिक्, असम्यक् = अनुचितं, चेष्टितम् = आचरितं, कालहरणं = कालक्षेपं, कुर्वता = मुहुर्मुहुः सम्प्रयोगशतान्यनाचरता,

रह इति। सुवदना = कमलवदना, रहः = रहसि, पुनः = पुनरपि यदि प्रत्यासत्तिं=समागमं, यास्यति = प्राप्स्यति, तदा कालं न हास्यामि= कालक्षेपं न करिष्यामि, [ अहो ! महाराजदुष्यन्तस्य हतगाम्भीर्याः प्राकृत-जनसाधारणा उक्तयः ! ] हि = यतः, विषयाः = मनोरथाः, प्रकृत्यैव दुर-वापाः = स्वभावदुर्लभाः,—इति = इत्थं, विघ्नैः = दुरदृष्टकल्पितैरन्तरायैः गौतम्यागमनरूपैः, क्लिष्टं = विक्लवं, मे = मम, मूढं = मुग्धं, हृदयं = स्वान्तं, प्रियायाः = प्रेयस्याः, प्रत्यक्षं = पुनः समागमं, गणयति = प्रतीक्षते, कल्पयति च, तथा = किञ्च—कातरमिव = इतरपामरजनसाधारणमिव किंकर्त्तव्यशून्यं खिद्यमानं, किमपि = एवमेवं प्रियां प्राप्य करिष्याम्यात्मनो मतमिति सङ्कल्पशतान्याचरतीति शेषः। [ उत्प्रेक्षा 'शिखरिणी' ] ॥४०॥

नेपथ्ये = जवनिकायां, क्वचिदाकाश इति पाठः। सायन्तन इति।

छायाश्चरन्ति बहुधा भयमादधानाः
सन्ध्याभ्रकूटकपिशाः पिशिताशनानाम् ॥४१॥

राजा—( आकर्ण्य सावष्टम्भम्—) भो भोस्तपस्विनः ? मा भैष्ट, अयमहमागत एव । (—इति निष्क्रान्तः । )

12.4.61

❀ तृतीयोऽङ्कः ❀

---

सायं भवे—सायन्तने = सायङ्कालिके, सवनमेव कर्म—सवनकर्म—तस्मिन्-सवनकर्मणि = यज्ञकर्मणि, सम्यक् प्रवृत्ते—प्रारब्धे सति, हुताशनवर्ती = वैश्वानरवर्ती, वेदिं = यज्ञवेदिं, परितः = सर्वतः, प्रकीर्णाः = इतस्ततो विक्षिप्ताः, अत एव बहुधा = नैकविधं, भयं = साध्वसम्, आदधानाः = कुर्वाणाः, पिशितमशनं येषान्तेषां—पिशितानानां=रक्षसां, सन्ध्यायामभ्राणि तेषां कूटमिव कपिशाः—सन्ध्याभ्रकूटकपिशाः = सन्ध्यामेघपुञ्जवत्कृष्णपीतवर्णाः, छायाः = प्रतिबिम्बानि, "छाया सूर्यप्रिया कान्तिः प्रतिबिम्बमनातपः—"इत्यमरः । बहुधा = नैकविधं, सञ्चरन्ति = समायान्ति । 'बहुधे'ति मध्यमणिन्यायादुभयात्राप्यन्वेति [ श्रुतिच्छेकवृत्त्यनुप्रासाः, परितः प्रकीर्णा अत एव भयमादधाना इति हेतुहेतुमद्भावात्काव्यलिङ्गं, 'सन्ध्याभ्रकूटकपिशा' इत्यत्र श्रोपमा । 'वसन्ततिलका' ] ॥४१॥

आकर्ण्य = श्रुत्वा, सावष्टम्भं = सधैर्यं, मा भैष्ट = भयं न कार्यम् । अयं = पूर्वानुभूतः, अहं=महेन्द्रादीनामपि साहाय्यकारी महाराजो दुष्यन्तः, आगत एव = द्रागेवागच्छामि, इति = इत्यभिधाय, निष्क्रान्तः = गतः । "अन्तनिष्क्रान्तनिखिलपात्रोऽङ्क"—इत्युक्तेरङ्कान्ते पात्रनिर्गमस्यावश्यकत्वादिति शिवम् ।

तृतीयोऽङ्कः ।

---

# चतुर्थोऽङ्कः ।

( ततः प्रविशतः कुसुमावचयमभिनयन्त्यौ सख्यौ । )

**अनसूया**—हला प्रियम्वदे ! यद्यपि गान्धर्वेण विवाह-विधिना निर्वृत्तकल्याणा प्रियसखी शकुन्तला अनुरूपभर्तृभागिनी संवृत्ता,[1] तथापि मे न निर्वृतं हृदयम् ।

[ हला पिअम्वदे ! जइ वि गन्धव्वेण विवाहविहिणा णिव्वुत्तकल्लाणा पिअसही सउन्तला अणुरूवभत्तिभाइणी संवुत्ता, तहवि मे ण णिव्वुदं हिअअं ।]

**प्रियम्वदा**—कथमिव ? । [ कधं विअ ? । ]

---

## ❋ अभिनवराजलक्ष्मीः ❋

इत आरभ्य गर्भसन्धिस्तृतीयः सार्धपञ्चमेऽत्र निबद्ध इति राघवभट्टादयः, विश्वनाथस्तु दर्पणे—"यत्र मुख्यफलोपाय उद्भिन्नो गर्भतोऽधिकः, शापाद्यैः सान्तरायश्च स विमर्श इति स्मृतः—"इति वदन्—"यथा—शाकुन्तले चतुर्थाङ्कादौ—'अनसूया—पिअंवदे जइ वि।' इत्याद्यारभ्य सप्तमाङ्के शकुन्तला प्रत्यभिज्ञानात्प्राग्विमर्शसन्धि"रित्युदाहरंश्च—विमर्शसन्धिं मनुते । अस्माभिस्तु राघवानुसारेणैव सन्धिरङ्गानि च प्रदर्शितानि । "आदौ विष्कम्भकं कुर्यान्नाटकेषु महाकविः, अपेक्षितं परित्यज्य,-नीरसं वस्तुविस्तरं, यदा संदर्शयेच्छेषं कुर्याद्विष्कम्भकं तदा, यथोचितन्तु विष्कम्भं सर्वाङ्केषु प्रकल्पये"दिति भरतोक्तेरादौ विष्कम्भकं योजयति—तत इति। कुसुमानामवचयं = पुष्पादानम्, अभिनयन्त्यौ = नाटयन्त्यौ, हलेति सखीसम्बोधनं, निर्वृत्तं कल्याणं यस्याः सा निर्वृत्तकल्याणा = जातविवाहमङ्गला, "कल्याणं मङ्गलेऽपि चे"ति विश्वः । अनुरूपं=योग्यं, भर्तारं = दुष्यन्तं, गच्छति तच्छीला—

---

१ "संवृत्तेति निर्वृतं मे हृदयं, तथाप्येतावच्चिन्तनीयम्" पा० ।

**अनसूया**—अद्य स राजर्षिरिष्टिपरिसमाप्त्या ऋषिभिर्विसर्जित आत्मनो नगरं प्रविश्य अन्तःपुरसमागमादिमं जनं स्मरति नवेति ? । [अज्ज सो राएसी इट्ठिपरिसमत्तीए इसिहिं विसज्जिदो अत्तणो णअरं पविसअ अन्तेउरसमागमादो इमं जण सुमरेदि ण वेत्ति ।]

**प्रियम्वदा**—अत्र तावत् विश्वस्ता भव । नहि तादृशा आकृतिविशेषा गुणविरहिणो भवन्ति । एतावत् पुनश्चिन्तनीयं, तातस्तीर्थयात्रातः प्रतिनिवृत्त इमं वृत्तान्तं श्रुत्वा न जाने किं प्रतिपत्स्यत इति । [ एत्थ दाव वीसत्था होहि । णहि तादिसा आकिदिविसेसा गुणविरहिणो होन्ति । एत्तिअं उण चिन्तणीअं, तादो तीत्थजात्तादो पडिणिउत्तो इमं वुत्तन्तं सुणिअ ण आणे किं पडिवज्जिस्सदि त्ति । ]

**अनसूया**—[1]यथा मां पृच्छसि, तथा अभिमतं तातस्य ।

[ जधा मं पुच्छसि, तधा अभिमदं तादस्स । ]

**प्रियम्वदा**—कथमिव ? । [ कधं विअ ? ]

---

अनुरूपभर्त्तृगामिनी, संवृत्ता=जाता, निर्वृतं = सुखितं, राजर्षिः = दुष्यन्तः, इष्टिपरिसमाप्त्या = यज्ञस्य समाप्ततया, विसर्जितः = अनुज्ञातनगरगमनः, आत्मनो नगरं = हस्तिनापुरम्, अन्तःपुरस्य = तत्रस्थललनाजनस्य, समागमात्=संप्राप्तेः, इमं=शकुन्तलालक्षणं, अत्र=अस्मिन् विषये, विश्वस्ता=विस्रब्धा, तादृशाः=दुष्यन्ते दृश्यमानाः, आकृतिविशेषाः=महापुरुषादिसूचकाश्चिह्नविशेषाः, गुणैर्विरहोऽस्त्येषां ते—गुणविरहिणः=सौजन्यादिगुणरहिताः, "यत्राकृतिस्तत्र गुणा वसन्ती"त्यभियुक्तोक्तेः । तातः=कण्वः, तीर्थयात्रातः=सोमतीर्थात्, प्रतिनिवृत्तः = परावृत्तः, इमं वृत्तान्तं=शकुन्तलाविवाहरूपं, प्रतिपत्स्यते=ज्ञास्यति, करिष्यति वा, यदि मां पृच्छसि = मम मतं पृच्छसि

---

१ "यथाऽहं प्रेक्षे, पश्यामी"ति वा पाठे यथाशब्दो योग्यतायां, योग्यतया=सुष्ठु, अहं जानामीत्यर्थः ।

**अनसूया**—अनुरूपस्य वरस्य हस्ते कन्यका प्रतिपादनीयेति—अयं तावत् प्रथमः कल्पः । तं यदि दैवं सम्पादयति ननु कृतार्थो गुरुजनः ।

[ अणुरूवस्स वरस्स हत्थे कण्णआ पडिवादणीअत्ति अअं दाव पढमो कप्पो । तं जइ देव्वं सम्पादेदि, णं कअत्थो गुरुअणो । ]

**प्रियम्वदा**—एवमेतत् , ( पुष्पभाजनं विलोक्य- ) सखि ! अवचितानि खलु बलिकर्म्मपर्य्याप्तानि कुसुमानि ।

[ एवण्णेदं सहि ! अवचिदाइं क्खु वलिकम्मपज्जत्ताइं कुसुमाइं । ]

**अनसूया**—ननु शकुन्तलाया अपि सौभाग्यदेवता अर्च्चितव्यास्तदपराण्यप्यवचिनुवः । [ णं सउन्तलाए वि सोहग्गदेवदाओ अच्चिदव्वाओ, ता अवराइं वि अवचिणुह्म । ]

**प्रियम्वदा**—युज्यते । ( इति तदेव कर्म्माभिनयतः । )

[ जुज्जदि । ]

( नेपथ्ये- ) अयमहं भोः ! ।

**अनसूया**—(कर्णं दत्त्वा-) सखि ! अतिथिनेव निवेदितम् ।

---

चेत् तदाऽभिमतं तातस्य = कण्वस्येदं संमतमेवेति मे मतम्, अनुरूपस्य = योग्यस्य, कल्पः = कर्त्तव्यं कर्म । तत् = कर्तव्यं कर्म, दैवं = भाग्यं । स्वत एव भवेदिति यावत्, ननु = निश्चितं, कृतार्थः = कृतकृत्यः, तत्रान्यथाप्रतिपत्तेरवसर एव नास्तीत्यर्थः । पुष्पभाजनं=पुष्पकरण्डकं, खलु = निश्चयेन, बलिकर्मणे पर्याप्तानि = देवपूजापर्याप्तानि, सौभाग्यदेवताः = मङ्गलागौर्यादयः, सौभाग्याधिष्ठातृदेवता विवाहत आरभ्यावश्यपूज्याः, अपराण्यपि = इतोऽधिकान्यपि कुसुमानि, युज्यते = आवश्यकमेतत् कर्मेति तदुक्तानुमोदनं, तदेव = पुष्पावचयमेव, नेपथ्ये = जवनिकायां ।

अयमहं भोः=भोः गृहस्वामिन् ! अहं समुपस्थितस्ते गृहद्वारि, दुर्वाससोवाक्यमेतत्, निवेदितं = स्वागमनसूचकं वचः, ननुरत्र प्रश्ने, निश्चये, स्मरणे

[ सहि ! अदिधिणा विअ णिवेदिदं । ]

**प्रियम्वदा**—ननु उटजे सन्निहिता शकुन्तला ।

[ णं उड़ए सण्णिहिदा सउन्तला । ]

**अनसूया**—आम्, अद्य पुनरसन्निहिता हृदयेन । तेन हि भवतु, एतावद्भिः कुसुमैः प्रयोजनम्—(–इति प्रस्थिते ।)

[ आं, अज्ज उण असण्णिहिदा हिअएण । तेन हि भोदु, एत्तिकेहिं कुसुमेहिं पओअणं । ]

( पुनर्नेपथ्ये– ) आः, कथमतिथिं मां परिभवसि !

विचिन्तयन्ती यमनन्यमानसा
तपोनिधिं वेत्सि न मामुपस्थितम् ।
स्मरिष्यति त्वां न स बोधितोऽपि सन्
कथां प्रमत्तः प्रथमं कृतामिव ॥१॥

वा, हृदयेन = मनसा, दुष्यन्तगतमानसेति भावः । एवञ्च साऽतिथिसत्कारे न दत्तावधाना भवेदतः, एतावद्भिरेव कुसुमैः कार्यं भवतु = कुसुमावचयं विहाय गन्तव्यमिति सूचितम् । प्रस्थिते=चलिते ।

आः ! इति अपमानजनितपीडायां, परिभवसि = अवमन्यसे, "आः अतिथिपरिभाविनि !" इति शोभनः पाठः ।

यं = जनम्, अनन्यं मानसं यस्याः सा–अनन्यमानसा = अनन्यचित्ता, विचिन्तयन्ती = स्मरन्ती, तपोनिधिं = तपोमूर्त्तिं, मां=दुर्वाससम्, उपस्थितं= गृहद्वारि स्वयमेवागतमपि, न वेत्सि=न जानासि, सः=दुष्यन्तः, त्वाम्=अतिथिजनावमानिनीं,—प्रमत्तः=मादकद्रव्यादिसेवात उन्मत्तः, प्रथमं कृतां= स्वयमेवानुभूतां, स्वीकृताञ्च, कथामिव=वार्तामिव,—बोधितोऽपि सन् =

प्रियम्वदा—हा धिक् हा धिक्! तदेव संवृत्तं, यन्मया चिन्तितं, कस्मिन्नपि पूजार्हेऽपराद्धा शून्यहृदया शकुन्तला।

[ हद्धी हद्धी ! तं ज्जेव संवुत्तं, जं मए चिन्तिदं। कस्सिं पि पूआरिहे अवरद्धा सुण्णहिअआ सउन्तला। ]

अनसूया—( पुरोऽवलोक्य- ) न खलु यस्मिन् कस्मिन्नपि, एष दुर्वासाः सुलभकोपो महर्षिः, तथा शप्त्वाऽविरलपादत्वरया[1] गत्या प्रतिनिवृत्तः। [ ण क्खु जस्सिं कस्सिं पि, एसो दुव्वासा सुलह-कोवो महेसी, तधा सविअ अविरलपादतुवराए गदीए पडिणिउत्तो। ]

प्रियम्वदा—कोऽन्यो हुतवहात् प्रभवति दग्धुं। तद्गच्छ, पादयोः पतित्वा निवर्त्तय, यावदस्याहमप्यर्घोदकमुपकल्पयामि।

[ को अण्णो हुदवहादो पहवदि दहिदुं। ता गच्छ पाएसुं पडिअ णिउत्तावेहि। जाव से अहंपि अग्घोदअं उवकप्पेमि। ]

अनसूया—तथा। (-इति निष्क्रान्ता।) [ तह। ]

---

निवेदितोऽपि, न स्मरिष्यति। [ विचिन्तयन्ती यतोऽतोऽनन्यमानसेति हेतु-हेतुमद्भावात्काव्यलिङ्गं, श्लेषः, उपमा, अनुप्रासाश्च। 'वंशस्थम्' ] ॥१॥

उभे = सख्यौ, संवृत्तं = जातं, पूजार्हे = पूजनीयेऽतिथिविशेषे, अपराधे हेतुः—शून्यहृदयेति। यस्मिन् कस्मिन् = साधारणे, सुलभः कोपो यस्यासौ सुलभकोपः = अतिकोपनः, तथा = विचिन्तयन्तीत्यादिरीत्या, अविरलाः पादा यस्यां त्वरायां सा तथा—अविरलपादत्वरया = घनचरणविन्यास-शालिन्या त्वरया, प्रतिनिवृत्तः = आश्रमाद्बहिर्यातः, हुतवहादन्य इति अग्निकल्पात् दुर्वासःसदृशान्महर्षेर्विना कोऽन्यः शप्तुं शक्नोति महर्षेः कण्वस्य दुहितां शकुन्तलामित्यर्थः। पादयोः पतित्वा = प्रणम्य, अस्य = दुर्वाससः, अर्घोदकं=पाद्यार्घ्यादिकम्, उपकल्पयामि = विदधामि, तथा=तथैव करोमि

---

१ 'वेगबलोत्फुल्लया दुर्वारया गत्ये'ति पा०।

**प्रियम्वदा**—( पदान्तरे स्खलितं रूपयन्ती- ) अहो! आवेग-स्खलितया गत्या परिभ्रष्टं मेऽग्रहस्तात्पुष्पभाजनम् । ( इति पुष्पावचयं रूपयति । ) [ अव्वो ! आवेअक्खलिदाए गदीए परिब्भट्टं मे अग्गहत्थादों पुप्फभाअणं । ]

**अनसूया**—( प्रविश्य- ) सखि ! शरीरीव कोपः कस्य अनुनयं स गृह्णाति । किञ्च पुनः सः अनुकम्पितो मया ।

[ सहि ! सरीरी विअ कोवो कस्स अणुणअं सो गेह्णेदि । किञ्च उण सो अणुकम्पिदो मए । ]

**प्रियम्वदा**—एतदेव तस्मिन् बहुतरं, तत्कथय कथं त्वया प्रसादितः । [एदं ज्जेव तस्सिं बहुदरं । ता कधेहि कधं तए पसादिदो ?]

**अनसूया**—यदा निवर्त्तितुं न इच्छति, तदा पादयोः पतित्वा विज्ञापितो मया, भगवन् ! प्रथममिति प्रेक्ष्याविज्ञात-तपःप्रभावस्य दुहितृजनस्यायमपराधो भवता मर्षयितव्य इति ।

[ जदो णिउत्तिदुं ण इच्छदि, तदो पाएसुं पड़िअ विण्णविदो मए, भअवं पढमं त्ति पेक्खिअ अविण्णादतवप्पहावस्स दुहिदिजणस्स अअं अवराहो भअदा मरिसिदव्वो त्ति । ]

**प्रियम्वदा**—ततस्ततः ? । [ तदो तदो ? ]

---

अव्वो इति दुःखे, आवेगेन=उद्वेगेन, स्खलितया=विक्लवया, गत्या=गमनेन, परिभ्रष्टं=स्रस्तम्, अग्रहस्तात्=हस्ताग्रात्, पुष्पावचयं=पुष्पत्रोटनं, पुनराचरति, शरीरी=मूर्त्तिमान्, कोप इव=क्रोध एव, अनुनयं=प्रार्थनाम्, अनुकम्पा सञ्जाता अस्य अनुकम्पितः=दयार्द्रहृदयः, तदेव=प्रसादनमपि, बहुतरम्=अत्यधिकं, निवर्त्तितुं=पुनरातिथ्यग्रहणायागन्तुं, विज्ञापितः=प्रार्थितः । प्रथमः=सकृदयमपराधः, प्रेक्ष्य=विचार्य, अविज्ञातः तपसः प्रभावो येन तस्य—अविज्ञाततपःप्रभावस्य=अज्ञाततपोवीर्यस्य,

**अनसूया**—ततस्तेन भणितं, न मे वचनमन्यथा भवितुमर्हति। किन्तु आभरणाभिज्ञानदर्शनेन अस्याः शापो निवर्त्तिष्यतीति मन्त्रयन्नेवान्तर्हितः।

[तदो तेण भणिदं ण मे वअणं अण्णधा भविदुं अरिहदि। किन्तु आहरणाहिण्णाणदंसणेण से सावो णिउत्तिस्सदि त्ति मन्तअन्त ज्जेव अन्तरिदो]

**प्रियम्वदा**—शक्यमिदानीं समाश्वसितुम्। अस्ति तेन राजर्षिणा संप्रस्थितेनात्मनो नामाङ्कितमङ्गुलीयकं स्मरणीयमिति शकुन्तलाया हस्ते स्वयमेव परिधापितम्। एष एव तस्मिन् स्वाधीन[1] उपायो भविष्यति।

[सक्कं दाणिं समास्ससिदुं। अत्थि तेण राएसिणा संपत्थिदेण अत्तणो णामाङ्किदं अङ्गुलीअअं सुमरणीअं त्ति सउन्तलाए हत्थे सअं ज्जेव परिधाविदं। एसो ज्जेव तस्सिं साहीणो उवाओ भविस्सदि।]

**अनसूया**—सखि! एहि दैवकार्य्यं तावदस्या निर्वर्त्तयावः। (इति परिक्रामतः।) [सहि! एहि, देवकज्जं दाव से णिव्वत्तेह्म।]

---

दुहितृजनस्य=कन्यकालोकस्य, मर्षयितव्यः=क्षन्तव्यः। अन्यथा = मिथ्या, आभरणमेवाभिज्ञानं तस्य दर्शनेन = अङ्गुलीयकप्रदर्शनेन, निवर्त्तिष्यते= अपयास्यति। मन्त्र्यमाण एव=कथयन्नेव, अन्तर्हितः=अन्तर्धानमगात्। आश्वसितुं = धैर्यमालम्बितुं, तेन राजर्षिणा=दुष्यन्तेन, सम्प्रस्थितेन=प्रचलितेन, हस्ते स्वयमेव परिधापितम् = अङ्गुल्यां योजितं, स्मरणीयम् = स्मृतिपरिपोषकम्,—अस्तीति योजना। तस्मिन्=अङ्गुलीयके सति स्वाधीनोपाया = शापविगमे स्वायत्तसाधना।

अस्याः = शकुन्तलायाः, देवकार्यं = सौभाग्यदेवीपूजनं, वामहस्ते विनिहितं वदनं यया सा—वामहस्तविनिहितवदना = वामकरतलनिविष्ट-

---

१ "एष तास्मिन् स्वाधीन उपायो भविष्यति" पा० तस्मिन्—स्मरणे, एष उपायः—अङ्गुलीयकदर्शनरूपः।

**प्रियम्वदा**—( अवलोक्य- ) अनसूये ! प्रेक्षस्व तावत्, वामहस्तविनिहितवदना आलिखितेव प्रियसखी तद्गतया चिन्तया आत्मानमपि न विभावयति, किं पुनरागन्तुकम् ।

[ अणसूए ! पेक्ख दाव वामहत्थविणिहिदवअणा आलिहिदा विअ पिअसही तग्गदाए चिन्ताए अत्ताणम्पि ण विभावेदि, किं उण आगन्तुअं ।]

**अनसूया**—हला ! द्वयोरेवावयोर्हृदये एष वृत्तान्तस्तिष्ठतु । रक्षणीया खलु प्रकृतिपेलवा प्रियसखी । [ हला ! दोण्णं ज्जेव णो हिअए एसो वुत्तन्तोचिट्ठदु । रक्खीआ क्खु पइदिपेलवा पिअसही । ]

**प्रियम्वदा**—कस्तावदुष्णोदकेन नवमालिकां सिञ्चति । ( इत्युभे निष्क्रान्ते । ) [ को दाव उण्णोदएअ णोमालिअं सिञ्चदि । ]

विष्कम्भकः ।

( ततः प्रविशति सुप्तोत्थितः कण्वशिष्यः । )

**शिष्यः**—वेलोपलक्षणार्थमादिष्टोऽस्मि तत्रभवता प्रवासात्

---

कपोला, आलिखितेव = चित्रितेव, तद्गतया = दुष्यन्तगतया, आत्मानमपि= स्वतनुमपि. विभावयति = जानाति, आगन्तुकम् = अतिथिम्, नौ=आवयोः, हृदये = मनसि, एष वृत्तान्तः = शापरूपः । रक्षणीया = अप्रियश्रवण-दुःखात्परिहरणीया, प्रकृतिपेलवा = कोमलस्वभावा, शकुन्तलां प्रति शापा-कथनादभूताहरणं विमर्शसन्ध्यङ्गं, तदुक्तं—"तत्र व्याजाश्रयं वाक्यम-भूताहरणं मतमिति ।" उष्णोदकेन = तप्तेन पयसा, नवमालिकां = सप्तलां, शापकथनमत्यन्तमनुचितमिति भाव आविष्कृतः ।

विष्कम्भक इति । भूतस्य—शकुन्तलापरिणयस्य, भविष्यतः शापादिवृत्तान्तस्य च सूचनादयं विष्कम्भको नामार्थोपक्षेपकः । शुद्धश्चायं, प्राकृतभाषिपात्ररचितत्वात् ।

ततः = सखीनिर्गमनानन्तरं, पूर्वं सुप्तः पश्चादुत्थितः—सुप्तोत्थितः = जागरितः, निद्राघूर्णितलोचनः । वेलोपलक्षणार्थं = कालपरिज्ञानार्थं, प्रवा-

प्रतिनिवृत्तेन कण्वेन, तत् प्रकाशं निर्गत्यावलोकयामि कियदवशिष्टं रजन्या इति। (परिक्रम्यावलोक्य च-) हन्त! प्रभाता रजनी, तथाहि—

यात्येकतोऽस्तशिखरं पतिरोषधीना-
मविष्कृतोऽरुणपुरःसर एकतोर्कः।
तेजोद्वयस्य युगपद्व्यसनोदयाभ्यां
लोको नियम्यत इवैष दशान्तरेषु ॥२॥

---

सात् = यात्रातः, प्रतिनिवृत्तेन = आगतेन, प्रकाशं = निरावरणं प्रदेशं, ('खुला मैदान') रजन्याः = रात्र्याः, कियत् = कियानंशोऽवशिष्यते। प्रभाता = व्युष्टा गता। हन्त! इति खेदे।

यातीति। ओषधीनां = फलपाकान्तानां सस्यादीनां, पतिः = ईश्वरः चन्द्रः, "ओषध्यः फलपाकान्ताः", "ओषधीशो निशापतिः" इति चामरः। एकतः = एकस्यां दिशि, पश्चिमदिग्भागे, अस्तशिखरं याति = अस्तङ्गच्छति, एकतः=पूर्वस्यां दिशि, अरुणः पुरस्सरो यस्यासौ—अरुणपुरस्सरः = अरुणसारथिः, अर्कः, = सूर्यः, आविष्कृतः = उद्गच्छति, आदिकर्मणि क्तः। तेजोद्वयस्य = चन्द्रस्य, सूर्यस्य च, युगपत् = एककालं, व्यसनेन = व्यसनप्राप्तया, अस्तङ्गमनेन, उदयेन = वृद्ध्या—आविर्भावेण च, एष लोकः = सुखदुःखवान्, जनोऽयं,—दशान्तरेषु नियम्यते इव='दुःखसुखयोरनियतत्वात्तयोः प्राप्तौ हर्षशोकावनुचितौ'विति शिक्ष्यत इव। 'आत्मदशान्तरेष्वि'त्यपि पाठान्तरम्,।

[सज्जनदुर्जनव्यवहारारोपात्समासोक्तिः। द्वयोरपि प्राकरणिकयोरेकक्रियान्वयात्तुल्ययोगिता, यथासंख्यम्, उत्प्रेक्षा। दृष्टान्तो नाम नाट्यलक्षणं, "दृष्टान्तोयस्तु पक्षार्थसाधनाय निदर्शन" मिति दर्पणोक्तेः। 'वसन्ततिलका'] ॥२॥

अपि च—

अन्तर्हिते शशिनि सैव कुमुद्वतीयं
दृष्टिं न नन्दयति संस्मरणीयशोभा ।
इष्टप्रवासजनितान्यबलाजनेन
दुःखानि नूनमतिमात्रदुरुद्वहानि ॥३॥

अपि च—

कर्कन्धूनामुपरि तुहिनं रञ्जयत्यग्रसन्ध्या
दार्भं मुञ्चत्युटजपटलं वीतनिद्रो मयूरः ।
वेदिप्रान्तात् खुरविलिखितादुत्थितश्चैष सद्यः
पश्चादुच्चैर्भवति हरिणः स्वाङ्गमायच्छमानः ॥४॥

---

अन्तर्हित इति । शशिनि = इन्दौ, अन्तर्हिते = अस्तं याते सति, संस्मरणीया शोभा यस्याः सा—संस्मरणीयशोभा = स्मरणीयशोभातिशयसौभाग्या, सैवेयं कुमुद्वती, = पूर्वमभिनन्दितसौन्दर्यसौभाग्याऽपि कुमुदिनी, दृष्टिं = लोचनं, न नन्दयति = न हर्षयति । चन्द्रे सन्निहिते लोचनलोभनीयसौन्दर्याऽपि कुमुदिनी, तस्मिन् प्रयाते सति नष्टसौभाग्या लोचनयोर्हर्षं न दिशतीत्याशयः, इष्टस्य प्रवासेन जनितानि=स्वप्रियवियोगसमुद्भूतानि, दुःखानि = कष्टानि, अबलाजनेन = प्रमदालोकेन, नूनं=ध्रुवम्, अतिमात्रम् = अत्यन्तं, दुःखेनोद्वहनीयानि = कष्टेन सोढव्यानि भवन्ति। [ शकुन्तला दुष्यन्तव्यापारसमारोपात्समासोक्तिः । संस्मरणीयशोभा दृष्टिं न नन्दयतीति काव्यलिङ्गम्, अर्थान्तरन्यासः, एषामङ्गाङ्गिभावसङ्करः 'वसन्ततिलकं' ] ॥३॥

कुमुदिनी – शकुन्तला, चन्द्रो दुष्यन्त इति तृतीयं पताकास्थानकं बोध्यं, । कर्कन्धूनामिति । अग्रसन्ध्या=प्रभातसन्ध्या, कर्कन्धूनां = बदरी-

अपि च—

पादन्यासं क्षितिधरगुरोर्मूर्ध्नि कृत्वा सुमेरोः
क्रान्तं येन क्षपिततमसा मध्यमं धाम विष्णोः।
सोऽयं चन्द्रः पतति गगनादल्पशेषैर्मयूखै-
रत्यारूढिर्भवति महतामप्यपभ्रंशनिष्ठा ॥५॥

पत्राणाम्, उपरि = उपरि स्थितं, तुहिनं = तुषारं, रञ्जयति = लोहितीकरोति। दर्भाणामिदं—दार्भं = कुशनिर्मितम्, उटजस्य पटलम्—उटजपटलम् = पर्णशालाच्छदिः, "पर्णशालोटजोऽस्त्रियाम्" "पटलं छदिः"—इत्यमरः। वीता निद्रा यस्यासौ—वीतनिद्रः = विगतनिद्रः, मयूरः = बर्ही, मुञ्चति = त्यजति। खुरैर्विलिखितात्—खुरविलिखितात् = खुरक्षुण्णात्, वेदेः प्रान्तात्—वेदिप्रान्तात् = वेदिपरिसरप्रदेशात्, सद्य उत्थितः = अद्यैव निःसृतः, हरिणः = मृगः, स्वाङ्गमायच्छमानः = स्वावयवं प्रसारयन्, पश्चादुच्चैर्भवति = कायपश्चिमभागेन उन्नतो भवति, कटिमुन्नमयतीत्यर्थः। [स्वभावोक्तितद्गुणालङ्कारौ। 'मन्दाक्रान्ता'] ॥४॥

पादेति। क्षितिधराणां गुरोः—क्षितिधरगुरोः = सकलमहीधरश्रेष्ठस्य राजाधिराजस्य च, सुमेरोः = सुरालयस्य, विद्वदाश्रयस्य च, मूर्ध्नि = मस्तके, पादयोः पादानां वा न्यासं = पादक्षेपं, किरणप्रसारं वा, कृत्वा = विधाय, क्षपितं तमो येन तेन—क्षपिततमसा = नाशितान्धकारेण, दूरीकृताज्ञानेन च, येन = चन्द्रमसा, चन्द्रगुप्तेन च, विष्णोः = वामनस्य, मध्यमं धाम = गगनं, भूमण्डलञ्च, क्रान्तं = व्याप्तं, स्वायत्तीकृतञ्च, सोऽयं = लोकप्रसिद्धः, चन्द्रः = इन्दुः, चन्द्रगुप्तमहाराजश्च। अल्पशेषैः = किञ्चिदवशिष्टैः, मयूखैः = सम्पद्भिः, किरणैश्चोपलक्षितः, "मयूखः किरणेऽपि च, ज्वालायामपि शोभाया"मिति मेदिनी। गगनात् = आकाशात्, ऊर्ध्वप्रदेशाच्च, महतामपि—अत्यारूढिः = अत्युन्नतिः, अपभ्रंशः

**अनसूया**—( अपटीक्षेपेण प्रविश्य—) एवं नाम विषय-पराङ्मुखस्य जनस्य न निपतितम्, यथा तेन राज्ञा शकुन्तलाया-मनार्य्यमाचरितमिति। [ एव्वं णाम विसअपरम्मुहस्स जणस्स ण णिपड़िदं, जधा तेण रण्णा सउन्तलाए अणज्जं आचरिदं त्ति। ]

**शिष्यः**—यावदुपस्थितां होमवेलां गुरवे निवेदयामि। ( इति निष्क्रान्तः। )

**अनसूया**—ननु प्रभाता रजनी। तत् शीघ्रं शयनं परित्यजामि। अथवा लघु लघु उत्थितापि किं करिष्यामि। न मे

---

निष्ठा यस्याः सा = अपभ्रंशनिष्ठा=पतनपरिणामशालिनी—भवति। "निष्ठा निष्पत्तियोगान्ते"त्यमरः। [ समासोक्तिः, अर्थान्तरन्यासः, श्लेषः, अनुप्रासश्च, 'वसन्ततिलकं' ] ॥५॥

अपटीक्षेपेण = यवनिकाऽपसारणेन, सूचनां विनैवेति यावत्, "अपटी काण्डपटीका प्रतिसीरा जवनिका तिरस्करिणी"ति हलायुधः। पटीक्षेपेणेति पाठेऽपि स एवार्थः, यद्यपि "नासूचितस्य प्रवेशो निर्गमोऽपि चे"त्युक्तेरसूचिताया अनसूयायाः पटाक्षेपेण प्रवेशोऽनुचितः, तथापि—"पटीक्षेपेण कर्तव्यमार्त्तराजप्रवेशन"मित्युक्तेः शकुन्तलादुःखेन प्रभातकालिककार्यत्वरया चार्त्तायास्तथा प्रवेशे बाधकाभाव इत्यवधेयं, हर्षशोकादिसम्भ्रमवतः, पात्रस्य प्रवेशः पटाक्षेपेण क्रियते, हर्षशोकादिसूचनायेति नाटकसमयः।

एवं नाम = ईदृशं, विषयेभ्यः पराङ्मुखस्य = कामोपभोगानभिज्ञस्य, जनस्य = मादृशस्य, न विदितं = ज्ञातं, न स्मर्यत इत्यर्थः। न निपतितं = न जातमिति वा। यथा = यादृशं, शकुन्तलायां = तामधिकृत्य, अनार्यम् = असज्जनोचितं, उपस्थितां = प्राप्तां, होमवेलां = हवनकालं, गुरवे = कण्वाय, निवेदयामि = निर्दिशामि। लघु—लघु = त्वरितं, प्रभातकरणीयेषु = संमार्जनादिषु, उचितेषु = अवश्यकरणीयेष्वपि, हस्तौ पादौ च—

उचितेषु प्रभातकरणीयेषु हस्तपादं प्रसरति। काम इदानीं सकामो भवतु, येन असत्यसन्धे जने प्रियसखी शुद्धहृदया पदं कारिता। (स्मृत्वा-) अथ वा न तस्य राजर्षेरपराधः, दुर्वासःशापः खल्वेष प्रभवति। अन्यथा कथं स राजर्षिस्तादृशानि मन्त्रयित्वा एतावतः कालस्य वार्तामात्रमपि न विसर्जयति (विचिन्त्य—) तदितोऽभिज्ञानमङ्गुलीयकं विसर्जयामः? अथवा दुःखशीले तपस्विजने कोऽभ्यर्थ्यताम्? ननु सखीगामी दोष इति [1]व्यवसाययितुमपि न पारयामः— तातकण्वस्य वा प्रवासप्रतिनिवृत्तस्य दुष्यन्तपरिणीतामापन्नसत्त्वां शकुन्तलां निवेदयितुम्। तदत्र इदानीं किं नु खल्वस्माभिः करणीयम्?

[ णं पहादा रजणी। ता सिग्घं सअणं परिच्चआमि। अधवा लहु लहु उत्थिदावि किं करिस्सं, ण मे उइदेसुं पहादकरणीएसुं हत्थपाआ

---

हस्तपादं = करचरणादिकं, प्रसरति = चलति। कामः = हिताहितविचाररहित्येन प्रवर्त्तनशीलो मदनः, सकामः = सफलमनोरथः, येन = कामेन, असत्या सन्धा यस्य तस्मिन्—असत्यप्रतिज्ञे, जने = दुष्यन्ते, शुद्धहृदया= वञ्चनाशून्यहृदया, पदं = स्नेहबन्धरूपं व्यवसायं, प्रभवति = सर्वं विधत्ते, तादृशानि = नैकविधं स्नेहालापादिकं, प्रतिज्ञादिकं च, मन्त्रयित्वा = कृत्वा, एतावतः = बहुतिथस्य, कालस्य = समयस्य, वार्तामात्रं = कुशलवृत्तमात्रं, विसर्जयति = प्रेरयति। इतः = आश्रमादेव, अभिज्ञानं—स्मारकं,

दुःखं शीलं यस्यासौ तस्मिन्—दुःखशीले=तपःक्लेशशीले, शृङ्गारकथाऽयोग्ये, कः=तपस्वी, प्रार्थ्यतां,=कं प्रेषयामः! न कोऽपि तद्योग्य इत्याशयः, सखीगामी = शकुन्तलागतः, दोषः=अपराधः, (कथं पूर्वापरानुसन्धानराहि-

---

१ दोष इति व्यवसिताऽपि न पारयामि प्रवासप्रतिनिवृत्तस्येति पा०, इति= इति हेतोः,न पारयामिनिवेदयितुं, व्यवसिता=बहुशः कथनार्थं कृतनिश्चयाऽपीत्यर्थः

प्पसरन्ति। कामो दाणिं सकामो भोदु। जेण असच्चसन्धे जणे पिअसही सुद्धहिअआ पदं कारिदा। अधवा ण तस्स राएसिणो अवराहो, दुव्वासासावो क्खु एसो पहवदि। अण्णधा कधं सो राएसी तादिसाइं मन्तिअ एत्तिअस्स कालस्स वात्तामात्तं पि ण विसज्जेदि। ता इदो अहिण्णाणं अङ्गुलीअअं से विसज्जेम। अधवा दुक्खसीले तवस्सिजणे को अब्भत्थीअदु। णं सहीगामी दोसो त्ति ववसाइदुं पि ण पारेह्म। तादकण्णस्स वा प्पवासपडिणिउत्तस्स दुस्सन्तपरिणीदं आवण्णसत्तं सउन्तलं णिवेदिदुं। ता एत्थ दाणिं किं णु क्खु अह्मेहिं करणिज्जं ?]

प्रियम्वदा—(प्रविश्य-) अनसूये! त्वरस्व त्वरस्व शकुन्तलायाः प्रस्थानकौतूहलं निर्वर्त्तयितुम्।

[अणसूए तुवर तुवर सउन्तलाए पत्थाणकोदूहलं णिव्वत्तिदुं।]

अनसूया—(सविस्मयम्—) सखि! कथमिव?।

[सहि! कधं विअ?]

प्रियम्वदा—शृणु, इदानीमेव सुखसुप्तिकाप्रच्छननिमित्तं[1] शकुन्तलायाः सकाशं गतास्मि।

[सुणाहि, दाणिं ज्जेव सुहसुत्तिआपुच्छणणिमित्तं सउन्तलाए सआदं गदह्मि।]

---

त्येन स्वात्मानमर्पितवतीति शकुन्तलागतो दोषः) इति=इतिहेतोः, 'व्यवसाययितुं=निश्चेतुं, प्रकटयितुं वा, पारयामः=शक्नुमः, प्रतिनिवृत्तस्य=प्रत्यागतस्य, दुष्यन्तेन परिणीतां=दुष्यन्तेन विवाहिताम्, आपन्नसत्त्वां=गर्भिणीं "आपन्नसत्त्वा स्याद् गुर्विण्यन्तर्वत्नी च गर्भिणी"त्यमरः। निवेदयितुं वा—न पारयाम इति सम्बन्धः। तत्=तस्मात्, अत्र=अस्मिन् कार्ये, प्रस्थाने गमने कौतुकं=मङ्गलं, निर्वर्त्तयितुं=कर्त्तुं, "कौतुकं नर्मणीच्छायामुत्सवे कुतुके मुदि। पारम्पर्यागतख्यातमङ्गलोद्वाहसूत्रयो"रिति हैमः। सुखेन ते शयनं जातमिति या पृच्छति सा-सुखशयनपृच्छिका" यावत्=साकल्येन,

---

१ 'सुखशयन पृच्छिका'।

**अनसूया**—ततस्ततः ?। [तदो तदो।]

**प्रियम्वदा**—तत एनां लज्जावनतमुखीं परिष्वज्य स्वयं तातकण्वेनैवमभिनन्दितं—'वत्से ! दिष्ट्या धूमोपरुद्धदृष्टेरपि यजमानस्य पावकस्यैव मुखे आहुतिर्निपतिता, सुशिष्यपरिदत्तेव विद्या अशोचनीयासि मे संवृत्ता। अद्यैव त्वाम् ऋषिपरिरक्षितां कृत्वा भर्त्तुः सकाशं विसर्जयामि।

[तदो णं लज्जावणदमुहीं परिस्सइअ सअं तादकण्णेण एव्वं अहिणन्दिदं, "वच्छे ! दिट्ठिआ धूमोवरुद्धदिट्ठिणो वि जजमाणस्स पावअस्स ज्जेव मुहे आहुदी णिपड़िदा, सुसिस्सपरिदिण्णा विअ विज्जा असोअणीआसि मे संवुत्ता। अज्ज ज्जेव तुमं इसिपरिरक्खिदं करिअ भत्तुणो सआसं विसज्जेमि त्ति]

**अनसूया**—सखि ! केन पुनराख्यातस्तातकण्वस्यायं वृत्तान्तः ?। [सहि ! केण उण आचक्खिदो तादकण्णस्स अअं वुत्तन्तो।]

**प्रियम्वदा**—अग्निशरणं प्रविष्टस्य किल शरीरं विना छन्दोमय्या वाचा।

[अग्गिसरणं पविट्ठस्स किल सरीरं विणा छन्दोमईए वाआए।]

---

लज्जयाऽवनतं मुखं यस्याः सा—लज्जावनतमुखी=व्रीडानम्रवदना, परिष्वज्य=आलिङ्ग्य, अभिनन्दितं=तत्कृतं कर्म प्रशंसितं, धूमेनाकुलिता दृष्टिर्यस्य तस्य—धूमाकुलितदृष्टेः = आज्यधूमोपहतदर्शनशक्तेः, यजमानस्य=होतुः, पावक एव = अग्नावेव, कामवशीभूतयाऽपि त्वया योग्यपात्र एवात्मा समर्पित इत्याशयः। सुशिष्यपरिदत्ता = योग्यशिष्यसमर्पिता, दुष्यन्तहस्तगता त्वं न शोचनीयतां गतेत्याशयः। ऋषिभी रक्षितां=मुनिरक्षितां, भर्त्तुः=दुष्यन्तस्य, विसर्जयामि = प्रहिणोमि वर्त्तमानसामीप्ये लट् इति=इत्येवं शकुन्तलाकृतमभिनन्दितमिति योजना।

सूचितः, वृत्तान्तः शकुन्तलापरिणात्मकः यस्मै। अग्निशरणम्=अग्न्यागारं,

अनसूया—(सविस्मयम्—) कथमिव ? [कधं विअ ?।]

प्रियम्वदा—शृणु। (संस्कृतमाश्रित्य–) [सुणाहि।]

दुष्यन्तेनाहितं तेजो दधानां भूतये भुवः।
अवेहि तनयां ब्रह्मन्नग्निगर्भां शमीमिव ॥६॥

अनसूया—(प्रियम्वदामाश्लिष्य।) सखि ! प्रियं मे प्रियम्। किन्तु अद्यैव शकुन्तला नीयत इति उत्कण्ठासाधारणं परितोषमनुभवामि। [सहि ! पिअं मे पिअं। किन्तु अज्ज ज्जेव सउन्तला णीअदि त्ति उक्कण्ठासाहारणं परिदोषं अणुभवेमि।]

प्रियम्वदा—सखि ! वयं कथमपि उत्कण्ठां विनोदयिष्यामः, सा इदानीं तपस्विनी निर्वृता भवतु। [सहि ! अहो कधं पि उक्कण्ठां विणोदइस्सामो, सा दाणिं तपस्सिणी णिव्वुदा होदु।]

---

शरीरं विना = शरीररहिततया, छन्दोमय्या = मन्त्रमय्या, वाण्या = आकाशवाण्या। "संस्कृतमाश्रित्येति। "विद्वद्भिः प्राकृतं कार्यं कारणात्संस्कृतं क्वचि"दिति मातृगुप्ताचार्योक्तेरत्र संस्कृतभाषयाऽनुवाद इत्याशयः।

दुष्यन्तेनेति। हे ब्रह्मन् = महर्षे ! भुवः = पृथिव्याः, भूतये = अभ्युदयाय, कल्याणाय, दुष्यन्तेन = आहितं निषिक्तं तेजः = वीर्यं ज्योतिश्च, दधानां, धारयन्तीम्, अग्निः गर्भे यस्याः सा, ताम्—अग्निगर्भां = वैश्वानरगर्भां, शमीमिव=शक्तुफलामिव, तनयां = शकुन्तलाम्, अवेहि = जानीहि, [श्लेषसङ्कीर्णोपमा, अनुप्रासः, "भूतार्थवचनं चैष मार्ग इत्यभिधीयते" इत्युक्तेर्मार्गो नाम गर्भसन्ध्यङ्गम्।] ॥६॥

प्रियं = पित्राऽभिनन्दनं, मेऽप्रियं शकुन्तलावियोगाद्, हर्षे वा द्विरुक्तिः उत्कण्ठासाधारणम् = अरतिसहितं, परितोषं = हर्षं, कथमपि = पत्रादिना कुशलवृत्तान्तज्ञानादिभिः, विनोदयिष्यावः = परिहरिष्यावः, तपस्विनी = अनुकम्पार्हा, "तपस्वी चानुकम्पार्हः" इत्यमरः। निर्वृता=सुखिनी।

अनसूया—तेन हि एकस्मिन् चूतशाखावलम्बिते नारिकेलसमुद्गके एतन्निमित्तमेव मया कालहरणक्षमा केसरमालिका निक्षिप्ता तिष्ठति । तदेनां नलिनीपत्रसङ्गतां कुरु । यावदस्या अहमपि गोरोचनां, तीर्थमृत्तिकां, दूर्वाकिसलयानि, मङ्गलसमालम्भनं विचरयामि । [ तेन हि एकस्सिं चुअसाहावलम्बिदे णारिएलसमुग्गए एदण्णिमित्तं जेव मए कालहरणक्खमा केसरमालिआ णिक्खित्ता चिट्ठदि । ता इमं णलिणीवत्तसङ्गदं करेहि । जाव से अहं पि गोरोअणं तित्थमित्तिअं दुव्वाकिसलआइं मङ्गलसमालम्भणं विरएमि । ]

( प्रियम्वदा तथा करोति । अनसूया निष्क्रान्ता । )

( नेपथ्ये । )

गौतमि ! आदिश्यन्तां शार्ङ्गरव-शारद्वतमिश्राः वत्सां शकुन्तलां नेतुं सज्जीभवन्तु भवन्त—इति ।

---

चूतस्य=आम्रस्य, शाखायां = विटपे, अवलम्बिते=संसक्ते, नारिकेलसमुद्गके=नारिकेलकरण्डके, एतन्निमित्तमेव, गमनमङ्गलसम्पादनायैव, कालस्य हरणं क्षमते सा—कालहरणक्षमा—बहुकालस्थायिनी, केसरमालिका=बकुलपुष्पमाला, निक्षिप्ता = स्थापिता, कमिलिनीपत्रेण, सङ्गतां = नियोजितां, गोरोचनां = 'गोरोचन' इति प्रसिद्धां, तीर्थमृत्तिकां=गङ्गादितीर्थरजः, दूर्वा = शतपर्वा, किशलयानि = पल्लवानि, दूर्वापकिशलयानीत्येकं पदं वा । मङ्गलसमालम्भनानि = माङ्गलिकवस्तूनि, अङ्गरागादीनि । "समालम्भनमालेपे तिलकेऽलङ्कृतावपी"ति वैजयन्ती । केसरगुण्डेति पाठे–गुण्डा = पुष्पपरागः, केसरः = बकुलः, आदिश्यन्तां = समाज्ञाप्यन्तां, मिश्राः = श्रेष्ठाः, सज्जीभवन्तु=सन्नद्धा भवन्तु, हस्तिनापुरगामिनां महर्षिणां वचनमेतत्, शब्दायन्ते = आह्वानं कुर्वन्ति । समालम्भनहस्ता = मङ्गलोपकरणहस्ता, कृतं मज्जनं यया सा—कृतमज्जना = कृतस्नाना, (शिखामज्जिता=

**प्रियम्वदा**—अनसूये ! त्वरस्व त्वरस्व । एते खलु हस्तिनापुरगामिन ऋषयः शब्दायन्ते । [ अणसूए ! तुवर तुवर । एदे क्खु हत्थिणाउरगामिणो इसीओ सद्दाविअन्ति । ]

(**अनसूया**—समालम्भनहस्ता प्रविश्य—) सखि ! एहि गच्छावः । ( इति परिक्रामतः । ) [ सहि ! एहि गच्छह्म । ]

**प्रियम्वदा**—( विलोक्य— ) एषा सूर्य्योदये कृतमज्जना प्रतीष्टनीवाराभिः स्वस्तिवाचनिकाभिः तापसीभिरभिनन्द्यमाना तिष्ठति शकुन्तला, तदुपसर्पाव एनाम् । ( इत्युभे तथा कुरुतः । )

[ एसा सुज्जोदए किदमज्जणा पडिच्छिदणीवारभाअणाहिं सोत्थिवअणिआहिं तावसीहिं अहिणन्दीअमाणा चिट्ठदि सउन्तला, ता उवसप्पह्म णं । ]

( ततः प्रविशति यथानिर्दिष्टव्यापारा सपरिवारा शकुन्तला । )

**शकुन्तला**—भगवतीर्वन्दे । [ भअवदीओ वन्दामि । ]

**गौतमी**—जाते । भर्त्तुर्बहुमानसुखहेतुकं देवीशब्दमभिगच्छ । [ जादे ! भत्तुणो बहुमाणसुहहेतुअं देवीसद्दं अहिगच्छ । ]

**तापस्यः**—वीरप्रसविनी भव । ( इत्याशिषो दत्त्वा गौतमीवर्जं सर्वा निष्क्रान्ताः । ) [ वीरप्पसविणी होहि । ]

**सख्यौ**—( उपगम्य— ) सम्मज्जनं ते भूतम् ? ।

[ सम्मज्जणं दे भूदं ? ]

---

शिरःस्नाता,) प्रतिष्ठिता नीवारा हस्तेषु याभिस्ताभिः = गृहीतनीवाराख्यधान्याभिः, प्रतीष्टेतिपाठे प्रतीष्टं = गृहीतं, स्वस्तिवाचनिकाभिः = मङ्गलमयशब्दोच्चारणचतुराभिः, अभिनन्द्यमाना=कारितोत्साहा,

भगवतीः=तापसीः, जाते=पुत्रि ! बहुमानस्य सुखस्य च हेतुकं सम्मानसुखसूचकं, देवीशब्दं = पट्टमहिषीनाम, "देवी कृताभिषेका ये"त्यमरः । वीरप्रसविनी = वीरपुत्रजननी, गौतमीवर्ज्जं = गौतमीं विहाय, सम्मज्जनं =

**शकुन्तला**—स्वागतं प्रियसख्योः ? इतो निषीदतम् ।
[ साअदं पिअसहीणं ? इदो णिसीदध । ]

**सख्यौ**—( उपविश्य- ) हला ! ऋजुका तावत् भव, यावत्ते मङ्गलसमालम्भनं कुर्वः ।

[ हला ! उज्जुआ दाव होहि, जाव दे मङ्गलसमालहणं करेह्म । ]

**शकुन्तला**—उचितमप्येतदद्य बहुमन्तव्यम्, यतो दुर्लभं तावत् पुनर्मे प्रियसखीमण्डनं भविष्यति । ( इति बाष्पं विसृजति । )
[ उइदं पि एदं अज्ज बहुमणिदव्वं, जदो दुल्लहं दाव पुणो मे पिअसहीमण्डणं भविस्सदि । ]

**सख्यौ**—सखि ! न युक्तं मङ्गलकाले रोदितुम् ।
( इत्यश्रूणि प्रमृज्य नाट्येन प्रसाधयतः । )
[ सहि ! ण जुत्तं मङ्गलकाले रोदिदुं । ]

**प्रियम्वदा**—सखि ! आभरणार्हं ते रूपमाश्रमसुलभैः प्रसाधनैर्विप्रकार्य्यते । [ सखि ! आहरणारिहं दे रूअं अस्समसुलहेहिं पसाहणेहिं विप्पआरीअदि । ]

( प्रविश्याभरणहस्त ऋषिकुमारः— ) इदमलङ्कारजातम्, अलंक्रियतामायुष्मती ।

( सर्वाः—विलोक्य विस्मिताः । )

---

अभ्यङ्गस्नानम्, ऋजुका = सरलिताङ्गयष्टिः । उचितमपि चिरपरिचितमपि एतत् = भवत्कृतं मण्डनं, बहु=अनर्घं "अभ्यस्तेऽप्युचितं न्याय्य"मिति वैजयन्ती । प्रियसखीभ्यां कृतं—प्रियसखीकृतं = युवाभ्यां कृतम्, पतिगृहगतायाः क्व भवत्कृतमण्डनलाभ इत्याशयः । प्रमृज्य=विशोध्य, आभरणार्हं=कनकभूषणार्हं, प्रसाधनैः = अङ्गरागादिभिः, विप्रकार्यते = तिरस्क्रियते । एतेनालङ्कारहस्तकुमारागमनं सूचितं, "नासूचितस्य प्रवेशोऽस्ती"त्युक्तेः । अलङ्कारजातम् = आभरणसमूहः, आश्रमे कुतः खल्वेषां सम्भव इति

**गौतमी**—वत्स ! हारीत ! कुत इदमासादितम् ? ।

[ वच्छ हारीद ! कुदो इदं आसादिदं ? ]

**हारीतः**—तातकण्वप्रभावात् ।

**गौतमी**—किं मानसी सिद्धिः ? । [ किं माणसी सिद्धी । ]

**हारीतः**—न खलु, श्रूयताम्—तत्रभवता कण्वेन वयमाज्ञप्ताः शकुन्तलाहेतोर्वनस्पतिभ्यः कुसुमान्याहरतेति । ततश्च—

क्षौमं केनचिदिन्दुपाण्डु तरुणा माङ्गल्यमाविष्कृतं
निष्ठ्यूतश्चरणोपरागसुभगो लाक्षारसः केनचित् ।
अन्येभ्यो वनदेवताकरतलैरापर्वभागोत्थितै-
र्दत्तान्याभरणानि नः किसलयच्छायापरिस्पर्धिभिः ॥७॥

---

विस्मयः । इदम्=अलङ्कारजातम्, आसादितं = लब्धं, प्रभावात् = सामर्थ्यात्, मानसी = मनःसङ्कल्पमात्रात्, सिद्धिः=प्राप्तिः, वनस्पतिभ्यः= वृक्षेभ्यः, आहरत = आनयत,

क्षौममिति । केनचित् तरुणा = वृक्षेण, मङ्गल्यं=मङ्गलकर्मयोग्यं, इन्दुरिव पाण्डु-इन्दुपाण्डु = चन्द्रपाण्डुरं, क्षौमं = महार्हं दुकूलम्, आविष्कृतं = प्रकटीकृतं, केनचित्—तरुणा, चरणयोरुपरागे सुभगः—चरणोपरागसुभगः = पादलेपमनोहरः, लाक्षारसः = अलक्तकरसः, निष्ठ्यूतः = आविष्कृतः, अन्येभ्यः = तरुभ्यः, पर्वभागं मर्यादीकृत्य आपर्वभागमुत्थितैः= मणिबन्धपर्यन्तं बहिर्निस्सृतैः, किसलयानां छायां परिस्पर्धन्ते तच्छीलैः= किसलयच्छायापरिस्पर्धिभिः=पल्लवशोभानुकारिभिः, वनदेवतानां करतलैः= वनदेवतापाणितलैः, आभरणानि = भूषणानि, नः = अस्मभ्यं, दत्तानि = समर्पितानि, [ उपमाऽनुप्रासाः 'शार्दूलविक्रीतम्' ] ॥७॥

**प्रियम्वदा**—(शकुन्तलां विलोक्य) हला ! कोटरसम्भवापि मधुकरी पुष्करमध्वेव अभिलषति । [हला ! कोडरसम्भवा वि महुअरी पोक्खरमहुज्जेव अहिलसदि ।]

**गौतमी**—जाते ! अनयाऽभ्युपपत्त्या सूचिता भर्त्तुर्गेहे अनुभवितव्या राजलक्ष्मीः । [जादे! इमाए अब्भुववत्तीए सूइदा भत्तुणो गेहे अणुहोदव्वा राअलच्छी ]।

( **शकुन्तला**—लज्जां नाटयति । )

**हारीतः**—यावदिमां वनस्पतिसेवामभिषेकार्थं मालिनीमवतीर्णाय तत्रभवते कण्वाय निवेदयामि । ( इति निष्क्रान्तः । )

**अनसूया**—सखि ! अननुभूतभूषणोऽयं जनः कथं त्वामलङ्करोति । (चिन्तयित्वा विलोक्य च—) चित्रपरिचयेनेदानीं तेऽङ्गेष्वाभरणविनियोगं कुर्वः । [ सहि ! अणणुभूदभूसणो अअं जणो कधं तुमं अलङ्करेदि, चित्तपरिचएण दाणिं दे अङ्गेसु आरणविणिओअं करेह्म]

**शकुन्तला**—जानामि वां निपुणत्वम् ।
[ जाणामि वो णिउणत्तणं ]।

---

कोटरे सम्भवो यस्याः सा—कोटरसम्भवा=तरुकुहरजाताऽपि, मधुकरी = भ्रमरी, पुष्कराणां मधु = कमलमधु, (तपोवनवर्धिताऽपि शकुन्तला स्वोचितमाभरणादिकमित्येवं प्रस्तुतं गम्यत इत्यप्रस्तुतप्रशंसा ) अभ्युपपत्तिः = आकस्मिकोऽनायासेन लाभः । वनस्पतिसेवां = वनस्पतिभिर्दत्तान्याभरणजालानि, अभिषेकाय = स्नातुं,

न अनुभूतानि भूषणानि येनासौ—अननुभूतभूषणः = भूषणपरिधापनानभिज्ञः, चित्रैः परिचयस्तेन = चित्रपटेषु राजमहिष्यादिदर्शनाज्जातेन परिचयेन, आभरणानां विनियोगं = सन्निवेशनं, निपुणत्वं = कुशलतां, जानामि = वेद्मि, केवलं मदुपहासायैव भवत्यावेवं निगदत इति भावः । स्नानोत्तीर्णः = स्नात्वा नद्या बहिर्यातः ।

(सख्यौ—नाट्येनालङ्कारान् विनियुञ्जात ।)

(ततः प्रविशति स्नानोत्तीर्णः कण्वः) ।

कण्वः—(विचिन्त्य—)

यास्यत्यद्य शकुन्तलेति हृदयं संस्पृष्टमुत्कण्ठया
कण्ठः स्तम्भितबाष्पवृत्तिकलुषश्चिन्ताजडं दर्शनम् ।
वैक्लव्यं मम तावदीदृशमपि स्नेहादरण्यौकसः
पीड्यन्ते गृहिणः कथं न तनयाविश्लेषदुःखैर्नवैः ॥८॥

(इति निष्क्रान्तः ।)

सख्यौ—हला शकुन्तले ! अवसितमण्डनासि, साम्प्रतं परिधेहि क्षौमयुगलम् । [हला सउन्तले ! अवसिदमण्डणासि, सम्पदं परिहेहि क्खोमजुअलं] ।

---

यास्यत्यद्येति । अद्य शकुन्तला यास्यति पतिगृहमिति शेषः, इति= अतो हेतोः,—हृदयमुत्कण्ठया = चिन्तया, संस्पृष्टम् = व्याप्तम्, गदितं = भाषितं, अन्तः स्थितानां बाष्पाणां भरेणोपरोधोऽस्त्यस्य तत्तथा = अन्तः स्तम्भितवाष्पभारकलुषं ("कण्ठः स्तम्भितबाष्पवृत्तिकलुषः" इति पाठे—स्तम्भितया वाष्पाणां प्रवृत्त्याआरम्भेण विकृत इत्यर्थो बोध्यः ।) दर्शनं= लोचनं, ज्ञानं वा, चिन्तया—जडं = स्वविषयाग्राहकं, मम तावत्, अरण्यौकसः, वनवासिनः, "ओकः सद्मनि चाश्रये" इति मेदिनी । स्नेहाद् ईदृशम्, = एवं रूपं, वैक्लव्यं = कातरत्वं, तदा गृहिणः = गृहस्थाः दृढं मायापाशबद्धाः, नवैः = अभिनवैः, तनयाया विश्लेषेण दुःखैः = पुत्रीवियोगदुःखैः, कथं न पीड्यन्ते = अपि तु पीड्यन्त एव । [व्यतिरेकः, अनुप्रासः, काव्यलिङ्गं, 'शार्दूलविक्रीडितम्'] ॥८॥

अवसितं मण्डनं यस्याः सा तथा = जातभूषणसंनिवेशा, क्षौमयोर्युगलं—क्षौमयुगलं = वस्त्रयुग्मं, आनन्देन वाष्पं परिवहति तच्छीलेन =

(शकुन्तला—उत्थाय नाट्येन परिधत्ते)।)

**गौतमी**—जाते ! एष ते आनन्दबाष्पपरिवाहिना लोचनेन परिष्वजमान इव गुरुरुपस्थितः, तत्समुदाचारं प्रतिपद्यस्व !

[जादे ! एस दे आणन्दबाष्प-परिवाहिणा लोअणेण परिण्णजन्तो विअ गुरू उवत्थिदो; ता समुदाआरं पडिवज्जस्स ]।

( शकुन्तला—सव्रीडं वन्दनां करोति। )

**कण्वः**—वत्से !

ययातेरिव शर्म्मिष्ठा भर्त्तुर्बहुमता भव।
पुत्रं त्वमपि सम्राजं सेव पूरुमवाप्नुहि ॥९॥

**गौतमी**—जाते ! वरः खल्वेषः, नाशीः।

[ जादे ! वरो क्खु, एसो, ण आसिसो ]।

**कण्वः**—वत्से ! इतः सद्योहुतानग्नीन् प्रदक्षिणीकुरुस्व।

(सर्वे तथा कारयितुं परिक्रामन्ति)।

**कण्वः**—वत्से !

---

हर्षाश्रूणि परिमुञ्चता, लोचनेन = नयनेन उपलक्षितः, परिष्वजमानः = आलिङ्गन्निव, समुदाचारम् = उत्थानासनप्रणामादिकं,

ययातेरिति। ययातेः = सोमवंशीयराज्ञः, शर्मिष्ठादेवयानीनामक-भार्याद्वयवतः, शर्मिष्ठेव, त्वमपि अनेकभार्यस्य—पत्युः = दुष्यन्तस्य, बहुमता = प्रिया भव।

सा = शर्मिष्ठा पुरुमिव—त्वमपि सम्राजं = चक्रवर्त्तिनं, पुत्रं = तनय-मवाप्नुहि। [ उपमा, क्रमो नाम गर्भाङ्गं "तत्त्वोपलब्धिरिष्टस्य क्रम इत्यभिधीयते" इत्युक्तलक्षणं दर्शितं "आशीरिष्टजनाशंसे"ति नाट्या-लङ्कारोऽपि आशीः दर्शितः। ] ॥९॥

अमी वेदिं परितः क्लृप्तधिष्ण्याः
समिद्वन्तः प्रान्तसंस्तीर्णदर्भाः ।
अप+हन्+शतृ अपघ्नन्तो दुरितं हव्यगन्धै-
र्वैतानास्त्वां वह्नयः पावयन्तु ॥१०॥

( शकुन्तला—प्रदक्षिणं करोति । )

कण्वः—वत्से ! प्रतिष्ठस्वेदानीम् । ( सदृष्टिक्षेपम्— ) क्व नु ते शार्ङ्गरवशारद्वतमिश्राः ?

शिष्यौ—( प्रविश्य— ) भगवन् ! इमौ स्वः ।

कण्वः—वत्सौ ! भगिन्याः पन्थानमादेशयतम् ।

---

वरः = वरप्रदानमवश्यफलदं, नाशीः = केवलं शुभप्रार्थनामात्रं न, सद्यो हुतान् = इदानीमेव विधिना सन्तर्पितान्, ऋक्छन्दसा = ऋक्छन्दोरचितवाक्येन ।

अमीति । वेदिं = परिष्कृतभूमिं, परितः = सर्वतः, क्लृप्तं धिष्ण्यं यैस्ते—क्लृप्तधिष्ण्याः = रचितनिवासाः, "धिष्ण्यं स्थाने गृहे" इत्यमरः। समिधः सन्त्येषान्ते—समिद्वन्तः = परिपूर्णेन्धनज्वलिताः, प्रान्ते संस्तीर्णा दर्भा येषां ते—प्रान्तसंस्तीर्णदर्भाः = पर्यन्तनिविष्टकुशाः, हव्यानां गन्धैः दुरितम् अपघ्नन्तः = हवनीयद्रव्यजातसुगन्धेन पापं नाशयन्तः, अमी = पुरःस्थिताः, वितानस्य इमे वैतानाः—यज्ञसम्बन्धिनः, वह्नयः = अग्नयः, त्वां पावयन्तु = पवित्रतां नयन्तु, तव दुरितं नाशयन्त्विति यावत्। [ परिकरालङ्कारः, उपजातिविशेषश्छन्दः । ] ॥१०॥

प्रतिष्ठस्व=याहि, सदृष्टिक्षेपं = विलोक्य, इमौ स्वः = उपस्थितावेव, मार्गम् = पन्थानम्, आदेशयतं=निर्दिशतं, भवति = श्रीमति ! इत इतः= अमुना पथाऽऽयाहि, परिक्रामन्ति = चलन्ति ।

शिष्यौ—इत इतो भवती।

( सर्वे परिक्रामन्ति। )

कण्वः—भो भोः ! सन्निहितवनदेवतास्तपोवनतरवः !—

पातुं न प्रथमं व्यवस्यति जलं युष्मास्वसिक्तेषु या,
नादत्ते प्रियमण्डनाऽपि भवतां स्नेहेन या पल्लवम्।
आदौ वः कुसुमप्रवृत्तिसमये यस्या भवत्युत्सवः,
सेयं याति शकुन्तला पतिगृहं सर्वैरनुज्ञायताम् ॥११॥

( आकाशे। )

रम्यान्तरः कमलिनीहरितैः सरोभि-
श्छायाद्रुमैर्नियमितार्कमरीचितापः।

सन्निहिता वनदेवता येषु ते—सन्निहितवनदेवताः = वनदेवताधिष्ठिताः, पातुमिति। या—शकुन्तला, युष्मासु असिक्तेषु = जलमप्रापितेषु सत्सु जलमपि प्रथमं पातुं=ग्रहीतुं, न व्यवस्यति = नेच्छति। या स्नेहेन=प्रेम्णा-प्रियाणि मण्डनानि यस्याः सा—प्रियमण्डनाऽपि = भूषणप्रियापि, भवतां पल्लवं=किसलयमपि, नादत्ते = न गृह्णाति। वः—युष्माकं, कुसुमानां प्रवृत्तिः—प्रारम्भस्तस्य समये=काले, आदौ = प्रथममेव यस्या उत्सवः= आनन्दो भवति, सा इयं शकुन्तला—पतिगृहं = भर्तृभवनं, याति = गच्छति, तत्—सर्वैः=भवद्भिः पादपैः, अनुज्ञायताम्=अनुमन्यतां [ समासोक्तिः, अनुप्रासः, काव्यलिङ्गञ्च, शार्दूलविक्रीडितम् ] ॥११॥

आकाश इति। "किं ब्रवीष्येवमित्यादि विना पात्रं ब्रवीति यत्। श्रुत्वेवाऽनुक्तमप्येकस्तत्स्यादाकाशभाषितम्"—इति धनिकोक्तरीत्येत्यर्थः। रम्यान्तर इति। अस्याः = शकुन्तलायाः, कमलिनीभिः हरितानि-तैः—कमलिनीहरितैः=पद्मिनीषण्डहरितायमानैः, सरोभिः=सरोवरैः, रम्यमन्तरं

भूयात् कुशेशयरजोमृदुरेणुरस्याः
शान्तानुकूलपवनश्च शिवश्च पन्थाः ॥१२॥

( सर्वे—सविस्मयमाकर्णयन्ति । )

शार्ङ्गरवः—( कोकिलशब्दं सूचयित्वा— ) भगवन् !

अनुमतगमना शकुन्तला
तरुभिरियं वनवासबन्धुभिः ।
परभृतविरुतं कलं यतः
प्रतिवचनीकृतमेभिरात्मनः ॥१३॥

---

यस्यासौ—रम्यान्तरः=हृद्यमध्यः, छायायुक्ता द्रुमाः—छायाद्रुमास्तैः—छायाद्रुमैः = शीतलच्छायामनोहरैः, तरुभिः, नियमितोऽर्कमरीचीनां तापो यत्रासौ = अवरुद्धदिवाकरकिरणसन्तापः, कुशेशयानां रज इव मृदुः रेणुर्यत्रासौ तथा = कमलपरागकोमलधूलिपटलः, अत एव शिवः—सुखदः शान्तोऽनुकूलः पवनो यत्रासौ तथा—मार्गः—भूयादिति पादत्रयगतानि विशेषणानि वायुपरतयाऽपि योजनीयानि ।

वायुपक्षे हि कमलसम्बन्धात्, छायाद्रुमसम्बन्धात्, कमलरेणुसम्पर्काच्च सौरभ-शैत्य-मान्द्यानि बोध्यानि मार्गपक्षेऽपि—शैत्य-सौरभ मार्दवादीनि यथायथं ज्ञेयानि इत्थञ्चोक्तिभङ्ग्या मार्गे एव कुशलमिति भविष्यदमङ्गलसूचना [ तुल्ययोगिता, परिकरः, काव्यलिङ्गञ्चेत्यादयोऽलङ्कारा विभावनीयाः 'वसन्ततिलका' ] ॥१२॥

सविस्मयं = देवताभाषितमेतदिति विस्मयः । आकर्णयन्ति=शृण्वन्ति । सूचयित्वा = निर्दिश्य, भगवन् ! = कण्व ! **अनुमतेति** । यतः—कलं = मधुरं, परभृतस्य विरुतं—कोकिलध्वनिः, एभिः = तरुभिः, आत्मनः प्रतिवचनीकृतं = स्वोत्तररूपेण प्रकटितं, ततः—वने वासेन बन्धुभिरिव बन्धुभिः—वने वासात् ज्ञातिभावं प्राप्तैः, तरुभिः = पादपैः, इयं शकुन्तला—अनुमतं

**गौतमी**—जाते ! ज्ञातिजनस्निग्धाभिरनुज्ञातगमनासि तपोवनदेवताभिः, तत्प्रणम भगवतीः। [ जादे ! ण्णादिजणसिणिद्धाहिं अणुण्णादगमणासि तवोवणदेवदाहिं। ता पणम भअवदीणं। ]

**शकुन्तला**—( सप्रणामं परिक्रम्य जनान्तिकम्— ) हला प्रियम्वदे ! आर्य्यपुत्रदर्शनोत्सुकाया अपि आश्रमपदं परित्यजन्त्या दुःखदुःखेन चरणौ मे पुरोमुखौ न निपततः।

[ हला पिअंवदे ! अज्जउत्तदंसणोस्सुआए वि अस्समपदं परिच्चअन्तीए दुक्खदुक्खेण चलणा मे पुरमुहा ण णिवडन्ति। ]

**प्रियम्वदा**—न केवलं त्वमेव तपोवनविरहकातरा, त्वयोपस्थितवियोगस्य तपोवनस्याप्यवस्थां प्रेक्षस्व तावत्—

[ ण केवलं तुमं ज्जेव तवोवणविरहकादरा, तुए उवत्थिदविओअस्स तवोवणस्सवि अवत्थं पेक्ख दाव— ]

---

गमनं यस्याः सा—अनुमतगमना = अनुज्ञातपतिगृहगमना। [ परभृतरुते प्रतिवचनात्वारोपस्य प्रकृतगमनोपकारकतया परिणामोऽलङ्कारः ] अपरवक्त्र छन्दः ॥१२॥

ज्ञातिजन इव स्निग्धाभिः—ज्ञातिजनस्निग्धाभिः=बन्धुवर्गवत्स्वय्यनुरागशालिनीभिः, भगवतीः = तपोवनदेवताः। परिक्रम्य = किञ्चिद्गमनं नाटयित्वा, जनान्तिकम् = त्रिपताककरेण अन्यान् निवार्य, आर्यपुत्रस्य = दुष्यन्तस्य, दर्शने = प्रेक्षणे, उत्सुकायाः = उत्कण्ठितायाः, आश्रमपदं = तपोवनभूमिं, दुःखेन = कृच्छ्रादपि, पुरोमुखौ = गन्तव्यदिगभिमुखं, न निपततः= न गच्छतः, स्वजनजन्मभूमिस्नेहसम्बन्धादिति भावः। तपोवनविरहेण कातरा = व्याकुलीभूता, उपस्थितो वियोगो यस्य तस्य—उपस्थितवियोगस्य = सम्भावितवियोगस्य,

उद्गीर्णदर्भकवला मृगी परित्यक्तनर्त्तना मयूरी ।
अपसृतपाण्डुपत्रा मुञ्चन्ति अश्रु इव लताः ॥१४॥

[ उग्गिण्णदब्भकवला मई परिच्चत्तणत्तणा मोरी ।
ओसरिअपाण्डुपत्ता मुअन्ति अस्सुं विअ लदाओ ॥१४॥

**शकुन्तला**—( स्मृत्वा- ) तात ! लताभगिनीं तावत् माधवीमामन्त्रयिष्ये । [ ताद ! लदावहिणीं दाव माहवीं आमन्तइस्सं । ]

**कण्वः**—वत्से ! अवैमि ते तस्यां सौहार्दम् । इयं सादक्षिणे पश्य ।

**शकुन्तला**—(उपेत्य लतामालिङ्ग्य—) लताभगिनि ! चूतसङ्गताऽपि प्रत्यालिङ्ग मामितो गतैः शाखामयैर्बाहुभिः, अद्य प्रभृति दूरवर्त्तिनी खलु ते भविष्यामि । तात ! अहमिवेयं त्वया चिन्तनीया ।

[ लदावहिणि ! पच्चालिङ्गस्स मं साहामएहिं वाहुहिं । अज्ज पहुदि दूरवत्तिणी क्खु दे भविस्सं । ताद ! अहं विअ इअं तुए चिन्तणीआ । ]

---

उद्गीर्णेति । उद्गीर्णो दर्भाणां कवलो याभिस्ताः—उद्गीर्णदर्भकवलाः = त्यक्तकुशग्रासाः, मृग्यः, हरिण्यः, परित्यक्तं नर्त्तनं यैस्ते—परित्यक्तनर्त्तनाः = वर्जितनर्त्तनाः, मयूराः=बर्हिणाः, ('मृग्यः' मयूरीति च पाठा०) । अपसृतानि पाण्डूनि पत्राणि यासां ताः – अपसृतपाण्डुपत्राः = पतितपरिणामपाण्डुपत्राः (तेन व्याजेन) लताः = वल्ल्यः, अश्रूणीव मुञ्चन्तीति योजना [उत्प्रेक्षा, मृगादिषु बन्धुव्यवहारसमारोपात्समासोक्तिश्च । ] ॥१४॥

लता एव भगिनी तां, = भगिनीस्थानीयां लताम् , आमन्त्रयिष्ये = प्रेक्ष्यामि, सोदर्यस्नेहं = सहोदरस्नेहं, दक्षिणेन = दक्षिणदिशि—वर्त्तते ।

चूतसङ्गताऽपि = सहकाराश्लिष्टापि, प्रत्यालिङ्ग = परिष्वजस्व, इतो गताभिः = मदभिमुखं प्रवृद्धाभिः, शाखाबाहाभिः = शाखामयैर्भुजैः, दूर-

कण्वः—वत्से !—

सङ्कल्पितं प्रथममेव मया त्वदर्थं
भर्त्तारमात्मसदृशं स्वगुणैर्गतासि ।
[1]अस्यास्तु सम्प्रति वरं त्वयि वीतचिन्तः
कान्तं समीपसहकारमिमं करिष्ये ॥१५॥

तदितः प्रस्थानं प्रतिपद्यस्व ।

शकुन्तला—(सख्यावुपेत्य) हला ! एषा द्वयोरपि वा-हस्ते निक्षेपः । [ हला ! एसा दोण्णं पि वो हत्थे णिक्खेवो । ]

सख्यौ—अयं जन इदानीं कस्य हस्ते समर्पितः ? । (-इति वाष्पं विसृजतः) [ अअं जणो दाणिं कस्स हत्थे समप्पिदो । ]

---

वर्त्तिनी = त्वया विरहिता, त्वया = कण्वेन चिन्तनीया = अवेक्षणीया । सङ्कल्पितमिति । मया प्रथममेव = आदावेव त्वदर्थं सङ्कल्पितं=चिन्तितं, आत्मनः सदृशं = स्वयोग्यभर्त्तारं, स्वगुणैरेव = स्वसौभाग्यादिभिरेव, गतासि = प्राप्तासि । तु = पुनः, त्वयि वीता चिन्ता यस्यासौ—वीत-चिन्तः = अपगतचिन्तः सन्, सम्प्रति = इदानीम्, इमं—समीपसहकारं= समीपस्थं चूतम्, अस्याः कान्तं=भर्त्तारं, करिष्ये = करिष्यामि । [समासो-क्तिः, काव्यलिङ्गं, समः, अन्योन्यमित्यादयोऽलङ्काराः 'वसन्ततिलकं'] ॥१५॥

इतः = अस्यां दिशि, प्रतिपद्यस्व = समालम्बस्व, द्वयोः = सख्योः, निक्षेपः = न्यासः, परिरक्षणार्थं भवद्धस्ते निवेशिता, भवतीभ्यां परिरक्ष-णीयेति यावत्, अयं जनः = सखीजनः । भवतीभ्यामेव = युवाभ्यामेव, स्थिरीकर्त्तव्या = सान्त्वनीया ।

---

१ "चूतेन संश्रितवती नवमालिकेयमस्यामहं त्वयि च सम्प्रति वीतचिन्तः ।" पा०

**कण्वः**—अनसूये ! प्रियंवदे ! अलं रुदितेन । ननु भवतीभ्यामेव शकुन्तला स्थिरीकर्त्तव्या । ( इति सर्वे परिक्रामन्ति ) ।

**शकुन्तला**—(विलोक्य) तात ! एषा उटजपर्य्यन्तचारिणी गर्भभारमन्थरा मृगवधूर्यदा सुखप्रसवा भविष्यति, तदा मे कमपि प्रियनिवेदकं विसर्ज्जयिष्यसि, मा इदं विस्मरिष्यसि ।

[ ताद ! एसा उड़अपज्जन्तचारिणी गब्भहारमन्थरा मिअवहू जदा सुहप्पसवा भविस्सदि, तदा मे कम्पि पिअणिवेदअं विसज्जइस्ससि, मा एदं विसुमरिस्ससि । ]

**कण्वः**—वत्से ! नेदं विस्मरिष्यामि ।

**शकुन्तला**—(गतिभेदं रूपयित्वा-) अम्मो ! को नु खल्वेष पदाक्रान्त इव मे पुनः-पुनर्वसनान्ते सज्जते ? (इति परावृत्त्यावलोकयति)

[ अम्मो ! कोणु क्खु एसो पदक्कन्तो विअ मे पुणो पुणो वसणन्ते सज्जदि । ]

**कण्वः**—वत्से !

यस्य त्वया व्रणविरोपणमिङ्गुदीनां
तैलं न्यषिच्यत मुखे कुशसूचिविद्धे ।

---

परिक्राम्यन्ति = गच्छन्ति । उटजस्य = पर्णशालायाः, पर्यन्ते = समीपे चरितुं शीलमस्याः सा । गर्भभरेण मन्थरा = गर्भभारमन्दगमना, मृगवधूः= हरिणी, सुखेन प्रसवा यस्याः सा, सुखप्रसूतिः, प्रियस्य निवेदन एव निवेदनकः = शुभसूचको जनः, तं विसर्जयिष्यति = प्रेषयिष्यति, एतेन प्रसववादनन्तरं निवेदकेन दुष्यन्तेन सङ्गमः सूच्यते । गतिभङ्गं = गमनरोधं, पादाक्रान्तः = पादलग्न इव, वसनान्ते = पटाञ्चले,

यस्येति । यस्य—कुशसूच्या विद्धे = क्षते, मुखे, व्रणस्य = क्षतस्य, विरोपणं = विरोहणम्, इङ्गुदीनां तैलं, त्वया न्यषिच्यत = निक्षिप्तं, श्यामा·

श्यामाकमुष्टिपरिवर्द्धितको जहाति
सोऽयं न पुत्रकृतकः पदवीं मृगस्ते ॥१६॥

शकुन्तला—वत्स ! किं मां सहवासपरित्यागिनीमनुबध्नासि, ननु अचिरप्रसूतोपरतया जनन्या विना यथा मया वर्धितोऽसि, तथा इदानीमपि मया विरहितं तातस्त्वां चिन्तयिष्यति। तन्निवर्त्तस्व। (इति रुदती प्रस्थिता) [ वच्छ ! किं मं सहवासपरिच्चाइर्णी अणुबन्धेसि, णं अचिरप्पसूदोवरदाए जणणीए विणा जधा मए वड्ढिदो सि तधा दाणिंपि मए विरहिदं तादो तुमं चिन्तइस्सदि। ता णिउत्तस्स।

कण्वः—वत्से ! अलं रुदितेन, स्थिरा भव, इतः पन्थानमालोकय—

उत्पक्ष्मणोर्नयनयोरुपरुद्धवृत्तिं
बाष्पं कुरु स्थिरतया शिथिलानुबन्धम्।
अस्मिन्नलक्षितनतोन्नतभूमिभागे
मार्गे पदानि खलु ते विषमीभवन्ति ॥१७॥

---

कानां मुष्टिभिः परिवर्द्धितकः = पालितः, कृतकश्चासौ पुत्रश्च—पुत्रकृतकः = पुत्रस्थानीयः, सोऽयं मृगः, ते पदवीं = पन्थानं, न जहाति = न परित्यजति। [ स्वभावोक्तिः, अनुप्रासः। 'वसन्ततिलकं' ] ॥१६॥

सहवासपरित्यगिनीं = सहवासं विहाय गच्छन्तीम्, अनुसरसि = अनुबध्नासि, अचिरं प्रसूतया च तथा उपरतया = अचिरप्रसूतोपरतया = अचिरप्रसूतयैव मृतया, जनन्या = मात्रा, मया = मातृकल्पया, चिन्तयिष्यति = पर्यवेक्षिष्यते। निवर्त्तस्व = आश्रमपदं याहि। स्थिरा = धैर्यशीला, आलोकय = पश्य।

उत्पक्ष्मणोरिति। उत्—ऊर्ध्वं-पक्ष्मणी ययोस्तयोः—उत्पक्ष्मणोः =

**शिष्यौ**—भगवन् ! ओदकान्तं स्निग्धोऽनुगम्यत इति श्रूयते, तदिदं सरसीतीरम्, अत्र नः सन्दिश्य प्रतिगन्तुमर्हसि ।

**कण्वः**—तेन हीमां क्षीरिवृक्षच्छायामाश्रयामः ।

(सर्वे तथा नाटयन्ति )।

**कण्वः**—किन्नु खलु तत्रभवतो दुष्यन्तस्य युक्तरूपं सन्देष्टव्यम् ( इति चिन्तयति ।)

---

ऊर्ध्वीभूतनेत्रलोमशालिनोः, नयनयोः, उपरुद्धा—विषयेषु प्रतिहता, वृत्तिः = वर्त्तनं येन तम्—उपरुद्धवृत्तिं = प्रतिहतदर्शनशक्तिं, [1]बाष्पं = अश्रुजलं, स्थिरतया = धैर्येण, शिथिलोऽनुबन्धो यस्य तं—शिथिलानुबन्धं, संरुद्धप्रसरं कुरु । खलु = यतः, अलक्षितः, नतोन्नतो भूमिभागो यया तत्सम्बुद्धौ हे ! अलक्षितनतोन्नतभूमिभागे ! = अविदितसमविषमप्रदेशे ! शकुन्तले ! अथवा मार्गविशेषणमेतत्, शष्पाद्यावृततयाऽलक्षितसमविषमप्रदेशे, अस्मिन् मार्गे = आश्रमनिकटवर्त्तिनि चिरपरिचितेऽपि मार्गे, ते पदानि = चरणविन्यासाः, विषमीभवन्ति = स्खलन्ति, का कथाऽपरिचितेऽग्रिमे पथि स्यादित्याशयः । [ काव्यलिङ्गम्, अनुप्रासः ] ॥१७॥

आ उदकान्तं = जलाशयपर्यन्तं, स्निग्धः = प्रियः, गच्छन्,—अनुगम्यते = अनुस्रियते । श्रूयते = श्रुत्या प्रतिपाद्यते, सरसीतीरं = सरोवरतीरं, नः=अस्मान्, सन्दिश्य=किं राज्ञे वक्तव्यमित्यादिकमुपदिश्य, प्रतिगन्तुमर्हसि=निवर्त्तितुमर्हसि, क्षीरप्रधानो वृक्षः—क्षीरवृक्षः, तस्य छायां= क्षीरिणो वटादेश्छायाम्, क्षीरिवृक्षपर्यन्तमुदकाधारपर्यन्तं वा प्रियजनानुगमनस्य प्रसिद्धत्वात्क्षीरवृक्षोपादानं, "ओदकान्तं प्रियं प्रोथमनुव्रजे"दिति श्रुतिः । अतिशयेन युक्तं—युक्तरूपं = योग्यम्, [ पाठान्तरे—नलिनीपत्रान्तरितमपि=पद्मिनीदलपिहितमपि, सहचरं=प्रियम्, आतुरा=विरहविह्वला,

---

१" पुमांस्त्वश्रूणि बाष्पवाक" इति केशवात्पुंस्यापि बाष्पशब्दः ।

[शकुन्तला—( जनान्तिकं- ) हला ! प्रेक्षस्व नलिनीपत्रान्तरितमपि सहचरमपश्यन्ती आतुरा चक्रवाक्यारटति—दुष्करमहं करोमीति । अनसूया—सखि मैवं मन्त्रयस्व—

एषा प्रियेण विना गमयति रजनीं विषाददीर्घतराम् ।
गुर्वपि विरहदुःखमाशाबन्धः साहयति ॥ ]

अनसूया—सखि ! आश्रमपदे नास्ति कोऽपि चित्तवान्, यस्त्वया विरहय्यमाणो न ताम्यति । प्रेक्षस्व तावत् —

पुटकिनीपत्रान्तरितां व्याहृतोऽपि न खलु व्याहरति प्रियाम् ।
मुख उद्व्यूढमृणालस्त्वयि दृष्टिं ददाति चक्रवाकः ॥१८॥

[ सहि ! अस्समपदे ण अत्थि को वि चित्तवन्तो जो तए विरहिज्जन्तो ण ताम्मदि । पेक्ख दाव । ]

[ पुडइणि-वत्तन्तरिअं वाहरिओ वि ण हु वाहरेइ पिअं ।
मुह उव्वूढमिणाली तइ दिट्ठिं देइ चक्काओ । ] ॥१८॥

---

आरौति = क्रन्दति, दुष्करं = प्रियं विनाऽवस्थानरूपम्, अहं = चक्रवाकी, पत्रान्तरितेऽपि प्रिये यदहं जीवामि तन्मेऽनुचितमिति चक्रवाकी विरौति, अहं पुनः शकुन्तला इयद्दूरवर्त्तिनि प्रिये जीवामीति महन्मे कठिनं हृदयमिति भावः ।]

मा एव मन्त्रय = कथय, **एषापीति** । एषापि चक्रवाकी प्रियेण विना, विषादेन = दुःखेन दीर्घतराम् = आयामवतीं रात्रिं गमयति । यतः—गुर्वपि दुःखम्, आशाबन्धः = सङ्गमाशातन्तुः, साहयति, मर्षयति । [अर्थान्तरन्यासः ]

चित्तवान् = चेतनो जीवः । विरहय्यमाणः = सन्त्यज्यमानः, ताम्यति = ग्लायति । **पुटकिनीति** । पद्मिनीपत्रान्तरितां, "नालीकिनी पुटकिनी विषनालिश्च पद्मिनी" ति उत्पलिनीकोश । प्रियां=चक्रवाकीं मुखोद्व्यूढमृणालः= वदनधृतबिससूत्रः, व्याहृतोऽपि = वारम्वारमाहूतोऽपि, चक्राह्वः = चक्रवाकः,

---

१ [ ] पाठान्तरमेतत् ।

कण्वः—वत्स ! शाङ्गरव ! इति त्वया मद्वचनात् स राजा शकुन्तलां पुरस्कृत्याभिधातव्यः—

शाङ्गरवः—आज्ञापयतु भवान्—

कण्वः—

अस्मान् साधु विचिन्त्य संयमधनानुच्चैः कुलञ्चात्मनः
त्वय्यस्याः कथमप्यबान्धवकृतां स्नेहप्रवृत्तिञ्च ताम् ।
सामान्यप्रतिपत्तिपूर्वकमियं दारेषु दृश्या त्वया
भाग्याधीनमतः परं न खलु तद् वाच्यं वधूबन्धुभिः ॥१९॥

---

न व्याहरति = न वाचं प्रतिपद्यते, केवलं त्वयि दृष्टिं ददाति, त्वामेव प्रेक्षते। तिर्यञ्चोऽपि त्यक्तरतयो विरहविक्लवास्त्वां प्रेक्षन्ते, का कथाऽऽश्रमवासिनां जनानामित्याशयः । अनेन भावी दुष्यन्तास्वीकारः सूचितः ॥१८॥

शकुन्तलां पुरस्कृत्य = शकुन्तलाविषये, **अस्मानिति** । संयम एव धनं येषान्ते—संयमधनाः, तान्—संयमधनान् = तपोधनान्, अस्मान्–साधु= सम्यक्तया, विचिन्त्य = विचार्य, आत्मनः = स्वस्य, उच्चैः = उन्नतं, कुलं = वंशं—विचार्य, त्वयि—अस्याः=शकुन्तलायाः, कथमपि–न बान्धवैः कृतां= साहजिकीम्, तां = बहुशः त्वयाऽनुभूतां, स्नेहप्रवृत्तिं[1]=स्नेहाधिक्यं च विचार्य, सामान्या = साधारणी या–प्रतिपत्तिः = गौरवं, "प्रतिपत्तिः पदे प्राप्तौ प्रवृत्तौ गौरवेऽपि च"ति विश्वः । तत्पूर्वकं, = सर्वसाधारणगौरव-पूर्वकं, दारेषु = भार्यासु–इयं=शकुन्तला, दृश्या=दर्शनीया, अतः परम्— अधिकं, भाग्यायत्तं=भाग्याधीनं, तत्—वधूबन्धुभिः = कन्यापक्ष्यैः, न खलु वाच्यं = नैव कथनीयं, प्रधानपदन्तु भाग्याधीनमित्याशयः । [ काव्यलिङ्गम् अप्रस्तुतप्रशंसा, अनुप्रासः । शार्दूलविक्रीडितम् । ] ॥२०॥

---

१ "प्रवृत्तिः कथिता वृत्तौ प्रवाहोदन्तयोरपी"ति विश्वः ।

शार्ङ्गरवः—गृहीतोऽयं सन्देशः।

कण्वः—(शकुन्तलां विलोक्य—) वत्से! त्वमिदानीमनुशासनीयासि, वनौकसोऽपि वयं लौकिकज्ञा एव।

शार्ङ्गरवः—भगवन्! न खलु कश्चिदविषयो नाम धीमताम्।

कण्वः—सा त्वमितः पतिगृहं प्राप्य—

शुश्रूषस्व गुरून्, कुरु प्रियसखीवृत्तिं सपत्नीजने,
भर्त्तुर्विप्रकृतापि रोषणतया मास्म प्रतीपं गमः।
भूयिष्ठं भव दक्षिणा परिजने भोगेष्वनुत्सेकिनी
यान्त्येवं गृहिणीपदं युवतयो वामाः कुलस्याधयः॥२०॥

गौतमी वा किं मन्यते?

---

अनुशासनीया = शिक्षणीया, वनौकसोऽपि = वनवासिनोऽपि, लौकिकज्ञाः = लोकाचारपटवः, अतो लोकाचारं शिक्षयाम इत्यर्थः। अविषयः = अज्ञातः, "इतः = आश्रमात्, पतिगृहं प्राप्य"—गुरून् शुश्रूषस्वेत्यादि—अग्रिमश्लोकेन सम्बध्यते।

शुश्रूषस्वेति। गुरून् = पूज्यान् पत्युर्जनन्यादीन्, शुश्रूषस्व = सेवस्व, समानः पतिर्यासां ताः—सपत्न्यः, ता एव जनस्तत्र = सपत्नीसमूहे, प्रियसखीष्विव वृत्तिं = व्यवहारं कुरु, विप्रकृताऽपि = निराकृताऽपि "निकारो विप्रकारः स्या"दित्यमरः। रोषणतया = क्रोधेन, ईर्ष्यया वा, प्रतीपं = विरुद्धं, मा गमः = मा याहि। परिजने = सेवकवृन्दे, भूयिष्ठं = बाढं, दक्षिणा = अनुकूला भव, भाग्येषु=परमसम्पत्सु (भोगेष्विति पाठे—भोगान् प्राप्येत्यर्थः,) अनुत्सेकिनी=अभिमानरहिता, ईर्ष्याविरहिता च, एवं सति युवतयः = स्त्रियः, गृहिण्याः पदं = स्थानं, गृहिणीत्याख्यां, यान्ति = लभन्ते। ता एव गृहलक्ष्म्य इत्याशयः। वामाः = इतो विरुद्धाः स्त्रियस्तु—

**गौतमी**—एतावान् खलु वधूजने उपदेशः, जाते ! एतत् खलु हृदये कुरु, मा विस्मरिष्यसि। [ एत्तिओ क्खु वहूजणे उवदेसो, जादे ! एदं क्खु हिअए करेहि, मा विसुमरिस्ससि। ]

**कण्वः**—वत्से ! एहि परिष्वजस्व मां, सखीजनञ्च।

**शकुन्तला**—तात ! इत एव किं प्रियसख्यौ निवर्त्तिष्येते ?। [ ताद ! इदो ज्जेव किं पिअसहीओ णिउत्तिस्सन्ति ?।

**कण्वः**—वत्से ! इमे अपि प्रदेये, तन्न युक्तमनयोस्तत्र गन्तुम्, त्वया सह गौतमी गमिष्यति।

**शकुन्तला**—(पितुरङ्कमाश्लिष्य—) कथमिदानीं तातस्याङ्कात् परिभ्रष्टा-मलयपर्वतादुन्मूलिता चन्दनलतेव-देशान्तरे जीवितं धारयिष्यामि। [ कधं दाणिं तादस्स अङ्काइ वरिब्भट्टा मलअपव्वदादो उम्मुलिदा चन्दणलदा विअ देवन्तसरे जीविदं धारइस्सं ]।

---

कुलस्य = वंशस्यापि, न पत्युरेव केवलम्, आधयः = पीडाजनिका एव "पुंस्याधिर्मानसी व्यथा" "वामौ वल्गुप्रतीपौ च "इत्यमरः [ रूपकमर्थान्तरन्यासः," उपदिष्टं मनोहारि वाक्यं शास्त्रानुसारत" इत्युक्तेरुपदेशो नाम नाटकलक्षणं निर्दिष्टम्। 'शार्दूल०' ] ॥२१॥

स्त्रीणामुचितं स्त्री वेत्तीति गौतमी किमुपदिशतीत्याह,-किं मन्यते इति = कमुपदेशं युक्तं मन्यते। एतावान् = यावान् भवता उपदिष्टः, तावान् पर्याप्त उपदेश इत्याशयः। एतत् = उपदिष्टं कण्वस्य, परिष्वजस्व = आश्लेषं कुरु। इत एव = अस्मादेव स्थानात्, किं मया सह न गमिष्यत इत्याशयः। इमे = तव सख्यौ, प्रदेये = परिणेये, अनयोः = सख्योः, तत्र= स्वभर्तृगृहे, अङ्कम् = उत्सङ्गं, परिभ्रष्टा = च्युता, मलयः = चन्दनद्रुमोद्भवस्थानं पर्वतविशेषः, चन्दनलता देशान्तरे न प्ररोहतीति प्रसिद्धम्। "उत्सङ्गचिह्नयोरङ्कः"—इत्यमरः। एवम् = इत्थं, कातरा = विह्वला।

कण्वः—वत्से ! किमेवं कातरासि ?—

अभिजनवतो भर्त्तुः श्लाघ्ये स्थिता गृहिणीपदे
विभवगुरुभिः कृत्यैरस्य प्रतिक्षणमाकुला।
तनयमचिरात् प्राचीवार्कं प्रसूय च पावनं
मम विरहजां न त्वं वत्से ! शुचं गणयिष्यसि ॥२१॥

शकुन्तला—(पितुः पादयोः पतित्वा—) तात ! वन्दे।

[ ताद ! वन्दामि। ]

कण्वः—वत्से ! यदहमिच्छामि, तदस्तु ते।

शकुन्तला—(सख्यावुपगम्य—) सख्यौ ! एतं, द्वे अपि मां सममेव परिष्वजेथाम्।

[ सहीओ ! एध, दुवे विमं समज्जेव परिस्सजेध।

सख्यौ—(तथा कृत्वा—) सखि ! यदि नाम सराजर्षिः

---

अभिजनेति। वत्से ! अभिजनवतः = प्रसिद्धकुलसम्भूतस्य। अभिजनान्वयौ" इत्यमरः। भर्त्तुः श्लाघ्ये = प्रशंसनीये, गृहिणीपदे = महादेवीपदे, स्थिता = अभिषिक्ता, अस्य = भर्त्तुः, विभवेन = सम्पत्त्या, गुरुभिः = महनीयैः, कृत्यैः = कर्मभिः, प्रतिक्षणम् = अहर्निशम्, आकुला=कार्यप्रत्यवक्षेण-विह्वला, अचिरात् = शीघ्रमेव, प्राची = पूर्वदिग्, अर्कमिव = भास्करमिव, पावनं = चक्रवर्त्तिनं, तनयं = पुत्रं, प्रसूय = उत्पाद्य, मम विरहजां, शुचं = शोकव्यथां, त्वं, न गणयिष्यसि = न ज्ञास्यसि। [काव्यलिङ्गमुपमा, समुच्चयः। 'हरिणी' ] ॥२१॥

यत् = महत्सौभाग्यादिकम्, सर्वाभीष्टसम्पत्सुखम्। एतम् = आगच्छतम्। परिष्वजेथाम् = परिश्लिष्यतम्, ? तथा = सहैवालिङ्ग्य, प्रत्यभिज्ञाने = तव परिचये, मन्थरः = मन्दः, यदि स त्वां न जानाति ममेयं

प्रत्यभिज्ञानमन्थरो भवेत्, तदाऽस्य इदमात्मनो नामधेयाङ्कितमङ्गुलीयकं दर्शयिष्यसि । [ सहि ! जइ णाम सो राएसी पच्चहिण्णाणमन्थरो भवे, तदो से इमं अत्तणो णामधेअङ्किदं अङ्गुलिअअं दंसइस्ससि ]।

**शकुन्तला**—अनेन वां सन्देशेन कम्पितं मे हृदयम् ।
[ इमिणा वो सन्देसेण कम्पिदं मे हिअअं ]

**सख्यौ**—सखि ! मा बिभीहि, स्नेहः पापमाशङ्कते ।
[ सहि ! मा भाआहि । सिणेहो पावमासङ्कदि ]

**शार्ङ्गरवः**—भगवन् ! दूरमधिरूढः सविता; तत्त्वरयात्रभवतीम् ।

**शकुन्तला**—( भूयः पितुरङ्कमाश्लिष्य आश्रमाभिमुखीभूय च- ) तात ! कदा नु खलु भूयस्तपोवनं प्रेक्षिष्ये ।
[ ताद ! कदा णु क्खु भूओ तवोवणं पेक्खिस्सं । ]

**कण्वः**—वत्से !

भूत्वा चिराय सदिगन्तमहीसपत्नी
दौष्यन्तिमप्रतिरथं तनयं प्रसूय ।
तत्सन्निवेशितधुरेण सहैव भर्त्रा
शान्ते करिष्यसि पदं पुनराश्रमेऽस्मिन् ॥२२॥

---

भार्येति, तदाऽङ्गुलीयकं प्रदर्शनीयमित्याशयः । सन्देशेन=उपदेशेन, पापम्=अमङ्गलम्, दूरम्=बहुलं गगनाङ्गणं, [ पाठान्तरे [१]'युगान्तरं = "युगं हस्तचतुष्केपीति विश्वाद्धस्तचतुष्टयपरिमितं गगनप्रदेशं, प्रहरो जात इत्याशयः ।] भूयः = पुनरपि,

भूत्वेति । चिराय = बहुवेलं, दिगन्तैः सहिताया मह्याः सपत्नी=

---

१ 'युगान्तरं,

गौतमी—जाते! परिहीयते ते गमनवेला, तन्निवर्त्तय पितरम्, अथवा चिरेणापि एषा न निवर्त्तिष्यते, तन्निवर्त्ततां भवान्।

[जादे! परिहीअदि दे गमनवेला, ता निउत्तावेहि पिदरं। अधवा चिरेण वि एसा ण णिउत्तिस्सदि, ता णिउत्तदु भवं।]

कण्वः—वत्से! उपरुध्यते मे तपोऽनुष्ठानम्।

शकुन्तला—तपश्चरणव्यापारेण निरुत्कण्ठस्तातः, अहं पुनरुत्कण्ठाभागिनी संवृत्ता।

[तवच्चरणवावारेण णिरुक्कण्ठो तादो, अहं उण उक्कण्ठाभाइणी संवुत्ता।]

कण्वः—वत्से! मामेवं जडीकरोषि। (निःश्वस्य।)—

---

समानभर्तृका, भूत्वा = चतुरुदधिपर्यन्तभूभागपालकस्य पत्युः प्रिया भूत्वा अप्रतिरथं = जगदेकवीरं, दौष्यन्तिं = दुष्यन्तस्यापत्यं भरतं, तनयं = पुत्रं, प्रसूय = उत्पाद्य, तस्मिन् संनिवेशिता धूर्येनासौ, तेन = तत्सन्निवेशितधुरेण = दौष्यन्तिभरतनिवेशितराज्यभारेण, भर्त्रा = पत्या, सहैव, शान्ते पवित्रे, आश्रमे = अस्मिन् तपोवने, पुनः = पुनरपि, पदम् = अवस्थानं, करिष्यसि, वानप्रस्थाश्रमयोग्ये कालेऽत्रागमिस्यसीत्याशयः। [मालादीपकं] ॥ २२ ॥

परिहीयते = अपयाति। गमनवेला = यात्रामुहूर्तः, निवर्तय = मुञ्च, चिरेण = विपुलेन कालेन, एषा = शकुन्तला, न निवर्त्तयिष्यति = त्वां न परिहास्यति, भवान् = कण्वः। उपरुध्यते = अतिवर्त्तते, तदनुष्ठानवेला। गच्छतीति यावत्, तपश्चरणव्यापारेण = यज्ञादिकर्मणा निरुत्कण्ठः = मयि निरपेक्षः, उत्कण्ठाभागिनी = अत्युत्कण्ठाविकला, केवलं ममैव भवति स्नेहो न भवत इत्युपालम्भोऽयम्। एवम् = इत्थमुपालम्भदानेन, जडीकरोषि = व्याकुलयसि,

अपयास्यति मे शोकः, कथं नु वत्से त्वया रचितपूर्वम् ।
उटजद्वारविरूढं नीवारबलिं विलोकयतः ॥ २३ ॥

गच्छ, शिवास्ते सन्तु पन्थानः ।

( इति निष्क्रान्ताः—शकुन्तलया सह गौतमी—शार्ङ्गरव—शारद्वतमिश्राः । )

सख्यौ—( चिरं विचिन्त्य—सकरुणम्— ) हा धिक् हा धिक् ! अन्तरिता शकुन्तला वनराजिभिः ।

[ हद्धी हद्धी ! अन्तरिदा सउन्तला वणराइहिं । ]

कण्वः—( सनिःश्वासम्— ) अनसूये ! प्रियंवदे ! गता वां सहचरी; निगृह्य शोकावेगं मामनुगच्छतम् ।

( सर्वे प्रस्थिताः । )

उभे—तात ! शकुन्तलाविरहितं शून्यमिव तपोवनं प्रविशामः ।

[ ताद ! सउन्तलाविरहिदं सुण्णं विअ तवोवणं पविसह्म । ]

कण्वः—स्नेहप्रवृत्तिरेवंदर्शिनी । ( सविमर्शं परिक्रम्य— )

---

अपयास्यतीति । वत्से ! त्वया पूर्वं रचितः रचितपूर्वः, तं—रचितपूर्वं = पूर्वमुपकल्पितम्, उटजस्य द्वारे विरूढम्—उटजद्वारविरूढं = पर्णशालाद्वारप्ररूढम्, नीवाराणां बलिस्तं—नीवारबलिं = नीवारधान्योपकल्पितदेवोपहारं, विलोकयतः = प्रेक्षमाणस्य, मे शोकः, कथमपयास्यति= दूरीभविष्यति, नैवेत्यर्थः । तदलं चिन्तया, नाहं भवतीं विस्मरिष्यामीत्याशय आविष्कृतः । "विरूढोऽङ्कुरिते जात" इति मेदिनी । [ काव्यलिङ्गम् ] ॥२३॥

शिवाः = कल्याणप्रदाः, वनराजिभिः = वनश्रेणिभिः, "श्रेणी लेखास्तु राजय" इत्यमरः निगृह्य = अवरुद्ध्य, अगच्छतं = मत्पृष्ठलग्ना आश्रमं प्रतिसमागच्छतं, शून्यमिव = उदासीनमिव भासमानं, स्नेहप्रवृत्तिः = स्नेहानुबन्धः, एवं द्रष्टुं शीलं यस्याः सा—एवंदर्शिनी = एवं भावयति । स्नेहबद्धो लोक एवं पश्यति । वस्तुतो जगति न शून्यं, न पूर्णं वा किमपीति भावः ।

हन्त भोः ! शकुन्तलां पतिगृहे विसर्ज्य लब्धमिदानीं स्वास्थ्यम् , कुतः-

अर्थो हि कन्या परकीय एव
तामद्य सम्प्रेष्य परिग्रहीतुः ।
'जातोऽस्मि सद्यो विशदान्तरात्मा
चिरस्य निक्षेपमिवार्पयित्वा ॥२४॥

( इति निष्क्रान्ताः सर्वे । )

॥ चतुर्थोऽङ्कः ॥

---

सविमर्शं = विचारमभिनीय, स्वास्थ्यं = मनोनिर्वृतिः, सुखमिति यावत् ।

अर्थ इति । हि = यतः, कन्या—अर्थः = कन्यारूपं द्रव्यं, परस्यायं-परकीयः, = परस्यैव, तां = कन्यां, परिग्रहीतुः = पत्युः—पार्श्वे, संप्रेष्य = प्रस्थाप्य, चिरस्य = बहुकालं यावत् स्वनिकटे स्थापितं, निक्षेपं = न्यासं, ( "धरोहर" ) अर्पयित्वा इव = दत्त्वेव, सद्यः = अचिरादेव, विशदः अन्तरात्मा यस्यासौ-विशदान्तरात्मा = प्रसन्नचित्तः, अद्य = इदानीं, जातोऽस्मि = निष्पन्नोऽस्मि, चिरेण निष्पन्नोऽस्मीति वा सम्बन्धः । [ उत्प्रेक्षा, 'उपजातिः' ] ॥२४॥

इति श्रीगुरुप्रसादशास्त्रिरचितायामभिनवराजलक्ष्म्यां चतुर्थोऽङ्कः ।

---

१. जातो ममायं विशदः प्रकामं प्रत्यर्पितन्यास इवान्तरात्मा" इति पाठः ।

# पञ्चमोऽङ्कः ।

( ततः प्रविशति कञ्चुकी । )

कञ्चुकी—अहोबत ! कीदृशीं वयोऽवस्थामापन्नोऽस्मि,—

आचार इत्यधिकृतेन[1] मया गृहीता
या वेत्रयष्टिरवरोधगृहेषु राज्ञः ।
काले गते बहुतिथे मम सैव जाता
प्रस्थानविक्लवगतेरवलम्बनाय ॥१॥

---

## * अभिनवराजलक्ष्मीः *

कञ्चुको—वारबाणोऽस्यास्तीति—कञ्चुकी = सौविदल्लः, तल्लक्षणमुक्तं मातृगुप्ताचार्यैः—"ये नित्यं सत्यसम्पन्नाः, कामदोषविवर्जिताः। ज्ञानविज्ञानकुशलाः कञ्चुकीयास्तु ते स्मृताः।" इति। "अन्तःपुरचरो वृद्धो विप्रो गुणगणान्वितः। सर्वकार्यार्थकुशलः कञ्चुकीत्यभिधीयते।" "जरावैक्लव्ययुक्तेन विशेद्गात्रेण कञ्चुकी,"—इति च, "विदुषां संस्कृतभाषा मन्त्रिकञ्चुकिनामपि"—इत्युक्तेः संस्कृतभाषा चास्य। 'अहो' इत्याश्चर्ये, 'बते'ति खेदे, वयःकृतामवस्थां—वयोऽवस्थां = वार्धक्यकृतां दशाम् । आपन्नः = प्राप्तः, तामेवाह—

आचार इति। राज्ञः—अवरोधगृहेषु = अन्तःपुरगृहेषु, अधिकृतेन = नियुक्तेन, मया—आचार इति = परम्परागता मर्यादेयमिति हेतोर्या वेत्रयष्टिः = वेत्रलता, गृहीता = आलम्बिता, (शक्तेनापि मर्यादामात्रमवेक्ष्य या यष्टिर्यौवने धृताऽऽसीत्,) सैव वेत्रलता—बहुतिथे = बहूनां पूरणे—बहुसंख्ये,

---

१ 'अवहितेन'।

यावदभ्यन्तरगताय देवाय स्वमनुष्ठेयमकालक्षेपार्हं निवेदयामि। (स्तोकमन्तरं गत्वा-) किं पुनस्तत् ? । (विचिन्त्य-) आं ज्ञातम्, कण्वशिष्यास्तपस्विनो देवं द्रष्टुमिच्छन्ति। भोः! चित्रमेतत्—

क्षणात् प्रबोधमायाति लङ्घ्यते तमसा पुनः।
निर्वास्यतः प्रदीपस्य शिखेव जरतो मतिः ॥२॥

(परिक्रम्यावलोक्य च-) एष देवः—

प्रजाः प्रजाः स्वा इव तन्त्रयित्वा
निषेवते श्रान्तमना विविक्तम्।

---

काले गते=समये व्यतीते सति, प्रस्थाने विक्लवा गतिर्यस्य तस्य—प्रस्थानविक्लवगतेः = गमनारम्भ एव स्खलितपादस्य, मम,—अवलम्बनाय = शरीरधारणाय-जाता, यष्टिं विना पदात्पदमपि चलितुं न शक्नोमीति भावः। [काव्यलिङ्गं, विशेषः, विभावना, समाहितं, छेकवृत्तिश्रुत्यनुप्रासाः, 'वसन्ततिलकं] ॥१॥

अभ्यन्तरगताय = अन्तःपुरवर्त्तिने, अकालक्षेपार्हं = विलम्बासहम्, स्वमनुष्ठेयं = मया निवेदनीयं, देवाय = राज्ञे-निवेदयामि, किं पुनस्तत् = निवेदनीयं विस्मृतवानस्मीत्याशयः। भोः—इति विषादे, "भोस्तु सम्बोधनविषादयो"रिति मेदिनी। चित्रं = विचित्रमेतत्, तदेवाह—

क्षणादिति। निर्वास्यतः = निर्वाणं यास्यतः, प्रदीपस्य, शिखेव = अर्चिरिव, जरतः = वृद्धस्य, "प्रवयाः स्थविरो जरन्" इत्यमरः। मतिः = बुद्धिः, क्षणात्=सहसा, प्रबोधं = दीप्तिम्, उन्मेषम्, आयाति, पुनः = क्षणादेव, तमसा = अन्धकारेण, अज्ञानेन लङ्घ्यते = अभिभूयते [श्लेषः, उपमा, अनुप्रासः।] ॥२॥

'एष देवः' इति श्लोकेनाग्रिमेण सम्बध्यते—प्रजा इति। यूथानि = गजवृन्दानि, सञ्चार्य = स्वस्वकार्ये योजयित्वा, रविणा प्रतप्तः—सूर्यकिरण-

यूथानि सञ्चार्य्य रविप्रतप्तः
शीतं गुहास्थानमिव द्विपेन्द्रः ॥३॥

भोः ! सत्यं धर्म्मकार्य्यमनतिपात्यं देवस्य, तथापि शङ्कित-वानस्मीदानीमेव धर्म्मासनादुत्थिताय देवाय कण्वशिष्यागमनं निवेदयितुम् । अथवा—कुतो विश्रामो लोकपालानां, तथाहि—

भानुः सकृद्युक्ततुरङ्ग एव,
रात्रिन्दिवं गन्धवहः प्रयाति ।
शेषः सदैवाहितभूमिभारः,
षष्ठांशवृत्तेरपि धर्म्म एषः ॥४॥

( इति परिक्रामति । )

---

सन्तप्तः, = शीतलं गुहास्थानं = गह्वरप्रदेशं, द्विपेन्द्र इव = गजराज इव—एष देवः = महाराजो दुष्यन्तः, स्वाः प्रजा इव = स्वापत्यानीव । प्रजाः = लोकान्, तन्त्रयित्वा = नियम्य, श्रान्तं मना यस्यासौ—श्रान्तमनाः = परि-श्रान्तचित्तः, विविक्तं = विजनं, "विविक्तौ पूतविजनौ"—इत्यमरः । सेवते=आश्रयते । [ यमकम्, उपमा चालङ्कारौ, उपजातिर्वृत्तम् । ] ॥३॥

देवस्य = राज्ञः, धर्मकार्यं = धर्मतः प्राप्तं प्रजारक्षणाऽवेक्षणादिरूपम्, अनतिपात्यं = नोपेक्षणीयं, सर्वं विहायादावनुष्ठेयमिति । सत्यम् = यथार्थ-मेव । 'सत्यं प्रश्नेऽभ्युपगमे'—इति मेदिनी । तथापि—इदानीमेव = सद्य एव, धर्मासनात् = धर्माधिकरणात्, आस्थानमण्डपाद्वा, ( 'दर्बार' ) उत्थिताय = निवृत्ताय, शङ्कितवानस्मि, = निवेदयामि न वेति शङ्का-कुलोऽस्मि, परिश्रान्तत्वाद्देवस्येत्याशयः । लोकपालानां = जगत्परिपालकानां, चन्द्रसूर्यादीनां, राज्ञाञ्च ।

भानुरिति । भानुः=सूर्यः, सकृत् युक्तास्तुरङ्गा यस्य येन वाऽसौ—सकृद्युक्त-

( ततः प्रविशति राजा विदूषको विभवतश्च परीवारः )

राजा—( अधिकारखेदं निरूप्य ) सर्वः प्रार्थितमधिगम्य सुखी सम्पद्यते जन्तुः; राज्ञान्तु चरितार्थता दुःखोत्तरैव, कुतः—

औत्सुक्यमात्रमवसादयति[1] प्रतिष्ठा
क्लिश्नाति लब्धपरिपालनवृत्तिरेव ।
नातिश्रमापनयनाय यथा श्रमाय
राज्यं स्वहस्तधृतदण्डमिवातपत्रम् ॥५॥ ५/३/१/'६२

तुरङ्गः = युगादावेकवारमेव रथनियुक्ततुरङ्गमोऽद्य यावत् भ्रमत्येव लोकरक्षायै, न तदश्वाः कदापि रथाद्वियुज्यन्ते, (सूर्यो न विश्राम्यतीति भावः।) गन्ध वहतीति—गन्धवहः = पवनः, रात्रौ च दिवा च—रात्रिन्दिवम् = अहोरात्रम्, प्रयाति = प्रवहति । शेषः = नागराजः शेषः, सदैव—आहितो भूमेर्भारो येनासौ—आहितभूमिभारः = शिरोधृतधरित्रीमण्डलो न कदापि विश्राम्यति । षष्ठोंऽशो वृत्तिर्यस्यासौ तस्य—षष्ठांशवृत्तेः = षष्ठांशाधिकारिणो राज्ञोऽपि, एषः = प्रजापालनेऽविश्रामः, धर्म एव = अवश्यकर्त्तव्यमेव [ मालाप्रतिवस्तूपमा, परिसंख्या, अप्रस्तुतप्रशंसा, श्रुत्यनुप्रासः, इन्द्रवज्रावृत्तम् । ] ॥४॥

परिक्रामति = प्रचलति । विभवतः = यथाशक्ति, परिवारः = परिजनः ('दर्बारीगण') । अधिकारेण खेदं=राजकार्यकरणात्परिश्रमं, निरूप्य=नाटयित्वा, सर्वः = सकलोऽपि, जन्तुः = लोकः, प्रार्थितं = स्वाभिलषितम्, अधिगम्य = प्राप्य, सुखी सम्पद्यते = जायते । चरितार्थता = अभीष्टसिद्धिः, दुःखमुत्तरं यस्याः सा—दुखोत्तरैव, = दुःखमात्रसारैव ।

औत्सुक्यमात्रमिति । अस्य-राज्ञः प्रतिष्ठा=राज्यलाभः, औत्सुक्यमेव—औत्सुक्यमात्रम् = तत्तत्पदार्थभोगेच्छामेव, अवसादयति = नाशयति । (तत्तत्पदार्थलाभे तत्तदिच्छाया निवृत्तेः । ) लब्धस्य = प्राप्तस्य राज्यादेः,

१ 'अवसाययति' वा पाठः ।

( नेपथ्ये )

वैतालिकौ—जयति जयति देवः ।

एकः—स्वसुखनिरभिलाषः खिद्यसे लोकहेतोः
प्रतिदिनमथवा ते सृष्टिरेवंविधैव ।
अनुभवति हि मूर्ध्ना पादपस्तीव्रमुष्णं
शमयति परितापं छायया संश्रितानाम् ॥६॥

---

परिपालनाय = रक्षणाय, वृत्तिः = व्यापारश्च, तदर्थं नानाक्लेशसहनं, महद्युद्धादिकं, रात्रिन्दिवं चिन्तावैक्लव्यादिकञ्च, एनं = राजानं, क्लिश्नाति = पीडयति। राज्यस्य फलमिच्छाविनोदमात्रं, तद्रक्षणवर्द्धनादौ भूरिप्रपञ्च आयास इति—यादृशं सुखं नास्ति, तादृशं तत्र दुःखमेवेति भावः। स्वहस्तेन धृतो दण्डो यस्य तत्—स्वहस्तधृतदण्डं = स्वकरकलितदण्डम्, आतपात्त्रायत इत्यातपत्रं = छत्रम्, इव,—राज्यं, यथा श्रमाय = यादृक् श्रमजनकं भवति–तथा नातिश्रमापनयनाय = न श्रमविगमाय भवति। राज्ये यथा श्रमस्तथा न सुखं विश्रान्तिश्चेत्याशयः। [परिसंख्या, उपमा, काव्यलिङ्गम्, अनुप्रासः, वसन्ततिलका च वृत्तं। ] ॥५॥

वैतालिकौ = वन्दिनौ, तल्लक्षणमुक्तं भावप्रकाशे—"तत्तत्प्रहरकयोग्यै रागैस्तत्कालवाचिभिः श्लोकैः। सरभसमेव वितालं गायन्वैतालिको भवति"—इति।

स्वेति। प्रतिदिनं = निरन्तरं, प्रत्यहं, स्वस्य स्वस्मिन्वा यत्सुखं तत्र निरभिलाषः = स्वसुखेच्छारहितः सन्, लोकहेतोः = लोकसुखार्थं, खिद्यसे = खेदमनुभवसि,

अथवा—ते वृत्तिः = नैसर्गिकं वर्त्तनम्, एवंविधैव = स्वसुखनिरपेक्षं परसुखोत्पादनायैव, हि = यतः—पादपः = वृक्षः, मूर्ध्ना = शिरसा, तीव्रं = तीक्ष्णम्, उष्णं = निदाघं "निदाघ उष्णोपगम उष्ण ऊष्मागम-

द्वितीयः—नियमयसि विमार्गप्रस्थितानात्तदण्डः
प्रशमयसि विवादं कल्पसे रक्षणाय।
अतनुषु विभवेषु ज्ञातयः सन्तु नाम
त्वयि तु परिसमाप्तं बन्धुकृत्यं जनानाम् ॥७॥

राजा—(आकर्ण्य साश्चर्य्यम्-) एतेन कार्य्यानुशासनपरिश्रान्ताः पुनर्नवीकृताः स्मः।

विदूषकः—(विहस्य—) भोः! गोवृन्दारकेति भणितस्य

---

स्तपः" इत्यमरः। छायया = अनातपेन, संश्रितानाम् = आश्रितानां, परितापं = खेदं, शमयति = दूरीकुरुते। [ काव्यलिङ्गं, दृष्टान्तः, आक्षेपः, अनुप्रासः, मालिनीवृत्तं। ] ॥६॥

नियमयसीति। आत्तो दण्डो येनासौ—आत्तदण्डः = गृहीतराजदण्डः, विमार्गं—प्रस्थितान्—विमार्गप्रस्थितान्=भिन्नमर्यादान्, नियमयसि= निवारयसि, विवादं = विरोधं, प्रशमयसि = निवारयसि, रक्षणाय = जगद्रक्षणाय, कल्पसे=समर्थो भवसि, अतनुषु=बहुलेषु, विभवेषु = धनादिषु, सत्सु, ज्ञातयः=बान्धवाः, सन्तु = भवन्तु; अधिकारिण इति शेषः नामेति संभावनायां, ('संविभक्ता इति पाठान्तरे-संविभक्ताः = अधिकारिणो भवन्तु इत्यर्थः।) तु=परन्तु, प्रजानां=जनानां, बन्धुकृत्यं = रक्षणादिरूपं बन्धुकृत्यं, त्वयि = त्वय्येव, परिसमाप्तं=निष्पन्नं भवति। बान्धवा धनाधिकारिणो भवन्तु नाम, बन्धुकृत्यं पालनावेक्षणादिकं भवानेव करोतीति अहो! भवतो निष्कारणोपकारप्रवणतेति भावः। [व्यतिरेकः, दीपकं, काव्यलिङ्गमनुप्रासः, मालिनी वृत्तं ] ॥७॥

कार्यानुशासनेन परिश्रान्ताः—कार्यानुशासनपरिश्रान्ताः—राजकार्यसञ्चालनश्रान्ताः, एतेन—वृक्षादिव्यवहारबोधनेन, नवीकृताः = उत्साहिताः, अपगतखेदाः, गौश्चासौ वृन्दारकश्च—गोवृन्दारकः=वृषभश्रेष्ठः, इति भणि-

वृषभस्य किं परिश्रमो नश्यति ? ।

[भो ! गोविन्दारभत्ति भणिदस्स विसभस्स किं परिस्समो णस्सदि ? ।]

**राजा**—( सस्मितम्- ) ननु क्रियतामासनपरिग्रहः ।

( उभावुपविष्टौ, परिजनश्च यथास्थानं स्थितः । )

( नेपथ्ये वीणाशब्दः । )

**विदूषकः**—( कर्णं दत्त्वा- ) भो वयस्य ! सङ्गीतशालाभ्यन्तरे कर्णं देहि, कलविशुद्धाया गीतेः स्वरसंयोगः श्रूयते । जाने तत्रभवती हंसवती वर्णपरिचयं करोतीति ।

---

तस्य=इत्येवं कृतप्रशंसस्य, वृषभस्य = वृषस्य, किं नश्यति ! = न नश्यतीत्यर्थः । आसनस्य परिग्रहः = स्वीकारः । नेपथ्ये = जवनिकाभ्यन्तरं ।

"गीतं वाद्यं तथा नृत्यं त्रयं सङ्गीतमुच्यते" इत्युक्तलक्षणं सङ्गीतं,—तद्यस्यां शालायां सा—सङ्गीतशाला, तस्या अभ्यन्तरं तस्मिन्—सङ्गीतशालाभ्यन्तरे= अन्तःपुरसङ्गीतविद्यालये, कर्णं देहि = सावधानं शृणु, रागाद्याश्रयः सन्दर्भविशेषो गीतिः, तस्याः कलविशुद्धत्वं विशेषणं, "काकली तु कले सूक्ष्मे ध्वनौ तु मधुराऽस्फुटे" इत्युक्ताऽव्यक्तमधुरस्वरात्मिका काकली—'कल' इत्युच्यते, विशुद्धा च—पञ्चसु गीतिभेदेषु ( शुद्धा-भिन्ना-गौडी-वेसरा-साधारण्याख्येषु ) प्रथमा गीतिः । तल्लक्षणञ्च—"विशुद्धा स्यादवक्रैर्ललितैः स्वरैः"— इति सङ्गीतरत्नाकरे । इत्थञ्च—कलायाः = अव्यक्तमधुरायाः, विशुद्धायाः= अवक्रललितस्वरग्रथितायाः, गीतेः = गीतिविशेषस्य, स्वरसंयोगः = स्वरालाप-इत्यर्थो बोध्यः। ( "तालयशुद्धाया वीणाया" इति पाठान्तरे— तालेन = कालक्रियामानेन, लयेन = गीतवाद्यस्वरसाम्येन शुद्धायाः = निर्दोषायाः, वीणायाः=वल्लक्याः स्वरसंयोगः = निषादादिभिः स्वरैः सम्यग्योजना,—इत्यर्थो बोध्यः ।) जाने=अवगच्छामि, हंसवती = राज्ञो भोगिनीकापि ललना, वर्णपरिचयं, स्थाय्यारोह्यवरोहसंचारिभेदभिन्नगानक्रियाया- अभ्यासं, "गानक्रियोच्यते वर्णः स चतुर्धा निरूपितः । स्थाय्यारोह्यवरोही च

[ भो वअस्स ! सङ्गीदसालब्भन्तरे कण्णं देहि, कलविसुद्धाए गीताए सरसंजोओ सुणीअदि । जाणे तत्थभोदी हंसवदी वण्णपरिचअं करेदि त्ति । ]

राजा—तूष्णीम्भव, यावदाकर्णयामि ।

कञ्चुकी—( विलोक्य- ) अन्यासक्तो देवः, तदवसरं प्रतिपालयामि । ( इत्येकान्ते स्थितः । )

( आकाशे गीयते- )

अभिनवमधुलोलुपो भवांस्तथा परिचुम्ब्य चूतमञ्जरीम् ।
कमलवसतिमात्रनिर्वृतो मधुकर ! विस्मृतोऽसि एनां कथम् ॥८॥

[अहिणवमहुलोलुबो भवं तह परिचुम्बिअ चूअमञ्जरिं ।
कमलवसदिमेत्तणिव्वुदो महुअर ! विह्मरिदोसि णं कहं ॥८॥]

---

सञ्चारी चे"ति रत्नाकरोक्तेः,—गीत्यभ्यासे प्रथमतो वर्णपरिचयः—सारेगमादिना क्रीयते ।

अन्यासक्तः = गीतिश्रवणप्रवणः, अवसरं = सुन्यागमनिवेदनावसरं, प्रतिपालयामि=प्रतीक्षिष्ये । नाट्ये रंगमध्ये नेपथ्यभिन्नं स्थानमाकाशः ।

अभिनवेति । अभिनवे रसे लोलुपः = नूतनपुष्परससतृष्णः "समौ लोलुपलोलुभौ" इत्यमरः । भवान्, तथा=यथेच्छं, विविधलीलाविलसितैः, चूतमञ्जरीम् = आम्रवल्लरीं, परि = सर्वतोभावेन, चुम्बित्वा = समुपभुज्य, हे मधुकर != भ्रमर! मधुप्रियोऽपि भवान्, कमले या वसतिस्तयैव निर्वृतः=कमलवसतिमात्रनिर्वृतः = कमलोदरनिवासेनैवात्मानं धन्यं मन्यमानः सन्, न तु तत्र मधुरसास्वादवार्त्तापीति कथं स्वभावमपि पर्यत्यज इति मधुकरेति साभिप्रायविशेषणेन लभ्यते । एनां=पूर्वमनुभूतां मधुरमधुराविलां चूतमञ्जरीं, कथं विस्मृतोऽसि ? मां नवयौवनोद्भेदकाल एव तथाऽनुभूयेदानीं सर्वथा त्वदुपभोगयोग्यां कथं न स्मरसीति हंसवत्या उपालम्भो बोध्यः । कमलवसतिः—कमला नाम्नी काचन राज्ञो भोगिनी, वसुमती वा ।

**राजा**—अहो ! रागपरिवाहिनी गीतिः ।

**विदूषकः**—भो वयस्य ! किं तावदस्या गीतिकाया अपि गृहीतो भवताऽक्षरार्थः ।

[भो वअस्स ! किं दाव से गीदिआए अवि गहीदो भअदा अक्खरत्थो ।]

**राजा**—( सस्मितम्– ) सकृत्कृतप्रणयोऽयं जन इत्यक्षरार्थः । तदहं देवीं हंसवतीमन्तरेण उपालम्भनमागतोऽस्मि । सखे !

---

तदासक्तो मां कथं विस्मृतवानसीति गूढ उपालम्भः । अनेन शकुन्तला-विषयकोऽपि व्यवहारः—'तां तथोपभुज्येदानीं राजलक्ष्मीसुखितः कथं न स्मरसी'ति–गम्यते । "मधुव्रते मधुकरः कामुकेऽपी"ति विश्वः । ["रहस्यार्थस्य तूद्भेदः क्षिप्तिः स्या"दित्युक्तेः क्षिप्तिर्गर्भाङ्गम्, राज्ञः शकुन्तलाविस्मरणस्य प्रस्तुतस्य गम्यत्वात्—"गर्भबीजसमुद्भेदादाक्षेपः परिकीर्त्तत" इति धनिकोक्तेराक्षेपनामा गर्भसन्ध्यङ्गमिति केचित् । तृतीयं पताकास्थानकं—"अर्थोपक्षेपकं यत्तु लीनं सविनयं भवेत् । श्लिष्टप्रत्युत्तरोपेतं तृतीयमिदमुच्यते" इति राघवभट्टाः । केचित्प्रथमं पताकास्थानकमेतदित्याहुः । प्रच्छेदकाख्यं लास्याङ्गम्,–"अन्यासक्तं पतिं मत्वा प्रेमविच्छेदमन्युना । वीणापुरस्सरं गानं स्त्रियाः प्रच्छेदको मतः" इति विश्वनाथोक्तेः । काव्यलिङ्गानुप्रासौ ।] अपरवक्त्रं वृत्तम् ॥८॥

रागमनुरागं परिवहति तच्छीला—रागपरिवाहिनी=अनुरागबहुला, गीतिः=गानभेदः । रागस्य-जलस्य सरसीव—गीतिराधारः, सरोवरे जलमधिकं सद्यथा ततः परिवहति । तथा गीतौ मातुमसमर्थो रागो बहिरपि परिवहतीत्याशयः । रसाविला गीतिरिति भावः ।

किं तावदिति । अस्या गीतेः कोऽभिप्राय इत्याशयः प्रश्नस्य । सकृत्=एकवारं, कृतः प्रणयो यस्मिन्नसौ–कृतप्रणयः = कृतस्नेहः, अयं जनः = हंसवतीलक्षणः, अन्तरेण = विना, एकवारमुपभुज्य हंसवतीं त्यक्तवानस्मीति तस्या उपालम्भगोचरीभूतोऽस्मीति भावः । 'हंसपदी'ति क्वचिन्नाम दृश्यते ।

माधव्य ! मद्वचनादुच्यतां देवी हंसवती, सम्यगुपालब्धोऽस्मीति ।

**विदूषकः**—यद्भवानाज्ञापयति, ( उत्थाय- ) भो वयस्य ! गृहीतस्त्वया परकीयाभ्यां हस्ताभ्यां शिखण्डके अच्छभल्लूकः । तद्वीतरागस्येवाप्सरसा गृहीतस्य नास्ति मे मोक्षः ।

[ जं भवं आणवेदि । भो वअस्स ! गहीदो तुए परकीएहिं हत्थेहिं सिहण्डए अच्छभल्लो, ता वीदराअस्स असरणस्स णत्थि मे मोक्खो । ]

**राजा**—सखे ! गच्छ, नागरिकवृत्त्या सान्त्वयैनाम् ।

**विदूषकः**—का गतिः । ( इति निष्क्रान्तः । ) [ का गई । ]

**राजा**—( स्वगतम्- ) किन्नु खलु गीतमेवंविधमाकर्ण्य इष्टजनविरहादृतेऽपि बलवदुत्कण्ठितोऽस्मि । अथवा—

---

(तदस्याः = हंसवत्याः, उपालम्भमवगतोऽस्मि = प्राप्तवानस्मि,कुतः—देवीं वसुमतीमन्तरेण=विना, न तिष्ठामि, हंसवतीं पुनरेकदाऽपि न स्मरामीति हेतोरित्यर्थः,—"तदस्या देवीं वसुमतीमन्तरेण—महदुपालम्भमवगतोऽस्मी"ति पाठे-बोध्यः । अत्र अभिनवेत्यादिगीतिमारभ्यैतदन्तेन भ्रंशो-नामालङ्कारो व्यज्यते, "वाच्यमर्थं परित्यज्य दृष्टान्ताद्यैरनेकधा । अन्यस्मिन्नेव पतनादिह भ्रंशः स उच्यते—"इत्युक्तेः, भ्रमरवृत्तान्तं वाच्यं विहाय राजवृत्तान्तपरतया योजनात् । नालिका नाम वीथ्यङ्गं च, निगूढार्थभाषणात्, "सोपहासनिगूढार्थप्रहेलिका नालिकेत्युक्ते"रित्याचार्याः ।)

शिखण्डके=केशपाशे, अच्छभल्लूकः = ऋक्षः, "ऋक्षाच्छभल्लभल्लूकाः" इत्यमरः । यथा परहस्ताभ्यामृक्षं केशेषु गृह्णन्, परं जीवितसंशये पातयति तथा राज्ञा कुपितहंसवतीप्रसादनकर्मणि विदूषको वराकः पातित इति भावः । परहस्ताभ्यामित्यादिकं लौकिकमाभाणकं । वीतरागस्य = मुनेः, अप्सरसा गृहीतस्य, न मोक्षः = न कैवल्यप्राप्तिः, न विपत्तिमोक्षश्च ।

नागरिकवृत्त्या=विदग्धव्यवहारेण, चातुर्येणेति यावत् । का गतिः=राज-

रम्याणि वीक्ष्य मधुरांश्च निशम्य शब्दान्
पर्य्युत्सुकीभवति यत् सुखितोऽपि जन्तुः ।
तच्चेतसा स्मरति नूनमबोधपूर्वं
भावस्थिराणि जननान्तरसौहृदानि ॥९॥

( इत्यस्मृतिनिमित्तमुन्मनस्कत्वं रूपयति । )

कञ्चुकी—( उपसृत्य— ) जयति जयति देवः, एते खलु हिमगिरेरुपत्यकारण्यवासिनः कण्वसन्देशमादाय सस्त्रीकास्तपस्विनः सम्प्राप्ताः, श्रुत्वा देवः प्रमाणम् ।

---

वचनमनुल्लङ्घनीयं, तद् गच्छामि, एवंविधं=प्रियाविस्मरणोपालम्भगर्भम्, इष्टजनस्यविरहस्तस्मात्=प्रियावियोगात्, ऋते = विनाऽपि, बलवत्=सुदृढम्।

रम्याणीति । रम्याणि = मनोज्ञानि, ललनादीनि वीक्ष्य = दृष्ट्वा, च मधुरान् शब्दान्, गीतादीन् निशम्य = श्रुत्वा, सुखितोऽपि=विरहादिरहितोऽपि जन्तुः=प्राणी, यत्–पर्युत्सुकीभवति=उत्कण्ठितो भवति । तत्–अबोधपूर्वम्—अज्ञानपुरस्सरं, भावैः स्थिराणि–भावस्थिराणि=वासनारूपेण—दृढानि, जननान्तरसौहृदानि=जन्मान्तरप्रणयान्, चेतसा=चित्तेन, नूनं=ध्रुवं, स्मरति=भावयति । रम्यदर्शनादिना प्रियशब्दादिना चोद्भावितजन्मान्तरानुभूतस्नेहसंस्कारः पुमान्—इह जन्मनि सर्वतः सुखितोऽपि–यथोत्कण्ठां सम्मुग्धाकारां वहति, तथाऽहमपि निष्कारणमौत्कण्ठ्यं विरहीव वहामीति शापाच्छादितस्मृतेः शकुन्तलाया अस्मरतोऽपि राज्ञस्तत्रानुरागोऽविच्छिन्नो बोधितः । [अप्रस्तुतप्रशंसा, काव्यलिङ्गमनुप्रासाश्च । वसन्ततिलकावृत्तं] ।९।

अस्मृतिनिमित्तमिति । विस्मरणहेतुकामुत्कण्ठां नाटयति—यथा कश्चन किमपि विस्मृत्य चिन्तयति तथा नाटयतीत्यर्थः ।

उपत्यकायां = पर्वतसन्निहितप्रदेशे, यदरण्यं तत्र वसन्ति तच्छीलाः, श्रुत्वा देवः प्रमाणम् = एतदाकर्ण्य भवानुचितं चिन्तयतु । कण्वस्य सन्देशं

राजा—( सविस्मयम्– ) किं कण्वसन्देशहारिणः सस्त्रीकास्तपस्विनः ?।

कञ्चुकी—अथकिम्।

राजा—तेन हि विज्ञाप्यतां मद्वचनादुपाध्यायः सोमरातः, अमूनाश्रमवासिनः श्रौतेन विधिना सत्कृत्य स्वयमेव प्रवेशयितुमर्हतीति। अहमप्येतांस्तपस्विदर्शनोचितप्रदेशे प्रतिपालयामि।

कञ्चुकी—यथाज्ञापयति देवः। ( इति निष्क्रान्तः। )

राजा—( उत्थाय– ) वेत्रवति ! अग्निशरणमार्गमादेशय।

प्रतीहारी[1]—इत इत एतु देवः। ( परिक्रम्य– ) एषोऽभिनवसम्मार्ज्जनरमणीयः सन्निहितहोमधेनुरग्निशरणालिन्दः;

---

हरन्ति तच्छीलाः सन्देशहारिणः = कण्ववाचिकसन्देशप्रापकाः। विज्ञाप्यतां = सूच्यतां, सोमरातः = तन्नामा उपाध्यायः = राजपुरोहितः। श्रौतेन = श्रुतिविहितेन, सत्कृत्य = अर्घ्यादिना पूजयित्वा, एतान् = आश्रमवासिनः, तपस्विनां दर्शनस्य उचिते = मुनिदर्शनयोग्ये, प्रदेशे, प्रतिपालयामि = प्रतीक्षिष्ये। वेत्रवती = प्रतिहारिणी[1]। अग्निशरणस्य = होमाग्निशालायाः, "शरणं गृहरक्षित्रो"रित्यमरः। मार्गं = पन्थानम्।

इत इतः = अमुना पथा, अभिनवेन—सम्मार्जनेन रमणीयः = प्रत्यग्रसम्मार्जनपरिष्कारेण रुचिरः, सन्निहिता होमस्योपकारिका धेनुवो यत्रासौ—सन्निहितहोमधेनुः = गोयूथसनाथः। अग्निशरणस्यालिन्दः—अग्निशरणालिन्दः = होमाग्निशालाबहिर्द्वारप्रकोष्ठकः, "प्रघाणप्रघणालिन्दा बहिर्द्वार-

---

१ प्रतिहारी—सन्धिविग्रहादिकार्यनिर्देशकारिणी, तल्लक्षणं—सन्धिविग्रहसम्बद्धं नानाकार्यं समुत्थितं, निवेदयन्तिं या राज्ञः प्रतीहार्यस्तु ता स्मृताः" इति भावप्रकाशाचार्यैराख्यातम्।

तदारोहतु देवः । [ इदो इदो एदु देवो । एसो अहिणवसम्मज्जणरमणीओ सण्णिहिदहोमधेणु अग्गिसरणालिन्दो; ता आरोहदु देवो । ]

राजा—( आरुह्य परिजनांसावलम्बी तिष्ठन्- ) वेत्रवति ! किमुद्दिश्य तत्रभवता कण्वेन मत्सकाशमृषयः प्रेषिताः ?—

किं तावद्व्रतिनामुपोढतपसां विघ्नैस्तपो दूषितं ?
धर्म्मारण्यचरेषु केनचिदुत प्राणिष्वसच्चेष्टितम् ? ।
आहोस्वित् प्रसवो ममापरिचितैर्विष्टम्भितो वीरुधा-
मित्यारूढबहुप्रतर्कमपरिच्छेदाकुलं मे मनः ॥१०॥

प्रतीहारी—देवस्य भुजदण्डनिर्वृते आश्रमपदे कुत एवम्;

---

प्रकोष्ठके" इत्यमरः । आरोहतु = निःश्रेणिमधिरोहतु । परिजनस्यांसमवलम्बते तच्छीलः—परिजनांसावलम्बी = अनुचरस्कन्धमवलम्बमानः ।

किन्तावदिति । उपोढं तपो येषान्तेषामुपोढतपसाम् = अतितपसां, "उपोढः कथितोऽत्यूढे समासन्ने विवाहिते "इति धरणिः । व्रतिनां = दीक्षितानां, विघ्नैः = अन्तरायैः, तपः—दूषितं = विघ्नितं, किं तावत् ? । उत—धर्मारण्येषु चरन्ति तेषु-धर्मारण्यचरेषु = तपोवनविहारिषु, प्राणिषु = जन्तुषु, केनचित् असत् = अनुचितं, चेष्टितम् = आचरितं किम् ? । आहो स्वित्,—मम अपरिचितैः = पूर्वोपार्जितैः पापैः, अथवा ममापरिचितैः रोगैः, वीरुधां = व्रततीनाम्, प्रसवः = फलोत्पादनशक्तिः, पत्रपुष्पफलादिसमुत्पत्तिश्च, विष्टम्भितः = अवरुद्धः ? "विष्टम्भः प्रतिबन्धे स्या"दिति मेदिनी । इति—इत्येवम्, आरूढः बहुः प्रतर्को यस्मिन् तत्—आरूढबहुप्रतर्कं = नानातर्काकुलितम्, मे = मम, मनः—अपरिच्छेदेनाकुलम् = अनिर्णयादुत्कलिकाकुलितम् । [ काव्यलिङ्गम् , शार्दूलविक्रीडितं, ] ॥१०॥

भुजदण्डेन निर्वृते = सुखिते, आश्रमपदे = तपोवने । एतत् = अनि-

किन्तु सुचरिताभिनन्दिन ऋषयो देवं समाजयितुमागता इति तर्कयामि । [ देवस्स भुअदण्डणिव्वुदे अस्समपदे कुदो एवं; किन्तु सुचरिताहिणन्दिणो इसीओ देवं सभाजइदुं आअदे त्ति तक्केमि । ]

( ततः प्रविशतो गौतमीसहितौ शकुन्तलामादाय कण्वशिष्यौ पुरतश्चैषां पुरोहितकञ्चुकिनौ । )

कञ्चुकी—इत इतो भवन्तः ।

शार्ङ्गरवः—सखे ! शारद्वत !—

महाभागः कामं नरपतिरभिन्नस्थितिरसौ
न कश्चिद्वर्णानामपथमपकृष्टोऽपि भजते ।
तथापीदं शश्वत्परिचितविविक्तेन मनसा
जनाकीर्णं मन्ये हुतवहपरीतं गृहमिव ॥११॥

---

श्रसम्भावनं । सुचरितमभिनन्दन्ति तच्छीलाः—सुचरिताभिनन्दिनः = धर्मप्रवणजनप्रियाः । सभाजयितुं = श्लाघयितुम्, पुरतः = अग्रे, पुरोहितः= सोमरातोपाध्यायः । कञ्चुकी = सौविदल्लः ।

महाभाग इति । यद्यपि—अभिन्ना स्थितिर्येनासौ—अभिन्नस्थितिः = मर्यादारक्षकः, असौ—नरपतिः = महाराजो दुष्यन्तः, कामं = सत्यं, महाभागः = महानुभावः, किञ्च—अहो ! = आश्चर्यं । वर्णानां = ब्राह्मणादीनां चतुर्णां वर्णानां मध्ये, अपकृष्टोऽपि = शूद्रादिरपि, पञ्चमोऽस्च्छूद्रादेरपि कश्चित्, अपथं = कुमार्गं, न भजते = न सेवते । तथापि—शश्वत्—परिचितं विविक्तं येन, तेन—शश्वत्परिचितविविक्तेन = निरन्तरैकान्तवासप्रवणेन, मनसा—उपलक्षितोहं—जनैराकीर्णं जनाकीर्णम् = लोकसङ्कुलम्, इदं = राजगृहं, हुतवहेन परीतं = पावकज्वालाक्रान्तं, गृहमिव = निकेतनमिव, = मन्ये = तर्कयामि । अग्निपरीतगृहमिव दूरतः परिहर्त्तव्यमेवेदं

**शारद्वतः**—शार्ङ्गरव ! स्थाने खलु पुरप्रवेशात्तवेदृशः संवेगः, अहन्तु—

अभ्यक्तमिव स्नातः, शुचिरशुचिमिव, प्रबुद्ध इव सुप्तम् ।
बद्धमिव स्वैरगतिर्जनमिह सुखसङ्गिनमवैमि ॥१२॥

**पुरोधाः**—अत एव भवद्विधा महान्तः ।

**शकुन्तला**—( दुर्निमित्तमभिनीय— ) अम्महे ! किं मे वामेतरत् नयनं विस्फुरति । [ अम्मो ! किं मे वामेदरं णअणं विप्फुरदि । ]

---

राजगृहं जानामीत्याशयः । [ अत्र दुष्टनृपादिसन्निधानादेः कारणस्याभावेऽपि त्याज्यत्वरूपकार्योक्तेर्विभावना, उपादेयत्वसम्पादककारणकलापसत्त्वेऽपि कार्यस्योपादेयत्वस्याभावाद्विशेषोक्तिश्च । अनयोः सन्देहसाङ्कर्यम् । उपमाऽनुप्रासः । शिखरिणीवृत्तम् ।] ॥११॥

स्थाने = युक्तं, पुरप्रवेशात् = जनसङ्कुले नगरेऽत्र प्रवेशात्, संवेगः = सम्भ्रमः, "समौ संवेगसम्भ्रमौ" इत्यमरः । 'अहमपि' इदं श्लोकेनाग्रिमेण सहैव व्याख्येयम् ।

अभ्यक्तेति । इह = राजधान्यां—स्नातः = कृताचारपरिग्रहः, अभ्यक्तमिव = तैलाक्तमशुचिप्रायमिव, शुचिः = पवित्रः, अशुचिमिव = अपवित्रमिव, प्रबुद्धः = जागरितः, सुप्तमिव = निद्रितमिव, स्वैरा गतिर्यस्यासौ—स्वैरगतिः = स्वतन्त्रः, बद्धमिव = निगडितमिव, सुखे सङ्गोऽस्त्यस्य तं—सुखसङ्गिनं = भोगासक्तं, जनं = पौरलोकम्, अवैमि = जानामि । [ मालोपमा, अनुप्रासः, आर्या जातिः ।] ॥१२॥

अनिमित्तम्—अपशकुनम् । 'अम्महे' इति निर्वेदे देशी । वामेतरत् = दक्षिणं, स्त्रीणां दक्षिणाङ्गस्फुरणस्यामङ्गलसूचकत्वात् । जाते ! = पुत्रि !,

**गौतमी**—जाते! प्रतिहतममङ्गलं, सुखानि ते भर्त्तृकुलदेवता वितरन्तु। [ जादे ! पड़िहदं अमङ्गलं, सुहाइं दे होन्तु। ]

( इति परिक्रामन्ति- )

**पुरोधाः**—( राजानं निर्दिश्य- ) भो भोस्तपस्विनः ! असावत्रभवान् वर्णाश्रमाणां रक्षिता प्रागेव मुक्तासनः प्रतिपालयति वः, पश्यतैनम्।

**शार्ङ्गरव**—भो महात्मन्[1]! काममेतदभिनन्दनीयम्; तथापि वयमत्र मध्यस्थाः—

भवन्ति नम्रास्तरवः फलोद्गमै-
नवाम्बुभिर्दूरविलम्बिनो घनाः।
अनुद्धताः सत्पुरुषाः समृद्धिभिः
स्वभाव एवैष परोपकारिणाम् ॥१३॥

प्रतिहतं = दूरीभवतु, भर्तृकुलाधिष्ठाज्यो देवताः = स्थानदेवताः, रक्षिता = पालकः, प्रागेव = भवदागमनात्पूर्वमेव, भक्त्यतिशयात्। मुक्तमासनं येनासौ—मुक्तासनः = परिमुक्तसिंहासनः, प्रतिपालयति = प्रतीक्षते। 'महाब्राह्मणे'ति प्रशस्तब्राह्मणार्थकमत्र, न निन्दायां। 'महात्म'न्निति वा पाठः।

कामम् = अतिशयेन, एतत् = विनयश्रद्धाद्यतिशयत्वादिकम्, अभिनन्दनीयं = स्तुत्यं, मध्यस्थाः = निःस्पृहाः, न प्रशंसावाचमुच्चारयामः। कुत एतदत आह—भवन्तीति। फलानामागमैः—फलागमैः = फलानां समन्तात्प्राप्तिभिः, एतेन समृद्धिपराकाष्ठा सूचिता, नम्राः = अधोमुखाः, विनीताश्च—भवन्ति। नवैरम्बुभिः = जलसम्पदतिरेकिणोऽपि, दूरं विलम्बन्ते तच्छीलाः – दूरविलम्बिनः = नितरां वर्षणशीलाः—नम्राश्च, घनाः = मेघाः भवन्ति। सत्पुरुषाः समृद्धिभिः—अनुद्धताः = विनीता भवन्ति। एष

[1] 'महाब्राह्मण'!

प्रतीहारी—देव ! प्रसन्नमुखा ऋषयो दृश्यन्ते ।

[ देव ! पसण्णमुहा इसीओ दीसन्ति । ]—

राजा—( शकुन्तलां निर्वर्ण्य— ) अये ! अत्र—

केयमवगुण्ठनवती नातिपरिस्फुटशरीरलावण्या ।
मध्ये तपोधनानां किसलयमिव पाण्डुपत्राणाम् ॥१४॥

प्रतीहारी—भर्त्तः ! कुतूहलगर्भः प्रतिहतो न मे तर्कः प्रसरति । दर्शनीया पुनरस्या आकृतिर्लक्ष्यते ।

[ भट्टा ! कुदूहलगब्भो पडिहदो ण मे तक्को पसरदि । दंसणीआ उण से आकिदी लक्खीअदि । ]

राजा—भवतु अनिर्वर्ण्यं खलु परकलत्रम् ।

---

परोपकारिणां = परोपकारपरायणानां, स्वभाव एव, किन्तत्र प्रशंसापरम्पराभिः । [अर्थान्तरन्यास—मालाप्रतिवस्तूपमा—ऽप्रस्तुतप्रशंसा—ऽतिशयोक्ति-काव्यलिङ्गा—नुप्रासालङ्काराणां सङ्करः । वंशस्थं वृत्तम् ] ॥१३॥

प्रसन्नो मुखवर्णो येषान्ते—प्रसन्नमुखवर्णाः = प्रसन्नाकृतिशोभिनः, विस्रब्धं कार्यं येषान्ते = विस्रब्धकार्याः = उदारकार्याः । "विस्रब्धस्तूद्गदे व्यर्थे शान्त-विश्वस्तयोरपी"ति विश्वः ।

केयमिति । पाण्डूनि च तानि पत्राणि तेषां = परिणामपाण्डुराणां-पत्राणां मध्ये, किसलयमिव=पल्लवमिव, तपोधनानां मध्ये—अवगुण्ठनवती=पटप्रावृताङ्गी, अत एव—न अतिपरिस्फुटं शरीरस्य लावण्यं यस्याः—सा=अनतिविभाव्यमानाङ्गलावण्यविभवा, इयं = पुरो विलसन्ती ललना—कास्वित् = का ? [ उपमा, काव्यलिङ्गम्, आर्या । ] ॥१४॥

कुतूहलेन गर्भे—मध्ये—उपहितः, युक्तः = आश्चर्यभराक्रान्तः, तर्कः=विचारः, दर्शनीया = स्पृहणीया, भवतु = मा तावत्, 'अस्तु भवतु निषेधे' इत्यभियुक्ताः । अङ्गीकृतौ वाऽत्र 'भवतु' पदम् । अनिर्वर्णनीयम् = अना-

**शकुन्तला**—( उरसि हस्तं दत्त्वा स्वगतम्— ) हृदय ! किमेवं वेपसे ? आर्य्यपुत्रस्य तादृशभावानुबन्धं स्मृत्वा धीरत्वं तावदवलम्बस्व । [ हिअअ ! किं एव्वं वेवसि । अज्जउत्तस्स तादिसभावाणुबन्धं सुमरिअ धीरत्तणं दाव अवलम्बस्स । ]

**पुरोहितः**—( पुरो गत्वा— ) स्वस्ति देवाय । देव ! एते खलु विधिवदर्च्चितास्तपस्विनः, कश्चिदेतेषु उपाध्यायसन्देशोऽस्ति, तं देवः श्रोतुमर्हति ।

**राजा**—अवहितोऽस्मि ।

**शिष्यौ**—( हस्तमुद्यम्य— ) भो राजन् ! विजयतां भवान् ।

**राजा**—सर्वानभिवादये वः ।

**शिष्यौ**—स्वस्ति देवाय ।

**राजा**—अपि निर्विघ्नं तपः ?

**शिष्यौ**—कुतो धर्म्मक्रियाविघ्नः सतां रक्षितरि त्वयि ।
तपस्तपति धर्म्मांशौ कथमाविर्भविष्यति ॥१५॥

---

शोचनीयम् । परकलत्रं = परपरिग्रहः । उरसि = हृदये, एष स्वभावो नारीणामनिष्टाशङ्कादौ । वेपसे = कम्पसे, अनिष्टाशङ्कयाऽवधीरणाभयाद्वा कम्पः । भावानुबन्धं = स्नेहप्रसरं, धैर्यम् = अकातरत्वम्, उपाध्यायस्य = गुरोः, सन्देशः = वाचिकम् । अवहितः = सावधानः श्रोतुमस्मीत्यर्थः । विघ्नेभ्यो निर्गतं—निर्विघ्नम् = विघ्नरहितम्, अपिरत्र प्रश्ने ।

कुत इति । सतां = सन्मार्गस्थानां, रक्षितरि=पालयितरि, त्वयि सति–धर्मस्य क्रियाणां विघ्नः = धर्मानुष्ठानविघ्नः, कुतः=कथं भवेत् । धर्मांशौ = सूर्यें, तपति सति, तमः=अन्धकारः, कथमाविर्भविष्यति ?=

राजा—(आत्मगतम्-) सर्वथाऽर्थवान् खलु मे राजशब्दः, (प्रकाशम्-) तत्रभवान् कुशली कण्वः ?।

शार्ङ्गरवः—राजन् ! स्वाधीनकुशलाः सिद्धिमन्तः। स भवन्तमनामयप्रश्नपूर्वमिदमाह—।

राजा—किमाज्ञापयति भगवान् ?।

शार्ङ्गरवः—यन्मिथः समयादिमां मदीयां दुहितरं भवानुपयेमे, तन्मया प्रीतिमता युवयोरनुज्ञातम्। कुतः—

त्वमर्हताम[redacted]ग्रसरः स्मृतोऽसि नः,
शकुन्तला मूर्त्तिमतीव सत्क्रिया।
समानयंस्तुल्यगुणं वधूवरं
चिरस्य वाच्यं न गतः प्रजापतिः॥१६॥

---

कथमुद्भविष्यति ? [त्वयि रक्षके जागरूके कथं विघ्नशङ्का, सति सूर्ये न ध्वान्तवार्त्तापीति भावः। [दृष्टान्तः। अर्थापत्तिश्च] ॥१५॥

अर्थवानिति। मुनीनां सन्तोषादिति भावः। सिद्धिमन्तः= स्वाधीनाणिमादिसिद्धयः। स्वाधीनं कुशलं येषान्ते स्वाधीनकुशलाः= स्वतन्त्रसुखाः, आत्मारामा वा। अनामयस्य प्रश्नः पूर्वं यस्मिन् कर्मणि तत्-अनामयप्रश्नपूर्वकम्=आरोग्यप्रश्नपुरस्सरं। क्षत्रियस्यारोग्यप्रश्नार्हत्वात्- "ब्राह्मणं कुशलं पृच्छेद्ब्रह्मबन्धुमनामय"मिति मनूक्तेः। मिथः समयात् = परस्पराभिलापेण, गान्धर्वेण विधानेनेति यावत्। 'गान्धर्वः समयान्मिथ' इत्युक्तेः। उपयेमे = परिणीतवान्। प्रीतिमता = प्रसन्नेन, मया—अनुज्ञातं = स्वीकृतं, युवयोः = भवतोः, तत् = स्वेच्छाचरितमुपयमनं,

त्वमर्हतामिति। त्वम्—अर्हतां = पूज्यानां, प्राग्रहरः = मुख्यतमः, नः = अस्माकं, स्मृतोऽसि, मतोऽसि। "पराध्योग्रयाः प्राग्रहरा" इत्यमरः।

तदिदानीमापन्नसत्त्वेयं गृह्यतां सहधर्म्मचरणायेति ।

**गौतमी**—भद्रमुख ! किमपि वक्तुकामास्मि, न मे वचनावसरोऽस्ति । [भद्दमुह ! किम्पि वत्तुकामह्मि, ण मे वअणावसरो अत्थि ।]

**राजा**—आर्य्ये ! कथ्यताम्—

**गौतमी**—

नापेक्षितो गुरुजनोऽनया, त्वयापि न पृष्टोबन्धुजनः ।
एकैकस्य चरिते भणामि किमेकैकम् ॥ १७ ॥

---

शकुन्तला च—मूर्तिमती = शरीरधारिणी, सक्रियेव = सती क्रियेव, सकलपूजनीयेति यावत्, तुल्या गुणा यस्य तत्—तुल्यगुणं, वधूश्च वरश्चानयोः समाहारः—वधूवरं, समानयन् = सम्यग् योजयन्, प्रजापतिः=धाता, चिरस्य = चिरप्ररूढं, "चिराय चिररात्राय चिरस्याद्याः चिरार्थकाः" इत्यमरः। वाच्यम् = अपवादं, "वाच्यं वक्तव्यमित्येतौ वर्त्तेते प्रतिपादने। वचोर्हे कुत्सिते हीने दूषणेऽभिधयोदिते" इति धरणिः। न गतः = शकुन्तलादुष्यन्तं योग्यं वधूवरं घटयन् विधिश्चिररूढमसमानशीलवधूवरमेलनव्यसनित्वरूपमपवादं मार्जितवानिति भावः। [समालङ्कारः, काव्यलिङ्गम्, उत्प्रेक्षाऽनुप्रासौ, वंशस्थं वृत्तम्] ॥१६॥

आपन्नं सत्त्वं यां–सा–आपन्नसत्त्वा=गर्भिणी, "आपन्नसत्त्वा स्याद् गुर्विण्यन्तर्वत्नी च गर्भिणी" इत्यमरः। धर्मस्य चरणाय = आश्रमधर्मपालनाय। सपत्नीकस्यैव धर्मेऽधिकारात्। भद्राणां मुखमिव मुखं, तत्सम्बुद्धौ—भद्रमुख ! = सज्जनशिरोमणे ! भद्रं मुखे यस्येति वा। वचनस्य वक्तव्यस्य–अवसरः = प्रस्तावः, "प्रस्तावः स्यादवसरः" इत्यमरः।

नापेक्षित इति। अनया=शकुन्तलया, गुरुजनः=कण्वादिः नापेक्षितः=न पृष्टः, त्वयाऽपि बन्धुजनः=बन्धुवर्गः, न पृष्टः, एकैकस्य = परस्परस्य, चरिते = आचरिते, एकैकं=परस्परं भवन्तौ, किं भणामि, उभयोरपराधे नैक उपालभ्य इत्याशयः, अतो नोचितं कृतवानसीति ध्वन्यते [गाथा] ॥१८॥

[णावेक्खिदो गुरुअणो, इमिए, तुइ पुच्छिदो ण बन्धुजणो। एक्कक्कस्सअ चरिए भणामि किं एक्कमेक्कस्स ॥१७॥]

**शकुन्तला**—( आत्मगतम्— ) किन्नु, खलु आर्य्यपुत्रो भणिष्यति । [ किण्णु क्खु अज्जउत्तो भणिस्सदि । ]

**राजा**—( साशङ्कमाकर्ण्य— ) अये ! किमिदमुपन्यस्तम् ?।

**शकुन्तला**—( आत्मगतम्— ) हा धिक् हा धिक् ! 'सावलेपोऽस्य वचनविन्यासः । [ हद्धी हद्धा ! सावलेवो से वअणोवण्णासो । ]

**शार्ङ्गरवः**—किं नाम,—'किमिदमुपन्यस्त'मिति ? । ननु भवन्त एव सुतरां लोकवृत्तान्तनिष्णाताः—

सतीमपि ज्ञातिकुलैकसंश्रयां
जनोऽन्यथा भर्त्तृमतीं विशङ्कते ।
अतः समीपे परिणेतुरिष्यते
प्रियाऽप्रिया च प्रमदा स्वबन्धुभिः ॥१८॥

---

उपन्यस्तम्=उक्तं, पावकः=अग्निसमो दाहकत्वात् । वचनोपन्यासः = वाग्विन्यासः। 'सावलेप' इति पाठान्तरे·साभिमान इत्यर्थः। किं नाम=इति =इत्येवं किमुच्यते, लोकानां वृत्तान्तेषु निष्णाताः=लोकव्यवहारपटवः। "निष्णातो निपुणेऽपि चे"त्यमरः। लोकव्यवहारमेव निर्दिशति—सतीमपीति। यतः=सधवां, ज्ञातिकुलमेकः संश्रयो यस्याः—सा तां—ज्ञातिकुलैकसंश्रयां= पितृगृहमात्रवासशीलां ['ज्ञातिः सगोत्रे पितरी'ति विश्वः। ] सतीमपि= पतिव्रतामपि, प्रमदां—जनः = लोकः, अन्यथा अन्यप्रकारेण=असतीत्वेनेति यावत् ,विशङ्कते। अतः=कारणादस्मात्, प्रिया, अप्रिया च—भर्त्तुरिति शेषः। प्रमदा = कामिनी, स्वबन्धुभिः=वधूबन्धुभिः, परिणेतुरेव=भर्त्तुरेव समीपे

---

१ "पावकोऽस्य"

राजा—किमत्रभवती मया परिणीतपूर्वा ?।

शकुन्तला—(सविषादमात्मगतम्—) हृदय ! [1]साम्प्रतं ते आशङ्का। [ हिअअ ! संपदं संवुत्ता दे आसङ्का ]

शार्ङ्गरवः—

किं कृतकार्य्यद्वेषो धर्म्मं प्रति विमुखता कृतावज्ञा।

राजा—कुतोऽयमसत्कल्पनाप्रसङ्गः।

शार्ङ्गरवः—( सक्रोधम्— )

मूर्च्छन्त्यमी विकाराः, प्रायेणैश्वर्य्यमत्तानाम् ॥१६॥

इष्यते = वाञ्छयते। अतो युवत्याः खल्वस्या भवदन्तिके प्रापणमेव युक्तमिति भावः। [अप्रस्तुतप्रशंसा, काव्यलिङ्गमनुप्रासः, अर्थविशेषणं नाट्यालङ्कारः, "उक्तस्यार्थस्य यत्तु स्यादुत्कीर्तनमनेकधा। उपालम्भस्वरूपेण तत्स्यादर्थविशेषणम्" इत्युक्तेः। वंशस्थं वृत्तम् ] ॥१८॥

पूर्वं परिणीता—परिणीतपूर्वा = कृतोद्वाहा, किम् ?—इति प्रश्नः। न मया स्मर्यत इत्याशयः। साम्प्रतं = युक्ता, यदाशङ्कितममङ्गलं, तदुपस्थितमिति भावः 'आतङ्क' इति पाठान्तरे भयमिति तदर्थः। 'संवृत्ते'ति च क्वचित्पाठः। तथ्या जातेत्यर्थः।

किमिति। कृते = निष्पादिते कार्ये = गान्धर्वविवाहे, द्वेषः = अरुचिः, किम् ? धर्मं प्रति = धर्माचरणं प्रति, विमुखता=वैमुख्यं—किम् ? धर्मसम्पादनायेमां परिणीयेदानीं धर्मार्जनवैमुख्यं जातं किमित्याशयः। अवज्ञा = अवधीरणा, कृता किमस्माकम् ?, अवहेलनमस्माकं क्रियते किमित्याशयः। असत्याः कल्पनायाः प्रसङ्गः—असत्कल्पनाप्रसङ्गः = अनुचितोद्भावनावसरः, कुतोऽयमुपालम्भ इत्याशयः। उत्तरार्धेन तदुत्तरमाह—मूर्च्छन्त्यमीति। अमी = कृतकार्यद्वेषावज्ञादयः, विकाराः = दोषाः,

१ "साम्प्रतं संवृत्ता"।

राजा—विशेषेणाधिक्षिप्तोऽस्मि ।

गौतमी—( शकुन्तलां प्रति— ) जाते ! मुहूर्त्तकं मा लज्जस्व, अपनेष्यामि तावत्तेऽवगुण्ठनम्, ततो भर्त्ता त्वामभिज्ञास्यति ।

( इति तथा करोति— )

[ जादे ! मुहुत्तअं मा लज्ज, अवणइस्सं दाव दे अवगुण्ठणं, तदो भट्टा तुमं अहिजाणिस्सदि । ]

राजा—( शकुन्तलां निर्वर्ण्य, स्वगतम्— )

इदमुपनतमेवं रूपमक्लिष्टकान्ति
प्रथमपरिगृहीतं स्यान्नवेत्यध्यवस्यन् ।
भ्रमर इव निशान्ते कुन्दमन्तस्तुषारं
न खलु सपदि भोक्तुं नापि शक्नोमि मोक्तुम् ॥२०॥

---

ऐश्वर्येण मत्तानाम् = प्रभुत्वमदोन्मत्तानां, प्रायेण = बहुलं, मूर्च्छन्ति = उद्भवन्ति, वर्धन्ते । ऐश्वर्येण मत्त एव भवानस्मदवज्ञां करोतीत्याशयः । [ अर्थान्तरन्यासः, "संरम्भवचनप्रायं तोटकम्"—इत्युक्तेस्तोटकं गर्भसन्ध्यङ्गम्, आर्या जातिः । ] ॥१९॥

विशेषेण = अत्यन्तम्, अधिक्षिप्तः = तिरस्कृतः, अत आरभ्य विमर्शसन्धिः पञ्चाङ्कसमाप्तिं यावत् । मुहूर्त्तं = किञ्चित्कालम्, आपत्कालेऽस्मिन्निति यावत् । अवगुण्ठनम्=मुखावरणं ['घूँघट' बुर्का' इति भाषा ।] अपनेष्यामि= दूरीकरोमि । तथा करोति = अवगुण्ठनमपनयति । निर्वर्ण्य = विलोक्य,

इदमिति । अन्तस्तुषारो यस्य तत्–अन्तस्तुषारं = तुषारासारजडीभूतं, कुन्दं—माघ्यं, निशान्ते = प्रभाते, भ्रमर इव = रोलम्ब इव, इदं=पुरोऽवर्त्ति, एवम् = दैवात्, उपनतं = प्राप्तम्, अक्लिष्टा कान्तिर्यस्य तत् अक्लिष्टकान्ति= उज्ज्वलं, रूपम् = आकृतिः, प्रथमं परिगृहीतं = गान्धर्वेण विधिना स्वीकृतं– दृष्टं वा स्यात् = भवेत्, न वा = न परिगृहीतं वा, इति = इत्थम्, अध्यव-

**प्रतीहारी**—( स्वगतम्— ) [1]अम्मो ! धर्म्मापेक्षिता भर्त्तुः । ईदृशं नाम सुखोपनतं स्त्रीरत्नं प्रेक्ष्य कोऽन्यो विचारयति ।

[ अम्मो ! धम्मावेक्खिदा भट्टिणो । ईदिसं णाम सुहोवणदं इत्थीरअणं पेक्खिअ को अणो विआरेदि ]

**शार्ङ्गरवः**—भो राजन् ! किमिति जोषमास्यते ? ।

**राजा**—भोस्तपस्विनः ! चिन्तयन्नपि न खलु स्वीकरणमत्रभवत्याः स्मरामि, तत्कथमिमामभिव्यक्तसत्त्वलक्षणामात्मानं क्षेत्रिणं मन्यमानः प्रतिपत्स्ये ? ।

**शकुन्तला**—( स्वगतम्— ) हा धिक् हा धिक् ! कथं परिणय एव सन्देहः, भग्ना इदानीं दूरारोहिणी आशालता ।

[ हद्धी हद्धी ! कधं परिणए ज्जेव सन्देहो । भग्गा दाणिं दूरारोहिणी आसालदा । ]

---

यन् = वितर्कयन्, सपदि = सहसा, न भोक्तुं शक्नोमि, न च मोक्तुं = त्यक्तुं = शक्नोमि, मयेयं पूर्वं कदाचिदुपभुक्ता नवेति विचारयन्—तुषारनद्धं कुन्दं भ्रमर इव परिभोक्तुं त्यक्तुं वा न शक्नोमीत्याशयः [ उपमा—सन्देहालङ्कारौ । संशयाख्यं नाट्यलक्षणञ्च, मालिनी वृत्तम् ] ॥२०॥

'अम्महे' इति हर्षे, धर्ममपेक्षते तच्छीलस्तस्य भावो धर्मापेक्षिता = धर्मप्रवणता, सुखेन—उपनतं = प्राप्तं, जोषमास्यते = तूष्णीं स्थीयते । स्वीकरणं = गान्धर्वविधिनाऽङ्गीकारं, अभिव्यक्तं सत्त्वस्य लक्षणं यस्याः सा तां प्रति = स्फुटगर्भचिह्नां प्रति, भार्यारूपं—क्षेत्रमस्यास्तीति क्षेत्री, तं क्षेत्रिणं, गर्भिण्या अद्य स्वीकारेऽस्यामुत्पन्नः पुत्रो मे क्षेत्रजः स्यान्नौरसः, यस्य पत्न्यामन्यो गर्भं धत्ते, स क्षेत्रीत्युच्यते । यथा पाण्डवाः पाण्डोः क्षेत्रजाः पुत्राः । प्रतिपत्स्ये = ग्रहीष्यामि । परिणये = विवाहे, दूरमारोहते

---

१ 'अम्महे' पा० ।

शार्ङ्गरवः—मा तावत्—

कृतावमर्शामनुमन्यमानः
सुतां त्वया नाम मुनिर्विमान्यः ।
मुष्टं प्रतिग्राहयता स्वमर्थं
पात्रीकृतो दस्युरिवासि येन ॥२१॥

शारद्वतः—शार्ङ्गरव ! विरम त्वमिदानीम्, शकुन्तले ! वक्तव्यमुक्तमस्माभिः, सोऽयमत्रभवानेवमाह, दीयतामस्मै प्रत्ययप्रतिवचनम् ।

शकुन्तला—( स्वगतम्- ) इदमवस्थान्तरं गते तादृशेऽ

---

तच्छीला—दूरारोहिणी = अतिभूमिं गता–महिषी भूत्वा चक्रवर्तिनं तनयं प्रसोष्ये–इत्यादिरूपा, आशैव लता = आशातन्तुः, भग्ना = छिन्ना ।

'मा तावत् = मैवं कुरु। कृतेति। मुष्टम् = अपहृतम्, स्वम्—अर्थम्= आत्मनो धनं, प्रतिग्राहयता = प्रत्यर्पयता, येन = मुनिना कण्वेन, दस्युरिव= चोर इव, पात्रीकृतोऽसि = पात्रतां नीतोऽसि, कृतोऽवमर्षो यस्याः सा—तां कृतावमर्षां = कृतोपभोगां, विलोभ्य खण्डितामपि सुतां = शकुन्तलाम्, अनुमन्यमानः=अनुमोदमानः, नाम प्रसिद्धौ। असौ मुनिः, त्वया नैव विमान्यः= नावमाननीयः ।

स्वानुपस्थितौ सरलां दुहितरं शकुन्तलां परिणीय खण्डयितुस्ते दस्योरिवाशिष्टव्यवहारमविगणय्य—चौरायैव चोरितं वस्तु प्रयच्छन्निव—स्वदुहितरं ददन्मुनिस्त्वया न तिरस्करणीयः, अन्यथा क्रुद्धः काल इव त्वां स विलयं नेष्यतीति भावः। [सूक्ष्मो विषमश्चालङ्कारः। उपमाऽनुप्रासौ, उपजातिः]॥ २१॥

एवमाह = न मया परिणीतेयमित्याह, प्रत्यययुक्तं प्रतिवचनं = साभिज्ञानमुत्तरं। तादृशे = परां काष्ठां गते, अनुरागे = स्नेहे, इदमवस्थान्तरं =

नुरागे किं वा स्मारितेन, अथवा आत्मेदानीं शोधनीयो भवे-
दिति किञ्चिद्वदिष्यामि। ( प्रकाशम्- ) आर्य्यपुत्र!—" [इत्यर्द्धोक्ते-
अथवा संशयित इदानीं परिणये नैष समुदाचारः] पौरव ! न युक्तं नाम
तव पुरा आश्रमपदे सद्भावोत्तानहृदयमिमं जनं तथा समयपूर्वकं

---

अभिज्ञानगम्यमवस्थाविशेषं। स्मारितेन = स्मरणोत्पादनायासेन, आत्मेदानीं
मे शोचनीयः = शोच्यतां गतः, इत्येतद्व्यवसितं = मयाऽवधारितम्। 'शोध-
नीय' इति पाठे—निष्कलङ्कतां प्रापणीय इत्यर्थः। संशयितेति। आर्यपुत्रेति
सम्बोधनं हि पत्यौ प्रयुज्यते, अयं च मां स्वभार्यात्वेन न स्वीकुरुते, अतः—
संशयिते = संशयापन्ने परिणये = विवाहे, एष=आर्यपुत्रेति प्रयोगः। न समु-
दाचारः = न युक्तः। आर्यपुत्रेति चाभ्यासवशादुक्त्वाऽर्धं एव तन्निपिध्य
पौरवेति सम्बोधेन वक्तुमारेभे—इति भावः।

अर्धोक्त इति। आर्यपुत्रेति सम्बोधनमात्रमुक्त्वा मनसि विमृशति-
अथवेति। संशयिते परिणये = विवाहेऽपि यदि संशयस्तदा, एष=आर्य-
पुत्रेति सम्बोधनप्रयोगः—समुदाचारः = लोकरीतिविदनुमोदितः, न =
नैव, परिणीता हि प्रमदा पतिमार्यपुत्रेति भाषते, तद्यदि परिणयेऽपि नाम
सन्देहस्तदैवं सम्बोधनं न युज्यते—इति भावः।

आर्यपुत्रेति—सम्बोधनमनुचितमिति—सम्बोधनान्तरं प्रयोजयन्ती
वक्तव्यमारभते—पौरवेति। पुरुवंशसम्भवेति तदर्थः, तन्न युक्तमनार्य-
मार्गानुसारणं भवत ईदृशकुलोत्पन्नस्यैवमिति भावः। नामेति कुत्सायां,
"नाम प्राकाश्यसम्भाव्यक्रोधोपगमकुत्सने" इत्यमरः। पुरा = पूर्वम् =
आश्रमपदे = तपोवने, सद्भावेनोत्तानं हृदयं यस्य तं—सद्भावोत्तान-
हृदयं = प्रणयातिशयपेशलविमलमानसम्, इमं जनं = मां तपस्विनीं,
समयपूर्वकं = शपथपूर्वकं, नानाविधाश्वासनपूर्वकञ्च, "परिग्रहबहुत्वेऽपि द्वे
प्रतिष्ठे कुलस्य मे"—इत्यादिप्रतिज्ञापर्वकमिति यावत्, सम्भाव्य =

सम्भाव्य साम्प्रतमीदृशैरक्षरैः प्रत्याख्यातुम् ।

[ इमं अवत्थन्तरं गदे तादिसे अणुराए किंवा सुमराविदेण । अधवा अत्ता दाणिं मे सोधणीओ होदु त्ति किंव्वि वदिस्सं । अज्जउत्त ! । अधवा संसइदे दाणिं परिणहे ण एसो समुदाचारो ! पोरव ! ण जुत्तं णाम तुह पुरा अस्समपदे सब्भावुत्ताणहिअअं इमं जणं तधा समअपुव्वअं सम्भाविअ सम्पदं ईदिसेहिं अक्खरेहिं पच्चाक्खादुं ।

राजा—( कर्णौ पिधाय- ) शान्तं पापम् ।—

व्यपदेशमाविलयितुं किमीहसे माञ्च नाम पातयितुम् ।
कूलङ्कषेव सिन्धुः प्रसन्नमोघं तटतरुञ्च ॥२२॥

---

स्वीकृत्य, 'प्रतार्येति पाठे-वञ्चयित्वेत्यर्थः । ईदृशैरक्षरैः = पूर्वोक्तैः—किमत्र भवती मया परिणीतपूर्वेत्यादिभिः, प्रत्याख्यातुं = निराकर्तुं, न युक्तमिति सम्बन्धः, 'युक्तं नामे'ति पाठे–युक्तं ? नैव युक्तमिति च काक्वा तदर्थो बोध्यः। शान्तं शान्तं = शिव ! शिव ! मिथ्यैतत्—“अलीके शान्तमव्यय”मिति विश्वः । शान्तं पापमिति पाठे-पापं = मिथ्या वचः, शान्तं भवतु, विरम्यतामिति यावत् ।

व्यपदेशमिति । कूलङ्कषतीति कूलङ्कषा = तटपातनप्रवणा, सिन्धुः = नदी, प्रसन्नं स्वच्छम् ओघं = प्रवाहम्, “ओघो वेगे जलस्य चे”ति मेदिनी । आविलयितुं = मलिनीकर्तुं, तटतरुं = रोधोवृक्षञ्च, पातयितुं = उन्मूलयितुं, यथा ईहते = चेष्टते, तथा—व्यपदिश्यतेऽनेनासौ व्यपदेशस्तं = पुरोः कुलम्, आविलयितुं = दूषयितुं, माञ्च = दुष्यन्तञ्च, पातयितुम् = पतितं कर्तुम्—, ईहसे किम् ? इच्छसि किम् ?। अतो मैवं वद, नाहं पापं कर्तुमुत्सहे. पवित्रं च नः कुलमिति भावः । [ कुलसंघर्षणप्रवणा नदी प्रसन्नं जलं यथा कलुषयति, तटतरुं च पातयति—तथा त्वमित्युपमा, समुच्चयः, आर्या जातिः ] ॥ २२ ॥

**शकुन्तला**—भवतु, यदि परमार्थतः परपरिग्रहशङ्किना त्वयैवं प्रवृत्तम्, तदभिज्ञानेन केनापि तवाशङ्कामपनेष्यामि ।

[ भोदु, जइ परमत्थदो परपरिग्गहसङ्किणा तुए एव्वं वत्तुं पउत्तं, ता अहिण्णाणेण केण वि तुह आसङ्कं अवणइस्सं । ]

**राजा**—प्रथमः कल्पः ।

**शकुन्तला**—( मुद्रास्थानं परामृश्य- ) हा धिक् हा धिक् ! अङ्गुलीयकशून्या मे अङ्गुली । (-इति सविषादं गौतमीमुखमीक्षते ।)

[ हद्धी हद्धी ! अङ्गुलीअअसुण्णा मे अङ्गुली । ]

**गौतमी**—नूनं शक्रावतारे शचीतीर्थोदकं वन्दमानायाः प्रभ्रष्टमङ्गुलीयकम् ।

[ नूणं दे सक्कावदारे सचीतीत्थोदअं वन्दमाणाए पब्भट्टं अङ्गुलीअअं ।]

**राजा**—( सस्मितम्- ) इदं तत्—"प्रत्युत्पन्नमति स्त्रैणम् —"इति यदुच्यते ।

**शकुन्तला**—अत्र तावत् विधिना दर्शितं प्रभुत्वम् । अपरं ते कथयिष्यामि ।

---

भवतु = अलं निन्दया, यदि-परमार्थतः = वस्तुतः, परस्य परिग्रहं शङ्कते तेन—परपरिग्रहशङ्किना = परस्य पत्नीयमिति शङ्काकुलेन, एवं वक्तुं प्रवृत्तम् = एवमभिहितं, तदा अन्येन अभिज्ञानेन = विश्वासोत्पादकेनानेनाङ्गुलीयकेन, तवाशङ्कामपनेष्यामीति सम्बन्धः । उदारः = उचितः, कल्पः = मार्गः, मुद्रास्थानम्=अङ्गुलीयकनिवेशस्थानमङ्गुलिम्, परामृश्य= प्रेक्ष्य, शक्रावताराभ्यन्तरे = तन्नाम्नि प्रदेशे, शचीतीर्थं, = सरोवरविशेषः, प्रभ्रष्टं = गलितम् । स्त्रैणं = स्त्रीणां समूहः, प्रत्युत्पन्नमति = तात्कालिकप्रतिभाशालि-भवति इति यदुच्यते = इत्थं यल्लोकप्रसिद्धम्—इदं तत् = प्रत्युत्पन्नमतित्वं ("हाजिरजबाबी") अत्र = अङ्गुलीयकदर्शने, विधिना = अदृष्टेन, प्रभुत्वं = स्वसामर्थ्यं, भाग्यवैपरीत्यात्तत्पतितमिति भावः अपरं =

[ एत्थ दाव विहिणा दंसिदं पंडत्तणम् । अवरं दे कधइस्सं । ]

राजा—श्रोतव्यमिदानीं संवृत्तम् ।

शकुन्तला—ननु एकदिवसे वेतसलतामण्डपे नलिनीपत्रभाजनगतमुदकं तव हस्ते सन्निहितमासीत् । [ णं एक्कदिअहे वेदसलदामण्डवे णलिणीवत्तभाअणगदं उदअं तुह हत्थे सण्णिहिदं आसी । ]

राजा—शृणुमस्तावत् ।

शकुन्तला—तत्क्षणं स मे पुत्रकृतको दीर्घापाङ्गो नाम मृगपोतक उपस्थितः । ततस्त्वयाऽयं तावत् प्रथमं पिबत्विति-अनुकम्पिना उपच्छन्दित उदकेन । न पुनः सोऽपरिचितस्य ते हस्तादुदकमुपगतः पातुम् । ततस्तस्मिन्नेवोदके मया गृहीते कृतस्तेन प्रणयः । तदा त्वमित्थं प्रहसितोऽसि—"सर्वः सगन्धेषु विश्वसिति, यतो द्वावेव युवामारण्यकौ" इति ।

---

प्रत्यभिज्ञानान्तरम्, संवृत्तं = जातं, श्रोतुमनिच्छन्नपि श्रोष्याम्येव गत्यन्तराभावादित्युद्वेगसूचकं वच इदम् । नन्विति—सम्बोधने । नलिनीपत्रभाजनं = नलिनीपलाशपुटकं, पुत्रकृतकः = पुत्रवत्प्रतिपालितः, मृगपोतकः = हरिणशिशुः अयं = हरिणशिशुः, प्रथमं = मत्तोऽपि पूर्वम्, अनुकम्पिना = दयालुना, उपच्छन्दितः = अभ्यर्थितः, जलं दर्शयित्वाऽऽहूत इति यावत्—, पातुमुपगतः = जलपानायागतः, तस्मिन्नेव = पुटकपात्रस्थिते, प्रणयः = पानादरः, 'हस्ताभ्यास'मिति पाठे-त्वद्धस्तसन्निधावित्यर्थः । तदा त्वमित्थं प्रहसितः = उपहासमकार्षीः, यत्—समानो गन्धो येषान्ते सगन्धास्तेपु-सगन्धेषु = स्ववर्गेषु, "गन्धो गन्धक आमोदे लेशे सम्बन्धगर्वयो"रिति विश्वः । द्वावेव युवां = शकुन्तलाहरिणौ, अरण्ये भावौ—आरण्यकौ = वनवासिनौ, आदानं नाम विमर्शसन्ध्यङ्गं—"कार्यसंग्रह आदान"मिति दर्पणोक्तेः । "भूतकार्याख्यानमुत्कीर्त्तन" मित्युक्तेरुत्कीर्त्तनं नाट्याङ्गञ्च ।

[ तक्खणं सो मे पुत्तकिदओ दीहापङ्गो णाम मिअपोदओ उवट्ठिदो । (अ)दो तुए अअं दाव पढमं पिअदु त्ति अणुकम्पिणा उवच्छन्दिदो उदएण । (ण) उण सो अपरिचिदस्स दे हत्थादो उदअं उवगतो पादुं । पच्छा तस्सिं (ज्जे)व उदए मए गहिदे किदो तेण पणओ । एत्थन्तरे विहसिअ तुए भणिदं, सब्बो सगणे वीससदि, जदो दुवे वि तुह्मे आरणआओ त्ति । ]

राजा—आभिस्तावदात्मकार्य्यप्रवर्त्तिनोभिर्मधुराभिरनृतवा-(ग्)भिराकृष्यन्ते विषयिणः ।

गौतमी—महाभाग ! नार्हसि एवं मन्त्रयितुम् । तपोवन-संवर्द्धितः खल्वयं जनोऽनभिज्ञः कैतवस्य । [ महाभाअ ! णारिहसि एव्वं मन्तिदुं । तवोवणसंवड्ढिदो क्खु अअं जणो अणभिण्णो कइतवस्स । ]

राजा—अयि तापसवृद्धे !

स्त्रीणामशिक्षितपटुत्वममानुषीणां
संदृश्यते, किमुत याः परिबोधवत्यः ।
प्रागन्तरिक्षगमनात् स्वमपत्यजात-
मन्यद्विजैः परभृताः किल पोषयन्ति ॥२३॥

---

आभिः = एवंविधाभिः, आत्मकार्यप्रवत्तिनीभिः = स्वकार्यसाधि-काभिः, अनृताभिः वाग्भिः = मिथ्यावाग्भिः, विषयिणः = कामिनः, आकृ-ष्यन्ते, = वशीक्रियन्ते, न वयमिति भावः । एवं मन्त्रयितुम् = इत्थं कटु भाषितुं । तपोवने संवर्धितः पालितः—तपोवनसंवर्धितः । अयं जनः = शकुन्तलेयम् । अनभिज्ञः = अविदितः, कैतवस्य=कपटस्य, मिथ्याकल्पना-रूपस्य । तापसी चासौ वृद्धा च तत्सम्बुद्धौ—तापसवृद्धे ! =वृद्धतापसिके !

स्त्रीणामिति । स्त्रीणां मध्ये—अमानुषीषु = मनुष्यजातिव्यतिरि-क्तास्वपि, अशिक्षितञ्च तत्पटुत्वञ्च—अशिक्षितपटुत्वम् = उपदेशं विनाऽपि

शकुन्तला—( सरोषम्- ) अनार्य्य ! आत्मनो हृदयानुमानेन किल सर्वं प्रेक्षसे। को नामान्यो धर्म्मकञ्चुकव्यपदेशिनस्तृणच्छन्नकूपोपमस्य तवानुकारीभविष्यति[1]।

[ अणज्ज ! अत्तणो हिअआणुमाणेण किल सव्वं पेक्खसि। को णाम अण्णो धम्मकञ्चुअव्ववदेसिणो तिणच्छण्णकूवोवमस्स तुह अणुआरी भविस्सदि। ]

गूढवञ्चनाचातुर्यं, संदृश्यते = विलोक्यते, याः—प्रतिबोधोऽस्त्यासां ताः—प्रतिबोधवत्यः = वागादिव्यवहारकुशलाः, ताः किमुत ?—तासां कौशलं किं वक्तव्यम् ? खलु = यतः—अन्तरिक्षगमनात्=आकाशगमनशक्तिलाभात्, प्राक् = पूर्वं यावत्, स्वम् = आत्मीयम्, अपत्यजातम् = अपत्यसमूहं—"जातं जात्योघजन्म"स्विति विश्वः। अन्यैः द्विजैः = काककुलैः, परि = सर्वतः, परभृताः = कोकिलाः, पोषयन्ति = पालयन्ति। कोकिलाः स्वापत्यानि काककुलायेषु निक्षिपन्ति, काकाश्च तानि स्वापत्यबुद्ध्या पालयन्तीति प्रसिद्धिः। तदेवं—वाग्बुद्धिव्यवहारशून्या अपि स्त्रियो यदि कपटकुशलाः स्युः-किं वक्तव्यं तदा-बुद्धिमतीषु कामिनीषु कपटकौशलमिति—राज्ञा शकुन्तलाऽधिक्षिप्ता। [ व्यतिरेकाप्रस्तुतप्रशंसाऽर्थान्तरन्यासानुप्रासाः, हेत्ववधारणं विमर्शसन्ध्यङ्गञ्च—"निश्चयो हेतुनाऽर्थस्य मतं हेत्ववधारण"-मिति सुधाकरोक्तेः। 'वसन्ततिलका'। ] ॥ २३ ॥

अनार्य! = पापबुद्धे! हृदयादनुमानन्तेन = स्वहृदयं दृष्टान्तीकृत्य ततोऽनुमानेन, "सर्वस्यैव स्वान्तं मलिनं, हृदयत्वात्, मद्धृदयवदित्यनुमानेन सर्वोऽपि कुटिलाशयः सर्वमपि जनं कुटिलमेव पश्यतीति प्रसिद्धमेव, सर्वं = लोकं वञ्चकमेव प्रेक्षसे = पश्यसि। इदानीं = सम्प्रति, स्वकार्ये निर्वृत्ते सति। धर्म एव कञ्चुकस्तं प्रविशति तच्छीलस्य = अहिर्धार्मिकस्य, 'मया परभार्या नाङ्गीक्रियते' इति दम्भपरायणस्य, तृणैश्छन्नेन कूपेनोपमा यस्य तस्य—तृणच्छन्नकूपोपमस्य = तृणावृतकूपसदृशस्य, तव—अनुकृतिं =

१ 'तवानुकृतिं प्रतिपत्स्यते'

राजा—( आत्मगतम्— ) वनवासादविभ्रमः पुनरत्रभवत्याः कोपो लक्ष्यते, तथाहि—

न तिर्य्यगवलोकितं भवति चक्षुरालोहितं,
वचोऽतिपरुषाक्षरं न च पदेषु सङ्गच्छते।
हिमार्त्त इव वेपते सकल एव बिम्बाधरः,
प्रकामविनते भ्रुवौ युगपदेव भेदं गते ॥२४॥

नुकरणं, कोऽन्यः = त्वदतिरिक्तः, प्रतिपत्स्यते = विधास्यति। त्वमेव-वञ्चको नाहं त्वदनुकारिणीति भावः। 'धर्मकञ्चुकव्यपदेशिनोऽनुकारी' इति पाठे—धर्मकञ्चुकेन व्यपदेष्टुं शीलस्य दम्भिकशिरोमणेस्तव सदृशः कोऽन्यो भवेत्, न कोऽपि भवेदित्यर्थः।

वनवासात् = तपोवननिवासाद्धेतोः। अविभ्रमः = अव्याकुलः, अविकृतः, परिपूर्ण इति यावत्, नेति। तिर्यक्—अवलोकितं न = कुटिलं निरीक्षणमस्या नैव, चक्षुरालोहितम् = समन्ताद्रक्तवर्णं—वर्त्तते। परुषाण्यक्षराणि यत्र तत्—परुषाक्षरं=क्रूरमपि; वचः=वाक्यम्, पदेषु न संगच्छते= न संगतं भवति। बिम्बमिवाधरः—बिम्बाधरः = अधरोष्ठः, हिमार्त्त इव=तुषारपीडित इव, सकल एव = समग्र एव, वेपते = कम्पते। प्रकामं विनते = नम्रे, धनुस्तुल्ये, भ्रुवौ—युगपदेव = एककालमेव, सहसैव वा, भेदं = भङ्गं, गते, = प्राप्ते।

यश्च कृत्रिमेण क्रोधेन व्यवहरति तस्य लोचनं तिर्यक्कम्पते, वचो परुषं भवति, अधरश्च किञ्चिदेव कम्पते, भ्रुकुटिश्च नात्यन्तं विच्छिन्ना भवति। इत्थञ्च मिथ्या प्रदर्श्यमानः क्रोधो न यथावद्विजृम्भते, अस्यास्तु वनवासनिर्भयत्वेस्तपस्विन्याः क्रोधो निरर्गल इव प्रकामं समुल्लसतीत्याशयः। नास्या राजानं मामाक्रोशन्त्या अपि मनाक् सम्भ्रमलेश इति यावत्।

[ उत्प्रेक्षोपमे, स्वभावोक्तिरनुप्रासश्च। पृथ्वी वृत्तम्। ] ॥२४॥

अपि [1]च सन्दिग्धबुद्धिं मामधिकृत्याकैतव इवास्याः कोपः सम्भाव्यते, तथाह्यनया—

[2]मय्येवमस्मरणदारुणचित्तवृत्तौ
वृत्तं रहःप्रणयमप्रतिपद्यमाने ।
भेदाद् भ्रुवोः कुटिलयोरतिलोहिताक्ष्या
भग्नं शरासनमिवातिरुषा स्मरस्य ॥२५॥

(प्रकाशम्—) भद्रे ! प्रथितं दुष्यन्तस्य चरितं, प्रजास्वपीदं न दृश्यते ।

---

सन्दिग्धा बुद्धिर्यस्य तं—सन्दिग्धबुद्धिं, = संशयाकुलं, माम्—अधिकृत्य = विषयीकृत्य, अकैतवः = अकृत्रिमः—इव अस्याः कोपः—सम्भाव्यते = उत्प्रेक्ष्यते । अनयेति श्लोकेन सम्बध्यते—,

मय्येवमिति । एवम्—इत्थम्—अस्मरणेन दारुणा चित्तवृत्तिर्यस्य तस्मिन्—अस्मरणदारुणचित्तवृत्तौ = विस्मरणदारुणमनसि, अत एव—रहः = एकान्ते, वृत्तं = सम्पन्नं, प्रणयं = स्नेहम्, अप्रतिपद्यमाने = अस्वीकुर्वाणे, मयि सति, मयि विषये वा, अत्यन्तं रुड् यस्याः सा तया—अतिरुषा=अतिक्रोधया, अत एव अतिलोहिते अक्षिणी यस्याः सा—तया—अतिलोहिताक्ष्या= अत्यारक्तनयनया, कुटिलयोः = स्वभावातिवक्रयोः, भ्रुवोर्भेदात् = भ्रूभङ्गच्छलेन, स्मरस्य = कामस्य शरासनं = कार्मुकं, भग्नमिव । सहजकुटिलयोर्भ्रुवोः स्मरधनूरूपयोर्भ्रुकुटिबन्धे उत्क्षेपणात्स्मरधनुर्भङ्ग उत्प्रेक्षितः, आरक्तनयनादिकं हि अकृत्रिमे क्रोध एव भवति । [ उत्प्रेक्षा, काव्यलिङ्गमनुप्रासः, "शकुन्तला—सरोषमि"त्यारभ्य—संफेटो नाम विमर्शसन्ध्यङ्गं—"संफेटो रोषभाषण"मिति विश्वनाथोक्तं च—दर्शितम् । वसन्ततिलकावृत्तम् ] ॥२५॥

प्रथितं = प्रसिद्धम् । इदं = वञ्चकत्वं, प्रजास्वपि = साधारणेषु जनेष्वपि,

---

१ 'सन्दिग्धबुद्धि मां कुर्वन्' पा० २ 'मय्येव विस्मरण' पा० ।

शकुन्तला—

यूयमेव प्रमाणं जानीथ धर्म्मस्थितिञ्च लोकस्य ।
लज्जाविनिर्जिता जानन्ति न किमपि महिलाः ॥२६॥

[1]सुष्ठु तावदात्मच्छन्दानुचारिणी गणिका समुपस्थिता ।

[ तुह्मे ज्जेव पमाणं जाणध धम्मत्थिदिञ्च लोअस्स ।
लज्जाविणिज्जिदाओ जाणन्ति ण किम्पि महिलाओ ॥२६॥
सुष्ठु, दाव अत्तच्छन्दाणुचारिणी गणिआ समुवत्थिदा । ]

गौतमी—जाते ! अस्य पुरुवंशप्रत्ययेन मुखमधोर्हृदय-विषस्य हस्तं समुपगतासि । [ जादे ! इमस्स पुरुवंसपच्चएण मुहमहुणो हिअअविसस्स हत्थं समुवगदासि । ]

---

किं नाम राजनि । यूयमेवेति । यूयमेव प्रमाणं = शास्त्रतत्त्वं, जानीथ = वेत्थ, लोकस्य=जगतः, धर्मस्य स्थितिं = धर्मस्य पालनं—मर्यादां वा, वेत्थ= जानीथ, लज्जया विनिर्जिताः—लज्जापरवशाः, महिलाः = कुलाङ्गनाः, किमपि न जानन्ति । भवादृशा वञ्चकाः पण्डितम्मन्या एव धर्मनिर्णेतारः, लोकव्यवहारविदश्च, याश्च लज्जाधनाः कुलमर्यादारक्षिकाः सरलाः स्त्रियस्ता न किमपि जानन्तीति—अहो तवेयं धारणेति उपालम्भकुटिलं वचः । [ अप्रस्तुतप्रशंसा, व्याजस्तुतिः । 'आर्या' ] ॥२६॥

सुष्ठु = युक्तं, आत्मनश्छन्देनानुचरति—तच्छीला—आत्मच्छन्दानुचारिणी = स्वेच्छाचारिणी, गणिका वेश्या, समुपस्थिता, भवदन्तिकं प्राप्ता । किमहं गणिका यदेवं भाषसे ! इत्याशयः । पटान्तेन = पटाञ्चलेन,—

---

[1]"सुष्ठु तावदत्र स्वच्छन्दचारिणी कृताऽस्मि, याहमस्य पुरुवंशप्रत्ययेन मुखमधोर्हृदयस्थितविषस्य हस्ताभ्यासमुपगता" पा० । स्वच्छन्दचारिणी = वेश्या, पुरुवंशे यः प्रत्ययो विश्वासः—पौरवाः सत्यनिष्ठा भवन्तीति—तेन मुखे मधु यस्य तस्य—मिष्टभाषिणोऽपि—हृदये स्थितं विषं यस्य तस्य—दुष्यन्तस्य, हस्ताभ्यासं = हस्तसमीपम्, उपगता = प्राप्ता ।

( शकुन्तला—पटान्तेन मुखमाच्छाद्य रोदिति । )

शार्ङ्गरवः—इत्थमप्रतिहतं चापल्यं दहति—

अतः परीक्ष्य कर्त्तव्यं विशेषात् सङ्गतं रहः ।
अज्ञातहृदयेष्वेवं वैरीभवति सौहृदम् ॥२७॥

राजा—अयि भोः ! किमत्रभवतीप्रत्ययादेवास्मानसम्भृत-[1]दोषैरधिक्षिपन्ति भवन्तः ? ।

---

इत्थम् = ईदृशम्, अप्रतिहतं = निरर्गलं, चापल्यं = चाञ्चल्यं, दहति = सन्तापयतीति—शकुन्तलां प्रत्युपालम्भः ।

अत इति । अस्माद्धेतोः—सङ्गतं = सख्यं—मैत्रीति यावत्, परीक्ष्य कर्तव्यम् । विशेषात् = विशेषतः, रहः सङ्गतम् = विवाहादिसम्बन्धः, परीक्ष्य कर्तव्यः, यद्वा—अतः—कर्त्तव्यं = करणीयं कार्यं परीक्ष्य = इष्टैः सहालोच्य कर्त्तव्यम्, रहः सङ्गतम् = एकान्तसख्यं—विवाहादि, ; विशेषात् = विशेषतः परीक्ष्य कर्त्तव्यम् ।

अज्ञातं हृदयं येषान्तेषु—अज्ञातहृदयेषु = अपरिज्ञातशीलेषु जनेषु, सौहृदम् = सख्यम्, एवम् = इत्थं, शकुन्तलादुष्यन्तवत्, वैरीभवति = वैरायैव कल्पते । [ अर्थान्तरन्यासः, अप्रस्तुतप्रशंसा । ] ॥ २७ ॥

अत्रभवतीप्रत्ययात् = शकुन्तलावचनमात्रविश्वासात्, अस्मान् = जगद्विदितमाहात्म्यान्, सम्यक् युतो दोषो येषु तानि अक्षराणि येषु तैः = दोषाधायकैः क्रूराक्षरैर्वचोभिः, क्षिणुथ = दूषयथ, ओजो नाम विमर्शसन्ध्यङ्गं दर्शितमेतेन, "अधिक्षेपाद्यसहनमोजः" इत्युक्तेः, राज्ञा शार्ङ्गरवाधिक्षेपासहनस्य 'अयि भोः' इत्याद्युक्त्या प्रकटनात् । 'असम्भृतदोषै'रिति पाठे—अकृतैरपराधैः, अधिक्षिपन्ति = तिरस्कुर्वन्तीत्यर्थो बोध्यः ।

---

१ "संयुतदोषाक्षरैरस्मान् क्षिणुथ"

शार्ङ्गरवः—( सासूयम्- ) श्रुतं भवद्भिरधरोत्तरम् ? ।

आजन्मनः शाठ्यमशिक्षितो य-
स्तस्याप्रमाणं वचनं जनस्य ।
पराभिसन्धानमधीयते यै-
र्विद्येति ते सन्तु किलाप्तवाचः ! ॥२८॥

राजा—अहो सत्यवादिन् ! अभ्युपगतं तावदस्माभिरेवंविधा एव वयम्, किं पुनरिमामभिसन्धाय लभ्यते ? ।

---

सासूयं = सेर्ष्यम्, "असूया दोषारोपो गुणेष्वपि"—इत्यमरः । भवद्भिः = सभ्यैः-विदूषकपुरोहितादिभिः, अधरञ्चोत्तरञ्चानयोः समाहारः—अधरोत्तरम् = उत्तरप्रत्युत्तरम्, अनयोरालाप इति यावत् । अधरञ्च तदुत्तरञ्चेति विगृह्य—क्षुद्रमुत्तरमिति च केचनार्थं—वर्णयन्ति । असूयामेव विवृणोति—आजन्मन इति । यो जनः—आ जन्मनः = जन्म भृति, शाठ्यं = परवञ्चनाचातुर्यम्, अशिक्षितः = दुष्टादिसंसर्गाभावादनुपदिष्टः, तस्य जनस्य = शकुन्तलायाः, वचनं=वाक्यम्, अप्रमाणम्=अप्रामाणिकं, यैः पुनः-परातिसन्धानं = परवञ्चनमेव, विद्येति = विद्यारूपत्वेन,-कलाभावेन, अधीयते = पठ्यते, ते आप्ता वाग् येषान्ते—आप्तवाचः=सत्यभाषिणः—प्रामाणिकाः, सन्तु किल, भवन्तु नाम !। अत्र शकुन्तलावचोऽप्रमाणं, दुष्यन्तोक्तं सत्यमिति—अहो ! प्रमाणप्रमेयभावव्यवस्था—इत्यसूया प्रकटीकृता [अप्रस्तुतप्रशंसा । रूपकानुप्रासौ, उपजातिः । 'शकुन्तला—सुष्ठु तावदि'त्यादिना द्रवो नाम सन्ध्यङ्गं—"द्रवो गुरुव्यतिक्रान्तिः शोकावेगादिसम्भवा" इत्युक्तेः 'उपजातिः',।] ॥२८॥

'सत्यवादि'न्निति सोल्लुण्ठनं वचः, अभ्युपगतं=स्वीकृतम्, एवंविधाः = मायाविनोऽप्रमाणिकाः । अतिसन्धाय = वञ्चयित्वा, विनिपातः = निरयगसनम्—अधोगतिरिति यावत् । प्रार्थ्यते = इष्यते, अश्रद्धेयम् =

शार्ङ्गरवः—विनिपातः।

राजा—"विनिपातः पौरवैर्भ्यत"—इत्यश्रद्धेयमेतत्।

शार्ङ्गरवः—भो राजन्! किमत्रोत्तरेण, अनुष्ठितो गुरुनियोगः, सम्प्रति प्रतिनिवर्त्तामहे वयम्—

तदेषा भवतः पत्नी त्यज वैनां गृहाण वा।
उपयन्तुर्हि दारेषु प्रभुता सर्वतोमुखी ॥२९॥

गौतमी—गच्छाग्रतः। (इति सर्वे प्रस्थिताः।)

शकुन्तला—अहमिदानीमनेन कितवेन विप्रलब्धा, यूयमपि मां परित्यजथ! (इत्यनुप्रस्थिता।)

[अहं दाणिं इमिणा किदवेण विप्पलद्धा, तुह्मे वि मं परिच्चअध!]

गौतमी—(स्थित्वा परिवृत्यावलोक्य च—) वत्स! शार्ङ्गरव! अनुगच्छति नः करुणपरिदेविनी शकुन्तला, प्रत्यादेशपरुषे

---

अमाननीयम्, 'भोः सत्यवादि'न्नित्यत आरभ्य अश्रद्धेयमित्यन्तेनाऽक्षमा नाम नाट्यालङ्कारः प्रदर्शितः—"अक्षमा सा परिभवः स्वल्पोऽपि न विषह्यते" इत्युक्तेः। उत्तरेण किं = नास्ति प्रयोजनं, प्रतिनिवर्त्तामहे = तपोवनं गच्छामः। तदेषेति। तत् = उपसंहराम इत्यर्थः। एषा = शकुन्तला, भवतः = तव, कान्ता = स्त्री, एनां त्यज, गृहाण वा = स्वीकुरु वा, हि = यतः—दारेषु = आत्मकलत्रेषु, प्रभुता = स्वातन्त्र्यं, सर्वतोमुखी = सर्वविधा, त्यागस्वीकारादिरूपा, युज्यत एवेत्यर्थः। [अर्थान्तरन्यासः] ॥ २९ ॥

अनेन कितवेन = धूर्तेन, विप्रलब्धा = वञ्चिताऽस्मि, यूयमपि कथं मां परित्यजथेति योजना। अनुप्रस्थितां = शार्ङ्गरवाद्यनुगामिनीम्, अनु = पश्चात्, नः = अस्मान्, अनुगच्छति, करुणं परिदेविनी = करुणं विलपन्ती, प्रत्यादेशेन परुषे = प्रत्याख्यानकठोरे—अस्वीकुर्वाणे इति यावत्। तपस्विनी

भर्तरि किं करोतु तपस्विनी ?। [ वच्छ ! सङ्गरव ! अणुगच्छदि णो करुणपरिदेविणी सउन्तला, पच्चादेसपरुपे भत्तरि किं करेदु तवस्सिणी ?। ]

**शार्ङ्गरवः**—( सरोषं प्रतिनिवृत्य- ) आः पुरोभागिनि ! किमिदं स्वातन्त्र्यमवलम्बसे ।

( **शकुन्तला**—भीता वेपते। )

**शार्ङ्गरवः**—शकुन्तले ! शृणोतु भवती—

यदि यथा वदति क्षितिपस्तथा
त्वमसि, किं पुनरुत्कुलया त्वया ।
अथ तु वेत्सि शुचि व्रतमात्मनः,
पतिगृहे तव दास्यमपि क्षमम् ॥३०॥

तिष्ठ, साधयामो वयम् ।

---

= अनुकम्पनीया वराकी, पुरोभागिनि = दोषैकप्रवणे ! "दोषैकदृक् पुरोभागी" त्यमरः । स्वातन्त्र्यमिति । स्वेच्छयैवागच्छसि भर्तारं विहायेत्यर्थः ।

यदीति । यदि—क्षितिपो = राजा—यथा वदति = 'नास्माभिः परिणीतेय'मित्यादि यथा भाषते, तथा त्वमसि = स्वैरिणी संवृत्ताऽसि, तदा कुलादुद्गता—उत्कुला—तया = कुलटया, त्वया किं = नास्माकं प्रयोजनम् । अथ तु = यदि तु—आत्मनो व्रतं = शीलं, शुचि = अखण्डितं, वेत्सि = जानासि, 'अयमेव मे दुष्यन्तः पति'रिति जानासि चेदित्याशयः, तर्हि—पतिगृहे = अत्र राजकुले, तव दास्यमपि = दासभावेनावस्थानमपि, क्षमम् = उचितम् । अतो नास्माननुगच्छ, इहैव ते वास उचित इति भावः । [ काव्यलिङ्गम्, अनुप्रासः, द्रुतविलम्बितम् ] ॥ ३० ॥

अतः-तिष्ठ = माऽस्माननुसर, साधयामः=गच्छामः, "प्रायेण पयन्तकः,

राजा—भोस्तपस्विन् ! किमत्रभवतीं विप्रलभसे ?। कुतः-

कुमुदान्येव शशाङ्कः, सविता बोधयति पङ्कजान्येव ।
वशिनां हि परपरिग्रहसंश्लेषपराङ्मुखी वृत्तिः ॥३१॥

शार्ङ्गरवः—राजन् ! अथ पूर्ववृत्तं व्यासङ्गाद्विस्मृतं भवेत्, तदा कथमधर्मभीरोर्दारपरित्यागः ? ।

राजा—भवन्तमेवात्र गुरुलाघवं पृच्छामि ।

मूढः स्यामहमेषा वा वदेन्मिथ्येति संशये ।
दारत्यागी भवाम्याहो ? परस्त्रीस्पर्शपांशुलः ॥३२॥

---

साधिर्गमनेऽर्थे प्रयुज्यत" इत्युक्तेः । विप्रलभसे = वाक्चातुर्येण वञ्चयसि, परित्यजसि ।

कुमुदान्येवेति । शशाङ्कः = चन्द्रः, कुमुदान्येव = कैरवकुलान्येव, बोधयति = विकाशयति, न पङ्कजानि, सविता = सूर्यः—पङ्कजान्येव बोधयति, न कुमुदानि । हि = यतः, वशिनाम् = इन्द्रियसंयमिनां, परेषां परिग्रहाणां संश्लेषे पराङ्मुखी—परपरिग्रहसंश्लेषपराङ्मुखी = परकलत्रादिसंपर्कपराङ्मुखी, वृत्तिः = व्यवहारः । [अप्रस्तुतप्रशंसा, मालादृष्टान्तालङ्कारः] ॥३१॥

पूर्ववृत्तं = पूर्वाचरितं, व्यासङ्गात् = कार्यान्तरव्यासङ्गात्, 'अन्यासङ्गा'दिति पाठे—अन्यस्य—शापस्य, आसङ्गात् = सम्बन्धात्—इत्याद्यर्थो बोध्यः । 'विस्मृतो भवा'निति पाठे, विस्मृतमस्त्यस्येत्यर्थः, अर्शआदित्वादच्, अधर्मभीरोः = पापाद्भीतस्य, दारपरित्यागः = परिणीतापरित्यागः । अधर्मभीरोरधर्मानुष्ठानमेतदनुचितमिति भावः । "उत्प्रासनन्तूपहासो योऽसाधौ साधुमानिनी"त्युक्तेरुत्प्रासो नाम नाट्यालङ्कारः । गुरुलाघवं = गौरवलाघवम्, किमत्र कर्त्तव्यमिति यावत् ।

मूढ इति । अहम् = अहमेव, मूढः = केनापि हेतुना विस्मरणशीलः,

पुरोहितः—( विचार्य्य- ) यदि तावदेवं क्रियताम्—"

राजा—अनुशास्तु मां गुरुः ।

पुरोहितः—"अत्रभवती तावदा प्रसवादस्मद्गृहे तिष्ठतु ।

राजा—कुत इदम् ? ।

पुरोहितः—"त्वं साधुनैमित्तिकैरुपदिष्टपूर्वः 'प्रथममेव चक्रवर्त्तिनं पुत्रं जनयिष्यसी'ति, स चेन्मुनिदौहित्रस्तल्लक्षणोपपन्नो भविष्यति, ततोऽभिनन्द्य शुद्धान्तमेनां प्रवेशयिष्यसि । विपर्य्यये त्वस्याः पितुः समीपगमनं स्थितमेव ।

राजा—यथा गुरुभ्यो रोचते ।

पुरोहित—( उत्थाय- ) वत्से ! इत इतोऽनुगच्छ माम् ।

---

स्यां = भवेयम्, एषा वा मिथ्या = मुधा वदेदिति-संशये = सन्देहे । अहं मूढ इयं वा मिथ्या भाषते इति सन्देहे इति यावत् । दारत्यागी = स्वस्त्रीत्यागपापवान्, आहो ! = अथवा, परस्य स्त्रियाः स्पर्शेन पांसुलः = परदारसंसर्गदूषितः, "पांसुलः पुंश्चले" इति विश्वः । यद्यहं मूढस्तदाऽस्यास्त्यागात् पापी स्यां, यदियं मिथ्या भाषते तर्हि परकलत्रसङ्ग्रहात्पापीयानिति यथासंख्यमन्वयः । [ विरोधो नाम सन्ध्यङ्गम्-"उत्तरोत्तरवाक्यन्तु विरोध" इत्युक्तलक्षणमुपदर्शितं । "भोः सत्यवादिन्" इत्यादिनैतदन्तेन । ] ॥२२॥

एवम् = इत्थम्, अनुशास्तु = उपदिशतु—आ प्रसवात् = पुत्रजन्म यावत् । कुत इदं = कस्मादेवम् । साधवश्च ते ( निमित्तं जानन्तीति-) नैमित्तिकाश्च तैः-साधुनैमित्तिकैः = शिष्टैर्दैवज्ञैः, पूर्वमुपदिष्ट-उपदिष्टपूर्वः = पूर्वमभिहितः, मुनेः = कण्वस्य, दुहितुरपत्यं-दौहित्रः = शकुन्तलापुत्रः, तल्लक्षणोपपन्नः = चक्रवर्त्तिलक्षणयुक्तः । अभिनन्द्य= प्रशंसापूर्वकं, शुद्धान्तम् = अन्तःपुरं, विपर्यये = यदस्याः पुत्रो न तथा भवेत्तदा, स्थितं = निश्चितमेव । इत इतः = अमुना मार्गेण । अन्तरम् = अवकाशं,

शकुन्तला—भवगति ! वसुन्धरे ! देहि मे-अन्तरम्।
( इति सह पुरोधसा गौतमीतपस्विभिश्च रुदती निष्क्रान्ता । )
[ भअवदि ! वसुन्धरे ! देहि मे अन्तरं । ]
( राजा—शापव्यवहितस्मृतिः शकुन्तलागतमेव चिन्तयति । )
( नेपथ्ये- ) आश्चर्य्यम् ! आश्चर्य्यम् !!
राजा—( कर्णं दत्त्वा- ) किन्नु खलु स्यात् ? ।
पुरोधाः—( प्रविश्य सविस्मयम्- ) देव ! अद्भुतं खलु संवृत्तम्।
राजा—किमिव ? ।
पुरोहितः—देव ! परावृत्तेषु कण्वशिष्येषु—

सा निन्दन्ती स्वानि भाग्यानि बाला
बाहूत्क्षेपं रोदितुञ्च प्रवृत्ता ।

राजा—ततः किम् ? ।
पुरोहितः—स्त्रीसंस्थानञ्चाप्सरस्तीर्थमारात्
उत्क्षिप्याङ्के ज्योतिरेनां तिरोऽभूत् ॥३३॥
( सर्वे—विस्मयं रूपयन्ति- )

---

स्वोदरे स्थानमिति यावत् । शापेन व्यवहिता स्मृतिर्यस्यासौ = शापमूढमतिः । शकुन्तलागतं = तां विषयीकृत्य । किं न खलु स्यादिति। किमिदं जातमित्याशयः । संवृत्तं = जातं, परावृत्तेषु = गतेषु । सेति । स्वानि भाग्यानि = अदृष्टं, निन्दन्ती = अधिक्षिपन्ती, सा बाला=शकुन्तला, बाहू उत्क्षिप्य—बाहूत्क्षेपं = हस्तावुद्यम्य, रोदितुं प्रवृत्ता = रोदितुमारेभे ! स्त्रिया इव संस्थानं यस्य तत्—स्त्रीसंस्थानं = स्त्र्याकृति, अप्सरस्तीर्थमारात्= अप्सरोनामकसरोवरसमीपे, एनां = शकुन्तलाम्, अङ्के = उत्सङ्गे, त्क्षिप्य = आदाय, तिरोऽभूत् = अन्तरधात् । [ उपमा, क्रियासमुच्चय,

राजा—भगवन् ! प्रागेवास्माभिरेषोऽर्थः प्रत्यादिष्टः, किं मृषा तर्केणान्विष्यते, विश्राम्यतु भवान् ।

पुरोधाः—विजयस्व । (—इति निष्क्रान्तः । )

राजा—वेत्रवति ! पर्य्याकुलोऽस्मि, शयनीयगृहमार्ग-मादेशय ।

प्रतीहारी—इत इतः देवः । [ इदो इदो देवो । ]

राजा—( परिक्रम्य स्वगतम्– )

कामं प्रत्यादिष्टां स्मरामि न परिग्रहं मुनेस्तनयाम् ।
बलवत्तु दूयमानं प्रत्याययतीव मां हृदयम् ॥३४॥

( इति निष्क्रान्ताः सर्वे । )

❀ पञ्चमोऽङ्कः ❀

---

शक्तिर्नाम सन्ध्यङ्गं, "शक्तिः पुनर्भवेत्, विरोधस्य प्रशमन"मित्युक्तं दर्शितं, 'शालिनी' । ] ॥ ३३ ॥

एषोऽर्थः = नेयमस्मत्परिणीतेति रीत्या, प्रत्यादिष्टः = प्रत्याख्यातः, अन्विष्यते = किं वितर्केणेत्याशयः । पर्याकुलः = श्रान्तः, आदर्शय = निर्दिश । काममिति । यद्यपि–प्रत्यादिष्टां = निराकृतां, मुनेस्तनयां = कण्वदुहितरं, परिग्रहं = पत्नीत्वेन परिगृहीतां, कामं = सत्यं, न स्मरामि । तथापि—तु = परन्तु = बलवत् = अधिकं, दूयमानं = अतिक्लिश्यमानं, मे = मम, हृदयं = चेतः, प्रत्याययतीव = विश्वासमुत्पादयतीव, अत्र शकुन्तलानिराकरणेन वस्तुविच्छेदेऽपि दुष्यन्तचित्तक्षोभ एव प्राप्तिं प्रति विन्दुरिति ध्येयम् । [ उत्प्रेक्षा, विभावना, अनुमानञ्चालङ्काराः, प्रसङ्गश्च सन्ध्यङ्गं, मुनेः कीर्त्तनात्—"प्रसङ्गो गुरुकीर्त्तन" मित्युक्तेः । 'आर्या' ।] ॥३४॥

इति श्री गुरुप्रसादशास्त्रिकृतायामभिनवराजलक्ष्म्यां पञ्चमोऽङ्कः ।



## ❀ षष्ठोऽङ्कः ❀

( ततः प्रविशति नागरकश्यालः पश्चाद्बाहुबद्धं पुरुषमादाय, रक्षिणौ च- )

**रक्षिणौ**—( पुरुषं ताडयित्वा- ) अरे कुम्भिलक ! कथय कुत्र त्वयैतन्महामणिभासुरमुत्कीर्णनामाक्षरं राजकीयमङ्गुलीयकं समासादितम् ? । [ अले कुम्भिलआ ! कधेहि कहिं तुए एशे महामणिभाशुले उक्किण्णणामाक्खले लाअकीए अङ्गुलीअए शमाशादिदे । ]

**पुरुषः**—( भीतिनाटितकेन- ) प्रसीदन्तु प्रसीदन्तु मे भाव-

---

## ❀ अभिनव-राजलक्ष्मीः ❀

तत इति । षष्ठाङ्कावतारार्थमङ्कावतारनामाऽर्थोपक्षेपकोयम्[१] । तदुक्तं विश्वनाथेन—"अङ्कान्ते सूचितः पात्रैस्तदङ्कस्याविभागतः । यत्राङ्कोवतरत्येषोऽङ्कावतार इति स्मृतः"—इति । दाक्षिणात्यास्तु—"यन्नीचैः केवलं पात्रैर्भाविभूतार्थसूचनं । अङ्कयोरुभयोर्मध्ये स विज्ञेयः प्रवेशक":—इति सुधाकरोक्तेर्नीचपात्रप्रयोज्यत्वात्प्रवेशकोऽयमिति मत्वाऽमुं षष्ठाङ्केऽन्तर्भावयन्ति । तदनुसारिभिरस्माभिरपि तथैवादृतम् । नागरकश्चासौ श्यालश्चेति विग्रहः, श्यालश्च राज्ञ एव, प्रकृतत्वात् "श्याला स्युर्भ्रातरः पत्न्याः" इत्यमरः । पश्चात्—बाह्वोर्बद्धस्तं—पश्चाद्बाहुबद्धं = पृष्टभागबद्धभुजयुगलं, रक्षिणौ = रक्षाधिकृतपुरुषौ, 'सिपाही, इति भाषा, कुम्भिलकः = चौरः, "कुम्भिलः शालमीने च चौरश्लोकार्थचौरयो"रिति मेदिनी । महता मणिना भासुरं—महामणिभासुरं = महार्हरत्नोज्ज्वलम्, उत्कीर्णानि नामाक्षराणि यत्र तत्—उत्कीर्णनामाक्षरम् = उट्टङ्कितनामाक्षरम्, राज्ञ इदं—राजकीयं, राज्ञो दुष्यन्तस्य, समासादितं = प्राप्तं, भीतिनाटितकेन = भयं नाटयित्वा, भावाश्च ते मिश्राश्च भावमिश्राः = श्रेष्ठतमाः, "मान्यो भावस्तु वक्तव्य" इत्युक्तेः ।

---

१ अमुं पुनः—पञ्चमाङ्कभागमेवाङ्कावतरणनाम्ना केचन मन्वते ।

मिश्राः, नाहमीदृशस्याकार्यस्य कारकः। [पशीदन्तु पशीदन्तु मे भावमिश्शे। ण हग्गे इदिशश्श अकज्जश्श कालके।]

एकः—किन्नु खलु शोभनो ब्राह्मणोऽसीति कृत्वा राज्ञा ते परिग्रहो दत्तः?।

[किण्णु क्खु शोहणे वम्हणेशि त्ति कदुअ रण्णादे परिग्गहे दिण्णे।]

पुरुषः—शृणुत तावत्, अहं खलु शक्रावतारवासी धीवरः।

[शुणुध दाव, हग्गे क्खु शक्कावदालवाशी धीवले।]

द्वितीयः—अरे पाटच्चर! किं त्वमस्माभिर्वसतिं जातिञ्च पृच्छ्यसे?। [अले पाअच्चले! किं तुमं अह्मेहिं वशदिं जादिं च पुच्छीअशि।]

नागरकः—सूचक! कथयतु सर्वमनुक्रमेण, माऽन्तरा प्रतिबधान[1]। [सूअअ! कधेदु सव्वं अणुक्कमेण, मा अन्तरा पडिबन्धेअ।]

उभौ—यदावुत्त आज्ञापयति। लप रे।

[जं आवुत्ते आणवेदि। लवेहि ले।]

---

मिश्रब्दोऽत्र प्रशंसायाम्, अकार्यस्य = स्तेयस्य, नेदमङ्गुलीयकं मया चौर्येणासादितमित्याशयः। शोभनः = विद्यातपोनिष्ठः, प्रतिग्रहः = दानम्, उपहासवाक्यमेतत्, शक्रावतारः = तीर्थविशेषः, 'हापुड–मेरठ' इति प्रसिद्धं। धीवरः=कैवर्त्तः, "कैवर्त्ते दाशधीवरा"वित्यमरः। पाटच्चरः—दस्युः, "दस्युः पाटच्चरः स्तेनः" इत्यमरः। वसतिं=निवासस्थानम्, अतस्तव जात्यादिशंसनं न प्रासङ्गिकं, कथय कुतोऽङ्गुलीयकमिति भावः।

सूचकेति—प्रहरिनाम, अनुक्रमेण = आनुपूर्व्येण, अन्तरा = मध्ये, मा प्रतिबन्धीथाः = तर्जनेन विघ्नं मा कुरु, आवुत्तः = भगिनीपतिः, "भगि-

---

1. प्रतिबध्नीयाः, प्रतिबन्धय।

**धीवरः**—सोऽहं जाल-बडिशप्रभृतभिर्मत्स्यवन्धनोपायैः कुटुम्बभरणं करोमि । [ शो हग्गे जाल-वलिश-प्पहुदिहिं मच्छवन्धणोवाएहिं कुडुम्बभलणं कलेमि । ]

**नागरकः**—( विहस्य- ) विशुद्ध इदानीमस्य आजीवः । [ विसुद्धो दाणिं से आजीवो ]

**धीवरः**—भर्त्तः ! मैवं भण । [ भट्टके । मा एव्वं भणा

सहजं किल यद्विनिन्दितं न खलु तत्कर्म्म विवर्जनीयकम् ।
पशुमारणकर्म्मदारुणोऽनुकम्पामृदुकोऽपि श्रोत्रियः ॥१॥

शहजे किल जे विणिन्दिदे णहु शे कम्मवि वज्जणीअए ।
पशुमालणकम्मदालुणे अणुकम्पामिदुकेवि शोत्तिए ॥ १ ॥ ]

**नागरकः**—ततस्ततः ? [ तदो तदो ]

नीपतिरावृत्तः" इत्यमरः । लप = सर्वं विशदं व्यावृणु, जालवडिशप्रभृतिभिः = जालाद्यैः, मत्स्यानां वन्धने उपायभूतैः, कुटुम्बस्य भरणं=पालनं । विशुद्धः = उत्तमः, आजीवः=जीविका, सोत्प्रासं चैतद्वचः, अतिगर्हितेयं तव जीविकेत्यधिक्षेपो गम्यः । भर्त्तः !=स्वामिन् , मैवं=मैवमधिक्षेप्तुमर्हसि, सहजमिति । यत् किल—सहजं कर्म = साहजिकं कर्म, तत्–विनिन्दितमपि = गर्हितमपि, न विवर्जनीयकम् = परित्यागमर्हति । अनुकम्पया मृदुकोऽपि = कृपार्द्रहृदयोऽपि, छन्दोऽधीते-श्रोत्रियः = श्रौतयज्ञादिकर्मप्रवणः,—वेदवित्, पशूनां मारणमेव कर्म–तेन—दारुणः=क्रूरः, भवतीति शेषः । दयासागरोऽपि ब्राह्मणो यज्ञादौ पशूनां हिंसने त्यक्तदयः प्रवर्त्तत एवेति नैसर्गिकं कर्म न निन्दनीयमित्याशयः । "स्वधर्मे निधनं श्रेयः," "सहजं कर्म कौन्तेय ! सदोषमपि न त्यजेत्" "सर्वारम्भा हि दोषेण धूमेनाग्निरिवावृताः" इति भगवद्वचनात् । [ वैधर्म्येण दृष्टान्तः, अप्रस्तुतप्रशंसा, सुन्दरी वृत्तं, ] ॥१॥ ततस्ततः = अग्रे-अग्रे, कथयेति शेषः, त्वरायां द्विरुक्तिः । खण्डशः=

**धीवरः**—एकस्मिन् दिवसे मया रोहितमत्स्यकः प्राप्तः, ततः खण्डशः कल्पितः । यावत्तस्योदराभ्यन्तरे प्रेक्षे, तावदेतन्महारत्नभासुरमङ्गुलीयकं प्रेक्षितं, पश्चादिह विक्रयार्थं दर्शयन्नेव गृहीतो भावमिश्रैः । एतावान् तावदेतस्यागमः । अथ मां मारयत कुट्टयत वा ।

[ एक्कस्सिं दिअशे मए लोहिदमच्छके पाविदे, तदो खण्डशो कप्पिदे । जाव तश्श उदलब्भन्तले पेक्खामि, दाव एशे महालअणभाशुले अङ्गुलीअए पेक्खिदे, पच्चा इध विक्कअत्थं दंशअन्ते ज्जेव गहिदे भावमिश्शेहिं । एत्तिक्के दाव एदश्श आगमे । अध मं मालेध कुट्टेध वा । ]

**नागरकः**—( अंगुलीयकमाघ्राय— ) जालुक ! मत्स्योदराभ्यन्तरगतमिति नास्ति सन्देहः, [1]यतोऽयमामिषगन्धो वाति । आगम इदानीमेतस्यैष विमर्ष्टव्यः, तदेत राजकुलमेव गच्छामः ।

[ जालुअ ! मच्छोदलब्भन्तलगदोत्ति णत्थि सन्देहो, जदो अअं आमिसगन्धो वाअदि । आगमो दाणिं एदस्स एशो विमरिसिदव्वो, ता एध लाअउलं ज्जेव गच्छह्म । ]

---

खण्डं खण्डं, कल्पितः = कर्त्तितः, "कल्पनं कर्त्तने क्लृप्ता"विति विश्वः । उदरस्याभ्यन्तरं तस्मिन्=उदरमध्ये, महता रत्नेन भासुरं—महारत्नभासुरं=महार्हमणिदेदीप्यमानं, विक्रयार्थं = विक्रयं कर्त्तुं, दर्शयन् = रत्नापणिकेभ्यो दर्शयन्नेव, गृहीतः = बद्धः, एतावान् = इत्थमेतावत्परिमितः, आगमः = प्राप्तिवृत्तान्तः, अथ = श्रुत्वैतदिदानीं, कुट्टयत = चूर्णयत, मत्स्योदरस्याभ्यन्तरे गतं = रोहितोदरकुहरं गतमिदम् , इति = इत्यत्र आमिषगन्धः = मत्स्यमांसगन्धः, वाति = निस्सरति । आगमः=प्राप्तिवृत्तान्तः, विमर्शनीयः=

---

१ "विस्रगन्धी गोधादी मत्स्यबन्ध एव निस्संशयम्, अङ्गुलीयकदर्शनमेव विमर्शनीयम्" विस्रगन्धी = आममांसगन्धवान् , गोधादी = गोधाशनः । मत्स्यबन्धः=धीवरः ।

रक्षिणौ—( धीवरं प्रति- ) गच्छ रे ग्रन्थिच्छेदक ! गच्छ । ( इति सर्वे परिक्रामन्ति- ) [ गच्छ ले गण्ठिच्छेदअ ! गच्छ । ]

नागरकः—सूचक ! इह गोपुरद्वारेऽप्रमत्तौ प्रतिपालयतं माम्, यावदिदमङ्गुलीयकं यथागमनं भर्त्तुर्निवेद्य ततः शासनं प्रतीक्ष्य निष्क्रामामि । [ सूअअ ! इध गोउलदुआले अप्पमत्ता पडिपालेध मं, जाव लाअउलं पवेसिअ णिक्कमामि । ]

उभौ—प्रविशतु आवुत्तः स्वामिप्रसादार्थम् ।

[ पविशदु आवुत्ते शामिप्पशादत्थं । ]

( नागरकः—परिक्रम्य निष्क्रान्तः । )

सूचकः—जालुक ! चिरयति खल्वावुत्तः ।

[ जालुअ ! चिलाअदि क्खु, आवुत्ते । ]

जालुकः—नन्ववसरोपसर्पणीया राजानो भवन्ति ।

[ णं अवशलोवशप्पणीआ लाआणो होन्ति । ]

सूचकः—स्फुरतो मेऽग्रहस्तावस्य वधार्थं सुमनसः पिनद्धुम्[1] ।

[ फुळन्ति मे अग्गहत्था इमं गण्ठिच्छेदअं वावादिदुं । ]

---

विचारणीयः । एत = आगच्छतं, राजकुलं = राजसभां, ग्रन्थिच्छेदकः = चौरः, गोपुरस्य द्वारे—गोपुरद्वारे = नगरद्वारे "पुरमात्रेऽपि गोपुर"मिति रत्नकोशात् । अप्रमत्तौ = सावधानौ, भर्त्तुर्निवेद्य = भर्त्रे निवेद्य, शासनम् = आज्ञां, प्रतीक्ष्य=गृहीत्वा, निष्क्रामामि = आगच्छामि । स्वामिनो—राज्ञः, प्रसादायेति—प्रसादार्थं = प्रसन्नतार्थम् । अङ्गुलीयकस्य लाभाद्राजा प्रसीदेदिति भावः । प्राकृते-चतुर्थ्यर्थे षष्ठी ।

चिरयति = विलम्बते । अवसरे सत्युपसर्पणीयाः—अवसरोपसर्पणीयाः = सत्यवसरे दर्शनीयाः । न हि राज्ञो दर्शनं सर्वदा लब्धुं शक्यमत एव विलम्ब इत्याशयः । भावयितुं = विचारयितुं । शुनो मुखं द्रक्ष्यसि = कुकुर-

---

१ 'इमं ग्रन्थिच्छेदकं व्यापादयितुम्' ।

धीवरः—नार्हति भावोऽकारणमारणं भावयित्तुं।
[ णालिहदि भावे अकालणमालके भविदुं। ]

जालुकः—( विलोक्य– ) 'एष नौ स्वामी पत्रहस्तो राजशासनं प्रतीक्ष्येतोमुखो दृश्यते। गृध्रबलिर्भविष्यसि। शुनो मुखं वा द्रक्ष्यसि। [ एशे अह्माणं इश्शले पत्ते गेह्णिअ लाअशाशणं आअच्छदि। शम्पदं एशे शउलाणं मुहं पेक्खदु, अहवा गिद्धशिआलाणं वली होदु। ]

नागरकः—( प्रविश्य– ) शीघ्रं शीघ्रमेतम्–" ( इत्यर्द्धोक्ते– )
[ "सिग्घं सिग्घं एदं–" ]

धीवरः—हा हतोऽस्मि। (इति विषादं नाटयति) [ हा हदोह्मि। ]

नागरकः—"मुञ्चतं जालोपजीविनम्, उपपन्नोऽस्याङ्गुलीयकस्याऽऽगमः, अस्मत्स्वामिना यावत् कथितम्। [ मुञ्चध जालोवजीविणं। उववण्णे से अङ्गुलिअस्स आगमे, अह्म शामिणा जाव कधिदं। ]

सूचकः—यथाऽऽज्ञापयति आवुत्तः, "यमसदनं प्रविश्य प्रतिनिवृत्तः खल्वेषः।
[ जहा आणवेदि आवुत्ते। जमवशदिं गदुअ पड़िणिउत्तेक्खु एशे। ]

धीवरः—भर्त्तः! साम्प्रतं तव क्रीतकं मे जीवितम्।
(–इति पादयोः पतति ) [ भट्टके! शम्पदं तुह कीलके मे जीविदे। ]

---

भक्ष्यो भविष्यसि, उपपन्नः = सङ्गतः। यमसदनं=कालमुखं, पुनरुज्जीवित इवायं धीवर इत्याशयः। क्रीतकं = क्रीतमिव, अयमहं भवतो दासः संवृत्तोऽस्मीति भावः। भवत्कृपयैव मुक्तोऽस्मीति यावत्। अङ्गुलीयकस्य मूल्येन-

---

१ "पत्रे गृहीत्वा राजशासनमागच्छति। साम्प्रतमेष स्वकुल्यानां मुखं प्रेक्षताम्, अथवा गृध्रशृगालानां बलिर्भवतु" पा०। २. 'वसतिं' पा०।

**नागरकः**—उत्तिष्ठ, एतत् भर्त्राऽङ्गुरीयमूल्यसम्मितं पारितोषिकन्ते प्रसादीकृतं, तद्गृहाणेदम्। (–इति धीवराय कटकं ददाति)
[ उट्ठेहि एसे भट्टिणा अङ्गुलीअ-मुल्ल-सम्मिदे पारिदोसिए दे प्पसादीकिदे, ता गेह्न एदं। ]

**धीवरः**—( सहर्षं सप्रणामञ्च प्रतिगृह्य– ) अनुगृहीतोऽस्मि।
[ अणुग्गहीदोह्मि। ]

**जालुकः**—एष खलु राज्ञा तथाऽनुगृहीतः, यथा शूलादवतार्य्य हस्तिस्कन्धे समारोपितः। [एशे क्खु रण्णा तधा अणुग्गहीदे, जधा शुलादो ओदालिअ हत्थिक्खन्धे शमालोविदे।]

**सूचकः**—आवुत्त ! पारितोषिकेण जानामि महार्हरत्नेनाङ्गुलीयकेन स्वामिनो बहुमतेन भवितव्यम् [ आवुत्ते ! पालितोशिएण जाणामि महालिहलदणेण अङ्गुलीअएण शामिणो बहुमदेण होदव्वं। ]

**नागरकः**—न तस्मिन् भर्त्तुर्महार्हरत्नमिति कृत्वा परितोषः। एतत् पुनस्तर्कयामि–"। [ ण तस्सिं भट्टिणो महालिहलदणं त्ति कदुअ परिदोसो। एत्ति उण तक्केमि—" ]

---

सम्मितं = तुल्यम्–अङ्गलीयकमूल्यसम्मितं, प्रसादीकृतं = दत्तं, कटकं=हस्ताभरणं। हस्तिस्कन्ध इति। शूलादवतार्य=शूलाख्यान्मारणसाधनाल्लौहदण्डादवरोप्य, हस्तिस्कन्धे=महति सन्मानपदे। वध्यो राजसम्मितं सत्कारं ग्राहित इति यावत्। पारितोषिकेण = धीवरस्य सत्कारेण, महार्हं रत्नं यत्र तेन = बहुमूल्यमणिखचितेन, अत एव राज्ञो बहुमतेन = प्रियेण, तस्मिन्= अङ्गुलीयके, महार्हं रत्नं यत्र तत्—महार्हरत्नं = अनर्घरत्नघटितम्, इति कृत्वा = इति हेतोः, परितोषः = स्नेहः। तर्कयामि = सम्भावयामि। तस्य = अङ्गुलीयकस्य, अभिमतः = प्रणयी, इति = इत्थं-तर्कयामीति पूर्वेण सम्बन्धः। यतः = अत एव तर्को यदयं,—प्रकृत्या गम्भीरोऽपि =

उभौ—किं पुनः ? [ किं ण । ]

नागरकः—तस्य दर्शनेन भर्त्रा कोऽप्यभिमतो जनः स्मृत इति, यतो मुहूर्त्तं प्रकृतिगम्भीरोऽपि पर्य्युत्सुकमना आसीत् ।

[ तस्स दंसणेण भट्टिणा कोवि अहिमदो जनो सुमरिदोत्ति, जदो मुहूत्तअं पइदिगम्भीरोवि पज्जुस्सुअमणा आसी । ]

सूचकः—तोषितः शोचितश्चेदानीं भर्त्ता आवुत्तेन ।

[ दोसिदे शोइदे अ दाणिं मट्टा आवुत्तेण । ]

जालुकः—ननु भण—अस्य मात्स्यिकभर्त्तुः[1] कृते ।

[ णं भणेमि इमश्श मच्छशत्तुणो कि दे । ]

( इति धीवरमसूयया पश्यति । )

धीवरः—भट्टारक ! इतोऽर्द्धं युष्माकमपि सुरामूल्यं[2] भवतु ।

[ भट्टालके ! इदो अद्धं तुह्माणम्पि शुलामुल्लं होदु । ]

---

गम्भीरप्रकृतिरपि राजा, मुहूर्तं = क्षणमात्रं, पर्युत्सुकं मनो यस्यासौ—पर्युत्सुकमनाः = उत्कण्ठितः, चेतसोत्कण्ठितेन क्षणं स्मरन्निव प्रणयपेशलं जनं खिन्नोऽभूदिति भावः। तोषितः—अंगुलीयकदानात्, शोचितः=उत्कण्ठाकुलीकृतः—प्रियजनस्मारकतयांगुलीयकस्य । ननु—इति रोषे । मत्स्यैर्जीवन्ति मात्स्यिकाः, तेषां भर्ता तस्य—मात्स्यिकभर्तुः, कृते = धीवराधिराजस्यैव लाभाय । अनेन निवेदनेन धीवरस्यैव लाभो जातो नास्माकमित्यस्माभिरेव राजा खेदितः, वयमपि मुधैव श्रान्ता इति—सासूयमिव, साभिक्षेपमिव च लुब्धस्य नागरकस्य वचनम् । इत्थञ्च नागरकस्य भावं बुध्वा मात्स्यिकोऽर्धं पारितोषिकाद्दातुं प्रवर्तते—

इतोऽर्धमिति । इतः—कटकात्, सुरामूल्यं = सुरापानोपकल्पनं, 'सुमनोमूल्'यमिति पाठे—पुष्पमालामूल्यमिति तदर्थः । पुष्पमूल्य-

---

१ मत्स्यशत्रोः । २ सुमनोमूल्यम् । पा० ।

**जानुकः**—एतावद्युज्यते । [ एत्तके जुज्जइ ]

**नागरकः**—धीवर ! महत्तरः साम्प्रतमस्माकं प्रियवयस्यः संवृत्तोऽसि कादम्बरीसाक्षिकं[1] खलु प्रथमसौहार्दमिष्यते, तदेहि शौण्डिकालयमेव गच्छामः । ( इति निष्क्रान्ताः सर्वे । )

[ धीवल ! महत्तले शम्पदं अह्माणं पिअ-वअश्शके शंवुत्तेशि, कादम्ब-लीशक्खिकेक्खु पढमं शोहिदे इच्छीअदि । ता एहि, शुण्डिआलअं ज्जेव गच्छह्म । ]

॥ प्रवेशकः[2] ॥

( [3]ततः प्रविशत्याकाशयानेन सानुमती[4]– )

**सानुमती**—निर्वर्त्तितं मया पर्य्यायनिर्वर्त्तनीयमप्सरस्तीर्थसान्निध्यं यावत् साधुजनस्याभिषेककाल इति । साम्प्रतमस्य

---

मिति विनयप्रदर्शनाय। एतद्युज्यते = युक्तमेतत्तवेति उत्कोचप्रीतस्योक्तिः। महत्तरः = अतिमहान्, संवृत्तोऽसि = जातोऽसि, कादम्बरीसाक्षिकं = सुरासाक्षिकं, प्रथमं–सौहृदं = मैत्री, मैत्रीप्रारम्भः सुरासाक्षिको भवतीति त्वयाऽस्माकं मैत्री तथैव सुरासाक्षिका भवत्विति भावः । "कादम्बरीसखित्वं प्रथमशोभित"मिति पाठान्तरे—एकत्र पानेन जाता मद्यमैत्री—प्रथम-शोभितम् = आदावुचितम्, अद्य यावन्न जातेति मैत्र्यां प्राथम्यं, शौण्डिकनिलयं = मद्यविक्रेतृगृहं, "शौण्डिको मद्यविक्रयी"त्यमरः । प्रवेशक इति । नीचपात्रप्रयोजितत्वात् ।

आकाशयानेन=विमानेन, सानुमतीति (मिश्रकेशीति वा) अप्सरोनामधेयम् । निर्वर्त्तितं = सम्पादितं, पर्यायेण निर्वर्त्तनीयं—पर्यायनिर्वर्त्तनीयं =

---

१ "कादम्बरीसखित्वमस्माकं प्रथमशोभितं" । शौण्डिकापणं,
२ 'अंकावतार' इति केचित् ।
३ कैश्चिदित एव षष्ठांकारम्भो मन्यते । ४ मिश्रकेशी'ति क्वचित् ।

राजर्षेर्वृत्तान्तं प्रत्यक्षीकरिष्यामि। ननु मेनकासम्बन्धेन शरीरभूता मे शकुन्तला, तथा च दुहितृनिमित्तं सन्दिष्टपूर्वास्मि। (समन्तादवलोक्य–) किन्नु खलु उपस्थितोत्सवेऽपि दिवसे निरुत्सवारम्भमिव इदं राजकुलं दृश्यते?। अस्ति मे विभवः सर्वं प्रणिधानेन ज्ञातुम्। किन्तु सख्या मयाऽऽदरो मानयितव्यः। भवतु, अनयोरेवोद्यानपालिकयोः पार्श्वपरिवर्त्तिनी भूत्वा तिरस्क-

---

क्रमशः सम्पादनीयं, वारक्रमेणानुष्ठेयम्, अप्सरस्तीर्थे सान्निध्यम् = अप्सरस्तीर्थे निवासः, यावत् = यावत्कालं, साधुजनस्य = धार्मिकलोकस्य, अभिषेककालः = स्नानसमयः। मज्जनस्नानकालं (प्रभातं) यावत्—एकैकस्मिन् दिवसे एकैकयाऽप्सरसा सन्निहितया स्थातव्यमिति नियमः, तत्राद्य मम पर्याय आसीत्स मयाऽनुष्ठितो यथावत्—इदानीं ततो लब्धोऽवकाश इति भावः। साम्प्रतम् = इदानीं, वृत्तान्तं = समाचारं, प्रत्यक्षीकरोमि = अनुभवामि। ननु–इति निश्चये, मेनकायाः सम्बन्धात् = मेनकापत्यतया, शरीरभूता = नितरां प्रिया, तथा च = मेनकया च, दुहितृनिमित्तं = स्वतनयार्थं—(शकुन्तलाऽर्थं,) पूर्वं सन्दिष्टा—सन्दिष्टपूर्वा = दत्तसन्देशाऽस्मि। 'शकुन्तलामनोविनोदार्थं राज्ञो दुष्यन्तस्य वृत्तान्तस्त्वया विलोक्य कथनीय' इति मेनकया स्वपुत्रीप्रेम्णा निवेदितास्मीति भावः। समन्ताद्विलोक्याह—किन्विति।

उपस्थित उत्सवो यस्मिन्, तस्मिन्—उपस्थितोत्सवे = सन्निहितवसन्तमहोत्सवेऽपि, दिवसे = समये, उत्सवान्निर्गतः—निरुत्सव आरम्भो यस्य तत्—निरुत्सवारम्भम् = उत्सवशून्यव्यापारं, राजकुलं = राजगृहं, प्रणिधानेन = समाधिना, ज्ञातुं विभवः = सामर्थ्यं, मे यद्यप्यस्ति, तथापि सख्याः=मेनकायाः, आदरः = आग्रहः, 'स्वचक्षुषा सर्वं विलोक्य राजकुलवृत्तान्तो वर्णनीय' इति तन्निर्बन्धः। मानयितव्यः = परिपालनीयः। अतो न समाधिना विभावयामि, किन्तु लोचनाभ्यामेव पश्यामीत्याशयः। उद्यान-

रिण्या विद्यया प्रच्छन्ना उपलप्स्ये। (इति नाट्येनावतीर्य स्थिता।)

[ णिव्वत्तिदं मए पज्जाअणिव्वत्तणिज्जं अच्छरात्तित्थसन्निदट्टं, ता जाव साहुजणस्स अहिसेअकालो भवे। दाव सम्पदं इमस्स राएसिणो वुत्तन्तं पच्चक्खीकरिस्सं। णं मेणआसम्बन्धेण सरीरभूदा दाणिं मे सउन्तला, तए अ दुहिदुणिमित्तं सन्दिट्टपूव्वह्मि। किण्णु क्खु उवत्थिदुच्छवेवि दिअहे णिरुच्छवारम्भं विअ एदं राअउलं दीसदि। अत्थि मे विहवो सव्वं पणिधाणेण जाणिदुं, किन्तु सहीए मए आदरो माणदव्वो। भोदु, इमाणं ज्जेव उज्जाणवालआणं पास्सपरिवत्तिणी भविअ तिरक्करिणीए विज्जाए पच्छण्णा उवलहिस्सं।

(ततः प्रविशति चूतांकुरमालोकयन्ती चेटी तत्पृष्ठेऽपरा च।)

**प्रथमा**—कथमुपस्थितो मधुमासः ?

[ कधं उवत्थिदो महुमासो। ]

**आताम्रहरितपाण्डुर! जीवित! सत्यं वसन्तमासस्य।**
**दृष्टोऽसि चूतकोरक! ऋतुमङ्गल! त्वां प्रसादयामि ॥२॥**

---

पालिकयोः = उपवनरक्षिकयोः, पार्श्ववर्त्तिनी = निकटस्थिता, तिरस्करिण्या विद्यया = अन्तर्धानविद्यया, उपलप्स्ये = ज्ञास्यामि।

अवतीर्य = गगनतलादवतीर्य, स्थिता = निकटे—निगूढं स्थिता। चूताङ्कुरम् = आम्राङ्कुरं, चेटी = दासी, तत्पृष्ठे = दासीपृष्ठे, अपरा = द्वितीयापि चेटी। कथमुपस्थित इति। स्वहृदयामन्त्रणमेतत्। मधुमासः, = वसन्तमासः, चैत्र इति यावत्। कुत एतज्ज्ञातमत आह—

आताम्रेति। आताम्रश्चासौ हरितश्च, पाण्डुरश्च तत्सम्बुद्धौ—हे आताम्रहरितपाण्डुर! 'आम्रो हि मुखे ईषद्रक्तः, अन्यत्र किञ्चिद्धरितः, पाण्डुरवर्णश्च भवत्येव, वसन्तमासस्य—(पाठान्तरे—वसन्तमासयोश्च) सत्यं जीवित! = तथ्यं प्राणभूत! आम्राङ्कुरो हि सर्वातिशायी वसन्तमाससर्व-

[1]आतम्महरिअवेरण्टं उस्ससिअं विअ वसन्तमासस्स ।
दिट्टं चूअङ्कुरअं छणमङ्गलं निअच्छामि ।

द्वितीया—परभृतिके ! किमेतदेकाकिनी मन्त्रयसे ?।

[ परहुदिए ! किं एदं एआइणी मन्तेसि । ]

प्रथमा—मधुकरिके ! चूतकलिकां प्रेक्ष्योन्मत्ता खलु परभृतिका भवति ।

[महुअरिए ! चूअकलिअं पेक्खिअ उम्मत्तिआ क्खु परहुदिआ होदि ।]

द्वितीया—( सहर्षं त्वरया उपगम्य – ) कथमुपस्थितो मधुमासः ! [ कधं उवत्थिदो महुमासो ! ]

---

स्वायते। हे चूतकोरक = हे आम्रकोरक ! "कलिका कोरकः पुमान्" इत्यमरः । [ आम्रकोरकः = 'चूतमञ्जरी–लक्षणया । दृष्टोऽसि = प्रथममेव दृष्टोऽसि । हे ऋतुमङ्गल ! = [ऋतोर्वसन्तस्य मङ्गलमिव मङ्गलं तत्सम्बुद्धौ रूपम् । आदावुद्भवान्मङ्गलत्वारोप आम्रकोरके । त्वां प्रसादयामि = त्वां प्रणमामि, अनुकूलयामि वा [ उत्प्रेक्षा, 'गाथा' । ] ॥ २ ॥

परभृतिकेति प्रथमचेटीनामधेयम् । एकाकिनी = स्वयमेव, मन्त्रयसे = आलपसि । मधुकरिकेति द्वितीयस्याश्चेट्या नामधेयम् । चूतस्य कलिकां कोरकं, परभृता एव—परभृतिका = कोकिला, चेटी च, वसन्ते कोकिला चूताङ्कुरं दृष्ट्वा यथा हृष्यति, तथा—अहमपि परभृतिका नामसाम्यात्कोकिला—आम्रं दृष्ट्वा प्रहृष्यामि, उन्मत्ता = हर्षतरला । कथं = किम् ?

---

१ "अताम्रहरितवृन्तमुच्छ्वसितमिव वसन्तमासस्य ।
दृष्टं चूतांकुरकं, क्षणमंगल्यं नियच्छामि । पा० ।
वृन्तं–फलाग्रभागः, तद्बन्धनं च । उच्छ्वसितं—प्राणाः । क्षणे—उत्सवे, मंगल्यं—मंगलाशंसि, नियच्छामि—निरिच्छनोमि, प्रणमामि, गृह्णामि वा ।

**प्रथमा**—मधुकरिके! तवापि एष कालो मदविभ्रम्भोद्गीतानाम्। [ महुअरिए ! तवावि एसो कालो मदविब्भमुग्गीदाणं। ]

**द्वितीया**—सखि! अवलम्बस्व माम्, यावदग्रपदे परिस्थिता भूत्वा चूतप्रसवं गृहीत्वा सम्पादयामि कामदेवस्यार्चनम्। [ सहि ! अवलम्बस्स मं, जाव अग्गपदे परिट्ठिदा भविअ चूअप्पसवं गेह्णिअ सम्पादेमि कामदेवस्स अच्चणं। ]

**प्रथमा**—यद्येवं, तन्ममाप्यर्द्धमर्चनफलस्य।

**द्वितीया**—सखि! अभणितेऽप्येतत् सम्पद्यत [1]एव।

मधुकर्येव मधुकरिकेति व्युत्पत्तेः, मधुकरिका भ्रमर्यपि नामसादृश्यादत आह—**तवेति**। तव = मधुकरिकायाः, भ्रमर्याश्च! एषः = वसन्तसमयः। मदेन यो विभ्रमस्तेन—उद्गीतानां—मदविभ्रमोद्गीतानाम् = उन्मदसविलासोच्चैर्गीतानां, कालः = उचितः समयः। भ्रमरी किल वसन्ते सहकारकोरकेषु मञ्जरीषु च भ्राम्यन्ती सविभ्रमं कलं गायति, अवलम्बस्व = कराग्रेणावलम्बनं देहि। पदयोरग्रे—इत्यग्रपदे=पादाङ्गुलीसमाश्रयेण, परिस्थिता = उन्नता, चूतस्य प्रसवम् = चूतमञ्जरीम्, आम्रस्य प्रांशुलभ्यत्वाद्बालायास्तल्लाभायाग्रपदावस्थितिरुचितैव, अभिनवचूतमञ्जरीभिः कामार्चनं मदनोत्सवे भवतीति लोकसमयः। यदि कामार्चनायावचिनोषि चूतप्रसवं, तर्हि अर्चनफलस्य = कामपूजाफलस्य, अर्धं = भागमर्धं देहि—तदा तव साहाय्यमाचरामीति भावः। अभणितेऽपि = अनाख्यानेऽपि, इदं = फलार्धं कामदेवपूजायाः, द्विधा भिन्नं = द्विधा कृतमिव[1], स्नेहातिशयदर्शनादेवेत्याशयः, अवलम्ब्य = पतनभयात्तामवलम्ब्य पदाग्रोन्नता भूत्वा। 'अम्महे' इति हर्षे देशी। अप्रबुद्धः = कोमलः,

१ 'एकमेव नौ जीवितं, द्विधाभूतं शरीरम्'—पा०

यत एकमेव नौ एतत् शरीरं द्विधा भिन्नं प्रजापतिना । ( सखीमवलम्ब्य चूतप्रसवं गृहीत्वा— ) अम्महे ! अप्रबुद्धोऽपि चूतप्रसवो बन्धनभङ्गसुरभी राजते। (कपोतहस्तं कृत्वा—) नमो भगवते मकरध्वजाय ।

[ सहि ! अभणिदे वि एदं सम्पज्जइ एव्व । जदो एक्कं ज्जेव णो एदं सरीरं द्विधा भिण्णं पज्जावइणा । अम्महे ! अप्पबुद्धोवि चूअप्पसवो बन्धणभङ्गसुरही राअदि । णमो भअवदे मअरद्धजाअ । ]

अर्हसि मे चूताङ्कुर ! दत्तः कामस्य गृहीतचापस्य ।
'पथिकजनयुवतिलक्ष्यः पञ्चान्तरितः शरो भवितुम् ॥३॥

[ अरिहसि मे चुअङ्कुर ! दिण्णो कामस्स गहिदचावस्स ।
पहिअण्जणजुअइलक्खो पञ्चन्तरिओ सरो होदुं ॥३॥

अभिनवः, बन्धनस्य—वृन्तस्य—भङ्गेन त्रोटनेन, सुरभिः = सुरभितः, राजते = शोभते । प्रसवबन्धनभङ्गस्थानात्सौरभं वमन्निव शोभतेतमामित्याशयः। कपोतहस्तं = हस्तयोरञ्जलिं बध्वा "उभाभ्यामपि हस्ताभ्यामन्योऽन्यं पार्श्वसङ्ग्रहात् । हस्तः कपोतको नाम" "एष विनयाभ्युपगमे, प्रणामकरणे, गुरोश्च सम्भाषे"—इति भरतः । भगवते = सर्वशक्तिमते मकरो ध्वजे यस्य तस्मै—मकरध्वजाय = कामाय ।

त्वमसीति । हे चूताङ्कुर = आम्रप्रसव ! चूतमञ्जरि ! गृहीतश्चापो येन तस्मै—गृहीतचापाय = धनुर्द्धराय । मानिनीमानभञ्जनसन्नाहशालिने, कामाय = मदनाय,[2] मे=मया, दत्तः–अर्पितः–त्वं परि=सर्वतोभावेन कुपिता युवतयो लक्ष्यं यस्यासौ–परिकुपितयुवतिलक्ष्यः = मानिनीजनमानभेदनः, पञ्चभ्योऽधिकः – पञ्चाभ्यधिकः=पञ्चशरव्यतिरिक्तः । कार्यस्यामोघः साधकः सायको–भव, सर्वशरश्रेष्ठो भव, आशुकार्यकारित्वादिति भावः । 'पथिकजनयुवतिलक्ष्यः'–इति पाठे·पथिकजनानां युवतयो लक्ष्यं यस्यासौ तथा, विरहिणीहृदयविदारक इति तदर्थो बोध्यः 'अर्हसी'ति पाठे—भवितुम-

१ परिकुपितयुवतिलक्ष्यः । २ प्राकृते विभक्तिव्यत्ययः

**कञ्चुकी**—(अपटीक्षेपेण प्रविश्य सक्रोधम्–) मा तावदनात्मज्ञे !, देवेन प्रतिषिद्धेऽपि मधूत्सवे चूतकलिकाभङ्गमारभसे ? ।

**उभे**—( भीते– ) प्रसीदतु प्रसीदतु आर्य्यः, अगृहीतार्थे आवाम् । [ पसीददु पसीददु अज्जो, अगहिदत्था अह्मे । ]

**कञ्चुकी**—हुँ, न किल श्रुतं भवतीभ्यां यद्वासन्तिकैस्तरुभिरपि देवस्य शासनं प्रमाणीकृतं तदाश्रयिभिःपत्रिभिश्च । तथाहि—

---

हंसीति योजना बोध्या । 'गृहीतधनुष' इत्यनेन सर्वेषां शराणां कुण्ठिततया त्वां प्रतीक्षमाणः स्मरोऽत्र तिष्ठति, तत्कुरु मानिनीमानखण्डनकर्मणि स्मरस्य साहाय्यमिति व्यज्यते । कामस्य—"अरविन्दमशोकञ्च शिरीषं चूतमुत्पलं, पञ्चैतानि प्रकीर्त्यन्ते पञ्चबाणस्य सायकाः"—इति पञ्च बाणाः । 'गृहीतधनुषे' इत्यनेन कामस्य सज्जत्वं ध्वन्यते । चूताङ्कुरं दृष्ट्वा मानिन्यो मानं रक्षितुं न शक्नुवन्तीति वसन्तसमयस्योद्दीपकतातिशयो ध्वन्यते ॥३॥

अपटीक्षेपेण = जवनिकां तिरस्कृत्य, "नासूचितस्य पात्रस्य प्रवेशो निर्गमोऽपि च" त्युक्तावपि क्रोधसूचनाय जवनिकाऽपसारणपूर्वकं कञ्चुकी प्रवेशितः । 'मा ताव'दिति निषेधे भिन्नं वाक्यम्, अनात्मज्ञे = स्वस्वरूपानभिज्ञे, राजचित्तानभिज्ञे ! जड़े ! इति वा, "आत्मा चित्ते धृतौ यत्ने" इत्यजयः = देवेन = राज्ञा, मधूत्सवे=वसन्तोत्सवे, चूतस्य कलिकाया—भङ्गं त्रोटनम्, आचरसि = कुरुषे । भीते इति । भयतरले, उभे–ऊचतुरित्यर्थः । अगृहीतोऽर्थो याभ्यां ते–अगृहीतार्थे = अज्ञातराजशासने, । 'हुम्'–इति, वितर्के प्रश्ने वा, "हुं वितर्के परिप्रश्ने" इत्यमरः । वसन्ते भवैर्वासन्तिकैः, तरुभिः = पादपैः, अपिशब्दाल्लोकैरिति लभ्यते । देवस्य = राज्ञो दुष्यन्तस्य, शासनम् = आज्ञा, उत्सवनिषेधरूपा । प्रमाणीकृतं = स्वीकृतमिव, तदाश्रयिभिः = वसन्ततरूपजीविभिः । पत्रिभिः = कोकिलादिभिः ।

चूतानां चिरनिर्गतापि कलिका बध्नाति न स्वं रजः,
सन्नद्धं यदपि स्थितं कुरबकं तत्कोरकावस्थया ।
कण्ठेषु स्खलितं गतेऽपि शिशिरे पुंस्कोकिलानां रुतं,
शङ्के संहरति स्मरोऽपि चकितस्तूणार्द्धकृष्टं शरम् ॥४॥

चूतानामिति । चूतानाम्—आम्राणां, चिरान्निर्गता—चिरनिर्गताऽपि=चिरादुद्भिन्नाऽपि, कलिका = लक्षणया—मञ्जरी । (न कोरको बाधात्) स्वं रजः = परागं, न बध्नाति = न प्रकटयति । यथा कापि बाला प्रौढावस्थां गताऽपि रजोदर्शनं न याति तद्वदाम्रमञ्जरीयं बह्वोः कालादपि रजो न प्रकटयतीत्यर्थः । संनद्धं = वृन्ताद्बहिर्निर्गतमपि, यत् कुरबकं = शोणकुरण्टकपुष्पं, तत्—कोरकावस्थया = कलिकावस्थया, स्थितं सन्न विकसतीत्यर्थः । शिशिरे=शिशिरर्त्तौ गतेऽपि, वसन्तप्रारम्भे जातेऽपि-पुमांसश्च ते कोकिलाश्च तेषां—पुंस्कोकिलानां—कोकिलयूनां, रुतं = शब्दः, कण्ठेषु = गलबिलेष्वेव, स्खलितं = रुद्धप्रसरं, कोकिलाध्वनिरपि न प्रपञ्चमञ्चतीति भावः । अत एव स्मरः = कामोऽपि, चकितः = भीतभीत इव, तूणादर्धकृष्टं = निषङ्गादर्धमाकृष्टमपि, शरं = बाणं, मन्ये = शङ्के, संहरति = स्वतूणीर एव स्थापयतीव । कामशरस्थानीयानि पुष्पाणि—अर्धमुद्भिद्यैव स्थितानि न प्रसरप्रपञ्चमारचयन्ति, ततो ज्ञायते—काम एव—किञ्चिदुद्भिन्नतयाऽर्धाकृष्टान् पुष्पाण्येव बाणान्—प्रतिसंहरति, राजभयादिति भावः । पुष्पाणां रजोबन्धाद्यभावात्कामशरोपसंहारोऽत्र सम्भावित इति तत्त्वम् । [कारणस्य चिरनिर्गतत्वादेः सत्त्वेऽपि कार्यस्य रजोबन्धस्याभावान्मालाविशेषोक्तिः । कामस्य भीतत्वादेः सम्भावनादुत्प्रेक्षा । काव्यलिङ्गञ्च-कामस्य पुष्पशरतया तेषाञ्चार्धमुद्भेदान्मदनशरसंहारे पादत्रयवाक्यार्थानां हेतुत्वात् । शार्दूलविक्रीडितम् ।] ॥ ३ ॥

**सानुमती**—नास्त्यत्र सन्देहः, महाप्रभावः खलु राजर्षिः।
[ णत्थि एत्थ सन्देहो, महापष्पहावो क्खु राएसी । ]

**प्रथमा**—आर्य्य ! कतिचिद्दिवसान्येवावयोर्मित्रावसुना राष्ट्रियेण भट्टिनीपादमूलं प्रेषितयोः, इह प्रमदवने चित्रकर्म्म अर्पयितुम्[1], तदागन्तुकतया न श्रुतपूर्व आवाभ्यामेष वृत्तान्तः।

[ अज्ज ! कदिचिदिअसाइं मित्तावसुणा रट्ठिएण भट्टिणो पादमूलं पेसिदा अह्मे इध पमदवणे चित्तकम्म अप्पिदुं। ता आगन्तुअदाए ण सुदपुव्वो अह्मोहिं एसो वुत्तन्तो । ]

**कञ्चुकी**—भवतु, तेन हि न पुनरेवं प्रवर्त्तितव्यम् ।

---

अत्र = अचेतनैरपि राजाज्ञायाः परिपालने, 'खलु'—निश्चये, महान् प्रभावो यस्यासौ—महाप्रभावः = दिव्यशक्तिर्देवराजस्यापि बहुमतः, राजर्षिः = दुष्यन्तः, आर्येति कञ्चुकिसम्बोधनम्। कति चिद् दिवसानि = कियन्त्येवाहानि जातानि, आवयोः = मधुकरिका-परभृतिकयोः, राष्ट्रियेण = राजश्यालकेन, "राजश्यालस्तु राष्ट्रिय" इत्यमरः। भट्टिन्याः = स्वामिन्याः वसुमत्याः, कस्याश्चिद्राजवल्लभाया वा। "देवीकृताभिषेकायामितरासु तु भट्टिनी"त्यमरः। पादयोर्मूलं पादमूलं=चरणान्तिकं, प्रेषितयोः = प्रहितयोः। अत्र राजधान्यामागतयोरावयोरल्पीयानेव समयो जात इत्याशयः। प्रमदवनस्य = अन्तःपुरोद्यानस्य, पालनकर्म = रक्षणकार्यं, 'चित्रकर्मे'ति पाठे नाना भङ्गिभेदेन तरूणां श्रेणिवन्ध इत्यर्थः। नौ = आवाभ्यां, समर्पितं = दत्तम्। तत् = तस्मात्—आगन्तुकतया = सद्य एव सम्प्राप्तया, अश्रुतपूर्वः, = इतः पूर्वमश्रुतः, एषः = मधूत्सवनिषेधानुवन्धी, वृत्तान्तः = कथाप्रसङ्गः, भवतु = यज्जातं तज्जातं, न पुनरेवम् = मधूत्सवकामपूजनादौ, प्रवर्त्तितव्यं = तत्र नादरो विधेयः। सकौतूहलं = साश्चर्यं, महोत्सवनिषेधादाश्चर्यमुभयोर्ज्ञेयम्। आर्य = कञ्चुकिन्! यदि—अनेन जनेन = अस्म-

---

१ 'इत्थं चनौ प्रमदवनस्य पालनकर्म समर्पितं।

उभे—( सकौतूहलम्– ) आर्य्य ! यद्यनेन जनेन श्रोतव्यम्, तत्कथयतु आर्य्यः किं निमित्तं भर्त्रा वसन्तोत्सवः प्रतिषिद्ध इति ? ।

[ अज्ज ! जइ इमिणा जणेण सोदव्वं, ता कधेदु अज्जो किं णिमित्तं भट्टिणा वसन्तुच्छवो पडिसिद्धोत्ति । ]

सानुमती—उत्सवप्रियाः खलु राजानो भवन्ति, तदत्र गुरुणा कारणेन भवितव्यम् ।

[ उच्छवप्पिआ क्खु राआणो होन्ति, ता एत्थ गुरुणा कारणेन होदव्वं । ]

कञ्चुकी—( स्वगतम्– ) बहुलीभूतोऽयमर्थः, तत्किं न कथ्यते । ( प्रकाशम्– ) अस्ति भवत्योः कर्णपथमायातं शकुन्तला-प्रत्यादेशकौलीनम् ? ।

उभे—आर्य्य ! श्रुतं राष्ट्रियमुखादङ्गुलीयकदर्शनं यावत् ।

[ अज्ज ! सुदं रट्ठिअमुहादो अङ्गुलीअदंसणंजाव । ]

कञ्चुकी—( स्वगतम्– ) तेन हि स्वल्पं कथयितव्यम् ।

---

जनेन, श्रोतव्यं, यदि—अस्मच्छ्रवणयोग्यमिति यावत् । किंनिमित्तं = केन हेतुना, उत्सवः प्रियो येषान्ते–उत्सवप्रियाः = उत्सवप्रवणाः, अत्र = उत्सवनिषेधे, गुरुणा = महता, कारणेन = हेतुना । अयमर्थः = उत्सव-निषेधवृत्तान्तः, बहुलीभूतः = सर्वजनविदितः, न गोपनीय इति यावत् । "अदभ्रं बहुलं बहु"–इत्यमरः । किं न कथ्यत इति । कथने न दोषं पश्यामीति भावः । कर्णयोः पन्थाः—कर्णपथस्तं = श्रवणगोचरीभूतं, शकु-न्तलायाः प्रत्यादेशात् कौलीनं–शकुन्तलाप्रत्यादेशकौलीनं = शकुन्तलाप्रत्या-ख्यानादुत्थितो लोकापवादः, "स्यात्कौलीनं लोकवाद" इत्यमरः । राष्ट्रिय-मुखात् = राजश्यालकमुखात्, अङ्गुलीयकदर्शनं यावत्=तत्पर्यन्तो वृत्तान्तः-श्रुतमिति योजना । तेन = प्रभूतस्य वृत्तान्तस्य श्रुतत्वात्, अल्पम् =

( प्रकाशं- ) यदैवाङ्गुलीयदर्शनादनुस्मृतं देवेन सत्यमूढपूर्वा रहसि मया तत्रभवती शकुन्तला मोहात्प्रत्यादिष्टेति, तदा प्रभृत्येव पश्चात्तापमुपगतो देवः । तथाहि— भ्रम से लौटा दिया।

रम्यं द्वेष्टि यथा पुरा प्रकृतिभिर्न प्रत्यहं सेव्यते,
शय्योपान्तविवर्त्तनैर्विगमयत्युन्निद्र एव क्षपाः ।
दाक्षिण्येन ददाति वाचमुचितामन्तःपुरेभ्यो यदा
गोत्रेषु स्खलितस्तदा भवति च व्रीडावनम्रश्चिरम् ॥५॥

अल्पोंऽशः, मे = मया, "ते-मे शब्दौ निपातौ तथा-मयेत्यर्थे" इति वामनः । रहसि = विजने । सत्यम् = वस्तुतः, पूर्वमूढा—ऊढपूर्वा = विवाहिता, तत्र भवती = तपस्विनी, शकुन्तला, मोहात् = अज्ञानादेव, प्रत्यादिष्टा = 'न मे त्वं पत्नी'ति निराकृता,—इति यदैव स्वाङ्गुलीयकदर्शनादनुस्मृतं = स्मृतं, देवेन = राज्ञा, तदा प्रभृत्येव = तत आरभ्यैव, देवः पश्चात्तापम्—अनुशयमुपगतः = प्राप्तवान्—इति–योजना ।

रम्यमिति । रम्यं = मनोहारि स्रक्चन्दनगीतवादित्रादिकं, द्वेष्टि = द्रष्टुमपि नेच्छति, दुःखानुभवात् । दुःखिते हि मनसि सर्वमसह्यं भवतीति प्रसिद्धेः । एतेनोद्वेगाख्यावस्था सूचिता । पुरा यथा = पूर्ववत्—प्रकृतिभिः = अमात्यपौरश्रेण्यादिभिः, "स्वाम्यमात्यसुहृत्कोशराष्ट्रदुर्गबलानि च । राज्याङ्गानि प्रकृतयः, पौराणां श्रेणयोऽपि चे"त्यमरः । प्रत्यहं न सेव्यते = नान्वास्यते, चित्तस्य पारवश्यात्प्रकृतिभिर्मन्त्रणादिकं राजकार्यं न यथावदनुतिष्ठतीति भावः । उन्निद्रः = अरत्या निद्राशून्यः—अत एव, शय्यायाः प्रान्तेषु विवर्त्तनैः-शय्याप्रान्तविवर्त्तनैः = शयनीयपर्यन्तभागलोठनपार्श्वपरिवर्त्तनादिभिः, क्षपाः = रात्रीः, विगमयति = अतिवाहयति, न तु-विदग्धकामिनीसेवनादिभिरिति–सन्तापोऽनेन सूचितः ।

अन्तःपुरेभ्यः = अवरोधललनाभ्यः, आकारगोपनार्थं दाक्षिणयेन =

**सानुमती**—प्रियं मे प्रियम्। [ पिअं मे पिअं। ]

**कञ्चुकी**—अस्मात्प्रभवतो वैमनस्यादुत्सवः प्रत्याख्यातः।

**उभे**—युज्यते। [ जुज्जदि। ]

( नेपथ्ये- ) एतु एतु भवान्। [ एदु एदु भवं। ]

**कञ्चुकी**—( कर्णं दत्वा— ) अये ! इत एवाभिवर्त्तते देवः, तद्गच्छतं स्वकर्म्मानुष्ठानाय।

**उभे**—तथा। ( इति निष्क्रान्ते ) [ तह। ]

---

चातुर्येण-उचितां = तत्तत्कालयोग्यां, वाचं = वचनं, ददाति, अन्यासक्त-मना अपि दाक्षिण्येन स्वाकारं निह्नुवानोऽन्तःपुरकान्ताभ्यो वाचमुचितामेव प्रयच्छति। यदा गोत्रेषु = नामसु, 'गोत्रं तु नाम्नि चे'त्यमरः। स्खलितः = विपर्यस्तः, यदा-वसुमतीनामोच्चारणावसरे शकुन्तलानामोच्चारयति,-तदा-चिरं व्रीडाविलक्षः = लज्जाविस्मयान्वितः, 'विलक्षो विस्मयान्वित' इत्यमरः। स्वाशयस्य प्रकाशनादपत्रपान्वितो भवतीत्याशयः। उन्मादाख्याऽवस्थाऽनेन सूचिता। दाक्षिण्येन यदा वाचं ददाति तदा गोत्रेषु स्खलितः सन् व्रीडा-हतबुद्धिर्भवतीति वा—योजना [ 'गोत्रस्खलितं' नाम सन्ध्यङ्गम्। पश्चा-त्तापादिके कारणे वक्तव्ये रम्यद्वेषादिकं कार्यमुक्तमतः पर्यायोक्तं, काव्य-लिङ्गम्, अनुप्रासः, शार्दूलविक्रीडितम्। ] ॥ ५

प्रियं=शकुन्तलाऽनुरागवानयमिति निश्चयात्। अस्मात्=शकुन्तलाविरहात् कारणात्, प्रभवतः = वर्द्धमानात्, वैमनस्यात् = उद्वेगात्, उत्सवः प्रत्या-ख्यातः = निराकृतः। 'द्युति'र्नाम विमर्शसन्ध्यङ्गं-कञ्चुकीप्रवेशादारभ्यै-तदन्तेन प्रदर्शितं, "तर्जनोद्वेजने द्युतिः" इति धनिकोक्तेः। छलनं च सन्ध्यङ्गं "छलनं चावमानन"मित्युक्तेः, ( अवमाननम् = उत्सवादिप्रत्याख्यानम्। ) इत एव = अमुमेव वनोद्देशम्, अभिवर्त्तते = आगच्छति, द्वितीयान्ता-त्सार्वविभक्तिकस्तसिल्, स्वस्य कर्मण अनुष्ठानाय = स्वकार्यसम्पादनाय।

( ततः प्रविशति पश्चात्तापसदृशवेशो राजा विदूषकः, प्रतीहारी च । )

कञ्चुकी—( राजानं विलोक्य— ) अहो ! सर्वास्ववस्थासु रामणीयकमाकृतिविशेषाणाम्, तथाह्येवं वैमनस्यपरीतोऽपि प्रियदर्शनो देवः । य एषः—

प्रत्यादिष्टविशेषमण्डनविधिर्वामप्रकोष्ठे श्लथं
बिभ्रत्काञ्चनमेकमेव वलयं श्वासोपरक्ताधरः ।
चिन्ताजागरणप्रताम्रनयनस्तेजोगुणैरात्मनः
संस्कारोल्लिखितो महामणिरिव क्षीणोऽपि नालक्ष्यते ॥६॥

पश्चात्तापस्य सदृशो वेषो यस्यासौ-पश्चात्तापसदृशवेषः = पश्चात्तापानुरूपवेषधारी, पश्चात्तापं नाटयन्निति यावत् । सर्वास्ववस्थासु = दुःखसुखादिशालिष्ववस्थान्तरेषु, रमणीयस्य भावो रामणीयकं = रम्यत्वम्, आकृतिविशेषाणाम् = आकृतिविशेषशालिनां, सुन्दराणाम्, अहो ! इति विस्मये । एवं वैमनस्येन परीतोऽपि = विरहोत्कण्ठितोऽपि, प्रियं दर्शनं यस्यासौ-प्रियदर्शनः = मनोहराकृतिः, । 'एष' इति श्लोकान्वयि—,

प्रत्यादिष्टेति । प्रत्यादिष्टो विशेषस्य मण्डनस्य विधिर्येनासौ तथा= निरस्तविशेषप्रसाधनविधिः, त्यक्तालङ्कार इति यावत् । वामश्चासौ प्रकोष्ठश्च तस्मिन्—वामप्रकोष्ठे = सव्यकूर्परमणिबन्धमध्ये,—श्लथं = कार्श्याद्विश्लथं, काञ्चनं = कनकमयम्, एकमेव वलयं = हस्तकटकं, बिभ्रत् = दधत्, वामहस्ते पुंसः कटकधारणस्य व्यवहारविरुद्धतया तत उन्मादावस्था सूचिता । श्वासेनोपरक्तमधरं यस्यासौ—श्वासोपरक्ताधरः = उष्णोष्णदीर्घश्वासपाटलिताधरोष्ठः, चिन्तया यज्जागरणं तेन प्रकर्षेण ताम्रे नयने यस्यासौ-चिन्ताजागरणप्रताम्रनयनः = शकुन्तलाचिन्तनजागरणरक्तलोचनः 'तान्तेति' पाठे—म्लानेत्यर्थः । एषः = दुष्यन्तः, क्षीणोऽपि = कृशोऽपि, आत्मनः तेजोगुणैः = शरीरप्रभाजालैः, संस्कारायोल्लिखितः = तेजोविशेषलाभाय-

सानुमती—(राजानं विलोक्य—) स्थाने खलु प्रत्यादेशविमानिताप्यस्य कृते शकुन्तला क्लिश्यति[1]। [ठाणे क्खु पच्चादेसविमाणि दावि इमस्स किदे सउन्तला किलिस्सदि ]।

राजा—(ध्यानमन्दं परिक्रम्य—)—

प्रथमं सारङ्गाक्ष्या प्रियया प्रतिबोध्यमानमपि सुप्तम्।
अनुशयदुःखायेदं हतहृदयं सम्प्रति विबुद्धम्! ॥७॥

शाणोल्लीढः, महामणिरिव = महारत्नमिव, न आलक्ष्यते = कृशतया ज्ञातुं न शक्यते। प्रभाविद्योतितदिगन्तरालस्य महामणेरिव (सूर्यस्येव वा) कृशाङ्गयष्टे राज्ञो वपुषः कार्श्यं तेजोमण्डलाच्छादितं सहसा न लक्ष्यत इति भावः। [चिन्तेति—सङ्कल्पः, जागरणान्निद्राच्छेदः, कृशता, प्रत्यादिष्टेति-विषयनिवृत्तिरिति कामदशा अपि सूचिताः, अनेन माधुर्यं नाम नायकगुणो दर्शितः, "तन्माधुर्यं यत्र गात्रदृष्ट्यादेः स्पृहणीयता। सर्वावस्थासु सर्वत्रे"ति सुधाकराद्युक्तेः। प्रवासविप्रलम्भे कामदशा दशान्या अपि, तदुक्तम्—"अङ्गेष्वसौष्ठवं चैव पाण्डुता, कृशताऽरुचिः। अधृतिः, स्यादनालम्बस्तन्मयोन्मादमूर्च्छनाः। मृतिश्चेति क्रमाज्ज्ञेया दश स्मरदशा इह" इति। तन्मतेऽङ्गासौष्ठवं—'प्रत्यादिष्टे'त्यनेन, 'क्षीण' इति कृशता, 'रम्यं द्वेष्टी'त्यादिनाऽरुचिः, गोत्रस्खलनादिना—तन्मयीभावः, 'दाक्षिण्येने'ति—अरतिश्च दर्शिता इति ध्येयम्। [उपमा, स्वभावोक्तिः, परिकरः, अनुप्रासाः, शार्दूलविक्रीडितम्।] ॥ ६ ॥

प्रत्यादेशेन विमानिता = प्रत्यादेशविमानिता = अस्वीकारापमानितापि, अस्य कृते = राज्ञो निमित्तं, शकुन्तला क्लिश्यति = विषादमनुभवतीति,—स्थाने खलु = युक्तमेव, अस्यापि तद्विरहे विधुरत्वात्, ध्यानेन मन्दं-ध्यानमन्दं=शकुन्तलाचिन्तया शनैः शनैः, एतेनालम्बनताख्या प्रवासकामदशा प्रदर्शिता।

प्रथममिति। सारङ्गस्येक्षणे इवेक्षणे यस्यास्तया-सारङ्गाक्ष्या = हरिण-

[1] 'क्लाम्यति'

**सानुमती**—नन्वीदृशानि तपस्विन्या भागधेयानि।
[ णं ईदिसाइं तवस्सिणीए भागधेआइं ]

**विदूषकः**—(अपवार्य्य—) हुं? भूयोऽपि लङ्घित एष शकुन्तलाव्याधिना[1], न जाने कथं चिकित्सितव्यो भविष्यति।

[ हुं, भूओवि लङ्घिदो एसो सउन्तलावादेण। ण आणे कधं चिकिच्छिदव्वो भविस्सदि ]।

**कञ्चुकी**—( उपसृत्य—[2]) जयति जयति देवः, देव!

---

लोचनया, प्रियया = शकुन्तलया, प्रतिबोध्यस्यमानमपि=बहुशो ज्ञाप्यमानमपि, प्रथमम् = आदौ, सुप्तम् = मोहमुपगतम्, सम्प्रति = प्रियावियोगे जाते अनुशय एव दुःखं तस्मै–अनुशयदुःखाय = पश्चात्तापक्लेशं दातुम्। इदं = मम हतहृदयं = हृदयहतकं, विबुद्धं = जागरितम्। [ विशेषोक्तिः पूर्वार्द्धे, विभावनोत्तरार्धे, उपमानुप्रासौ, ] ॥ ७ ॥

ईदृशानि = क्लेशदायकानि, भागधेयानि = भाग्यानि, तस्या भाग्यविपर्य्यथादेव राज्ञः–स्मृतिभ्रंशो जात इत्याशयः। तपस्विन्याः = वराक्याः, अनुकम्पार्हायाः। एषः = राजा, भूयोऽपि = पुनरपि, शकुन्तला एव व्याधिस्तेन–शकुन्तलारूपरोगेण, 'वातेने'ति–पाठे–तद्रूपवातरोगेणेत्यर्थः, उद्वेगजनकत्वात्स्मृतिभ्रंशोन्मादादिकारकत्वाच्च–शकुन्तलाया व्याधितया, वातव्याधितया वा कथनं–युक्तमेव। चिकित्सितव्यः = उपचरणीयः। उपसृत्य = समीपमागत्य, प्रत्यवेक्षिताः = सम्यगवलोकिताः, प्रमदवनस्य भूमयः = अन्तःपुरविहारारामभूमयः, "तदेव प्रमदवनमन्तः पुरोचित"मित्यमरः। यथाकामं = यथेच्छम्, विनोदस्थानानि = क्रीडास्थलीः, अध्यास्ताम्, अधितिष्ठतु। राज्ञो निश्शङ्कविहारार्थमारामादेः प्रत्यवेक्षणं—राजनीतिः।

---

१ 'शकुन्तलावातेन'—पा. २ 'उपगम्य'

प्रत्यवेक्षिताः प्रमदवनभूमयः। यथाकाममध्यास्तां विनोदस्थानानि देवः[1]।

**राजा**—वेत्रवति! मद्वचनादमात्यपिशुनं ब्रूहि,—"अद्य चिरप्रबोधान्न सम्भावितमस्माभिर्धर्म्मासनमध्यासितुम्, यत् प्रत्यवेक्षितं पौरकार्य्यमार्य्येण तत्पत्रमारोप्य प्रस्थाप्यताम्—"इति।

**प्रतीहारी**—यद्देव आज्ञापयति। (–इति निष्क्रान्ता।)
[जं देवो आणवेदि।]

**राजा**—पार्वतायन!—त्वमपि स्वनियोगमशून्यं कुरु।

**कञ्चुकी**—यदाज्ञापयति देवः (–इति निष्क्रान्तः।)

**विदूषकः**—कृतं भवता निर्म्मक्षिकम्, साम्प्रतं शिशिरातपच्छेदरमणीयेऽस्मिन् प्रमदवनोद्देशे आत्मानं रमयिष्यसि[2]।
[किदं भअदा णिम्मक्खिअं, सम्पदं सिसिरविच्छेअरमणीए इमस्सिं पमदवणुद्देसे अत्ताणं रमइस्ससि]।

---

अमात्यश्चासौ पिशुनश्च तम्—अमात्यपिशुनम् = पिशुनाख्यं महामन्त्रिणं, चिरं प्रबोधस्तस्मात् = चिरं जागरणात्, धर्मासनं = सिंहासनम्, अध्यासितुम् = अधिष्ठातुं, न सम्भावितमस्माभिः = न शक्यमस्माभिः, यत् पौराणां कार्यम् = अवश्यमाचरणीयं, प्रत्यवेक्षितम् = अनुष्ठितम्, आर्येण—भवता, तत् = कार्यं, पत्रमारोप्य = पत्रारूढं कृत्वा, प्रस्थाप्यतां = प्रेष्यताम्—इति–मद्वचनात् = मदाज्ञया ब्रूहीति–सम्बन्धः।

निष्क्रान्ता = वेत्रवती प्रतीहारी निर्गता। 'वातायने'ति कञ्चुकिनाम। स्वं नियोगं = स्वाधिकारम्, अशून्यं = यथावत्पर्यवेक्षितं, इतो बहिर्याहीति यावत्। निर्मक्षिकं = जनसम्बाधरहितं, शिशिरस्यातपस्य च च्छेदेन रमणीये = अनतिशीतोष्णमनोहरे, रमयिष्यसि = विनोदयिष्यसि। रन्ध्रो-

---

1 'महाराजः' 2 विनोदय

राजा—( निःश्वस्य— ) वयस्य ! यदुच्यते "रन्ध्रोपपातिनोऽनर्था" इति—तदव्यभिचारि वचः । पश्य—

मुनिसुताप्रणयस्मृतिरोधिना
मम च मुक्तमिदं तमसा मनः ।
मनसिजेन सखे ! प्रहरिष्यता
धनुषि चूतशरश्च निवेशितः ॥८॥

उपहितस्मृतिरङ्गुलिमुद्रया
प्रियतमामनिमित्तनिराकृताम् ।
अनुशयादनुरोदिमि चोत्सुकः
सुरभिमासमुखं समुपैति च ॥९॥

---

पूपनिपतन्ति तच्छीलाः—रन्ध्रोपनिपातिनः = छिद्रोपसर्पिणः, उच्यत इति । नीतिकुशलैरिति शेषः । "अव्यभिचारि = सत्यमेव, "छिद्रेष्वनर्था बहुलीभवन्ती"ति नीतिः । तदेवोपपादयति—मुनीति । मुनेः सुतायाः प्रणयस्य स्मृतिं रुणद्धि तच्छीलेन = शकुन्तलास्नेहस्मृतिविलोपिना, तमसा = अज्ञानेन, च—यदैव, मम मनो मुक्तं, = यदैव मोहेन मच्चित्तं मुक्तं, च = तदैव—प्रहरिष्यता = प्रहर्तुमुद्यतेन, मनसिजेन = कामेन, धनुषि—चूत एव शरः = आम्रमञ्जरीशरः, निवेशितः = आरोपितः । मम प्रिया-वियोगो जातः, इतो वसन्तकालश्च प्रादुर्भूतः, अहो ! अनर्थपरम्परा—इत्याशयः । [ समुच्चयः, अनुप्रासः, द्रुतविलम्बितम् । ] ॥ ८ ॥

अङ्गुलिमुद्रया = अङ्गुलीयकेन, उपहितस्मृतिः = आनीतस्मृतिः, च = किञ्च—अनुशयात्=पश्चात्तापात्, अनिमित्तं निराकृताम्—अनिमित्तनिराकृताम् =अकारणवमानितां, प्रियतमामनु=प्रेयसीं लक्ष्यीकृत्य, उत्सुकः=उत्कण्ठितः,

विदूषकः—भो वयस्य! तिष्ठ तावत्,—अनेन दण्डकाष्ठेन कन्दर्पबाणं [1]नाशयामि (–इति दण्डकाष्ठमुद्यम्य चूताङ्कुरं ताडयितुमिच्छति) [ भो वअस्स ! चिट्ठ दाव इमिणा दण्डकट्ठेणकन्दप्पवाणं णासेमि ]

राजा—( सस्मितम्— ) भवतु, दृष्टं ब्रह्मवर्च्चसं, सखे ! क्वेदानीमुपविष्टः प्रियायाः किञ्चिदनुकारिणीषु लतासु दृष्टिं विनोदयामि ? ।

विदूषकः—ननु [2]आसन्नपरिचारिका चतुरिका भवता सन्दिष्टा "—माधवीलतागृहे[3] इमां वेलामतिवाहयिष्यामि, तस्मिन् चित्रफलके मे स्वहस्तलिखितां तत्रभवत्याः शकुन्तलायाः प्रतिकृतिमानय—"इति । [ णं भअदा आसण्णपरिचारिआ लिविअरी मेहाविणी आदिट्ठा माहवीलदाघरए इमं वेलं अदिवाहिस्सं तहिं चित्तफलए मे सहत्थलिहिदं तत्थभोदीए सउन्तलाए पडिकिदिं आणेहि त्ति ] ।

---

रोदिमि = आक्रन्दामि, च = किञ्च–सुरभिमाससुखं = वसन्तोत्सवादिसुखं, समुपैति = समागच्छति । [ समुच्चयः, काव्यलिङ्गं, द्रुतविलम्बितम् ] ॥९॥

तिष्ठ तावत् = मा चिन्तां कुरु, दण्डकाष्ठेन = लगुडेन, कन्दर्पबाणं = चूताङ्कुरं, नाशयामि = पातयामि । सस्मितं = सहासं, ब्रह्मणो वर्चः–ब्रह्मवर्चसम् = ब्राह्मं तेजः । दृष्टं ते बलं, विरमास्माद्व्यापारादिति यावत् । कन्दर्परूपो व्याधिर्यस्मादिति कन्दर्पव्याधिश्चूताङ्कुर उच्यते ।

सखे ! माधव्यः, क्वोपविष्टः = क्व स्थित्वा, प्रियायाः = शकुन्तलायाः, किञ्चित् = स्वल्पम्, अनुकारिणीषु = सादृश्यशालिनीषु, दृष्टिं = लोचनं, विलोभयामि = विनोदयामि । आसन्ना चासौ परिचारिका च = स्वन्निकटवर्त्ती परिचारिकाप्रधानभूता । चतुरिकेति परिचारिका नाम, सन्दिष्टा = आदिष्टा, इमां वेलाम् = मध्याह्नसमयं, माधवीमण्डपे = वासन्तीमण्डपे,

---

[1] कन्दर्पव्याधिं [2] लिपिकरी मेधाविनी'० [3] 'माधवमिण्डपे' पा०

**राजा**—ईदृशमेव [1]हृदयविनोदस्थानं, [2]तत्तदेवादेशय माधवीलतागृहम्।

**विदूषकः**—इत इत एतु भवान्। (इत्युभौ परिक्रामतः।)
[इदो इदो एदु भवं।]
(मिश्रकेशी—अनुगच्छति।)

**विदूषकः**—एष मणिशिलापट्टसनाथो माधवीलतामण्डपो विविक्ततया उपहाररमणीयतया निसर्गमारुतेन च स्वागतेनेव प्रतीच्छति त्वाम्, तत् प्रविश्य निषीदतु भवान्। [एसो मणिसिलावट्टसणाहो माहवीलदामण्डवो विवित्तदाए उवहाररमणीअदाए णिसग्गमारुदेण अ साअदेण विअ पडिच्छिदि तुमं; ता पविसिअ निसीददु भवं।]
(उभौ—प्रविश्योपविष्टा।)

---

अतिवाहयिष्ये = गमयिष्ये। तत्र = मण्डपे, चित्रफलके—गतां = चित्रपटलिखितां, स्वहस्तेन लिखितां = मयैव लिखिताम्, अनेनादरातिशयः सूचितः। प्रतिकृतिं = प्रतिमाम्। आनयेति चतुरिका सन्दिष्टेति योजना। एवञ्च तत्रैव भवता गन्तव्यमिति भावः।

ईदृशं = माधवीमण्डपादिसदृशमेव, हृदयस्य विनोदस्य स्थानं = मनोविनोददायकं मे भविष्यति। तत् = तस्मात्, तदेव=माधलीलतामण्डपमेव, आदेशय = दर्शय, ईदृशं—शकुन्तलाचित्रमिति वाऽर्थः। परिक्रामतः = गच्छतः।

मणिशिलायाः पट्टेन सनाथः = मणिशिलाफलकशोभितः, विविक्ततया = एकान्ततया, उपहारेण रमणीयस्तस्य भावस्तया = पुष्पाद्युपहाररमणीयतया, निसर्गमारुतेन = मन्दमन्दपवनेन च, निस्संशयं = ध्रुवं, स्वागतेनेव = स्वागतशब्दमुच्चरन्निव, प्रतीच्छति = सत्कारमाचरन् प्रवेशयति' प्रतिगृह्णाति च। निषीदतु = उपविशतु।

---

१ 'हृदयाश्वासनं' २ 'तत्तमेव मार्गमादेशय'—पा०

**सानुमती**—लतासंश्रिता प्रेक्षिष्ये तावत् प्रियसख्याः प्रतिकृतिं, ततोऽस्या भर्तुर्बहुमुखमनुरागं[1] निवेदयिष्यामि। (-इति तथा कृत्वा स्थिता-) [ लदासंस्सिदा पेक्खिस्सं दाव पिअसहीए पडिकिदिं, तदो से भत्तुणे वहुमदं अणुराअं णिवेदइस्सं। ]

**राजा**—( निःश्वस्य। ) सखे! सर्वमिदानीं स्मरामि शकुन्तलायाः प्रथमदर्शनवृत्तान्तम्, यं किल कथितवानस्मि भवते। स भवान् प्रत्यादेशसमये मत्समीपगतो नासीत्, किन्तु पूर्वमपि न त्वया कदाचित् सङ्कीर्त्तितं तत्रभवत्या नामादिकम्!। कच्चिदहमिव विस्मृतवांस्त्वमपि ?।

**सानुमती**—अत एव महीपतिभिः क्षणमपि सहृदयाः सहाया न विरहितव्याः। [ अदो ज्जेव महीवदिहिं खणम्पि सहिअआओ सहाआओ ण विरहिदाव्वाओ। ]

**विदूषकः**—न विस्मरामि, किन्तु सर्वं कथयित्वाऽवसाने पुनस्त्वया भणितम्—'परिहासविजल्पित एषः,न भूतार्थ' इति, मयापि

---

लतासंश्रिता = लतानिविष्टा, सख्याः = शकुन्तलायाः, प्रतिकृतिं = प्रतिमाम्, अस्याः = अस्यै, बहुमुखं = अनेकप्रकारम्, प्रथमवृत्तान्तम् = प्रारम्भिकं वृत्तान्तं, भवते = विदूषकाय, प्रत्यादेशवेलायां = शकुन्तलानिराससमये, पूर्वमपि = आश्रमात्-प्रतिनिवृत्तेनेतः पूर्वं कदाचिदपि, तत्रभवत्याः = शकुन्तलायाः, सङ्कीर्त्तितम् = उच्चरितम्।

अहमिव त्वमपि शकुन्तलां विस्मृतवानसि कच्चिदिति—योजना। सहृदयाः = हितैषिणः, सहायाः=सखायः; परिचारकाश्च, विरहितव्याः=दूरीकरणीयाः। अवसाने=परिसमाप्तौ, परिहासविजल्पः=हास्येनोक्तं, न भूतार्थः =

---

१ 'बहुमतमनुरागं'।

मन्दबुद्धिना तथैव गृहीतम्। अथवा भवितव्यता खल्वत्र बलवती।
[ण विसुमरामि, किन्तु सव्वं कहिअ अवसाणे उण तुए भणिदं परिहासविअप्पिओ एसो ण भूदत्थोत्ति, मएवि मन्दबुद्धिणा तधा ज्जेव गहिदं। अधवा भविदव्वदा क्खु एत्थ वलवदी।]

**सानुमती**—एवमेतत्। [एवण्णेदं।]

**राजा**—(क्षणं ध्यात्वा-) सखे! परित्रायस्व माम्।

**विदूषकः**—भो वयस्य! किमेतत्तवोपपन्नम्?। न कदापि सत्पुरुषाः शोकचित्ता[2] भवन्ति। ननु प्रवातेऽपि निष्कम्पा एव गिरयः। [भो वअस्स! किं एदं तुह उववण्णं?। ण कदावि सप्पुरिसा सोअचित्ता होन्ति। णं पवादेवि णिक्कम्पाज्जेव गिरिओ।]

**राजा**—वयस्य! निराकरणविक्लवायाः प्रियायास्तामवस्थामनुस्मृत्य बलवदशरणोऽस्मि। सा हि—

इतः प्रत्यादिष्टा स्वजनमनुगन्तुं व्यवसिता,
स्थिता तिष्ठेत्युच्चैर्वदति गुरुशिष्ये गुरुसमे।

---

न तथ्यं वचः, आख्यातं=कथितं, मन्दबुद्धिना[1]=जडबुद्धिना, तथैव=परिहासविजल्पतया, गृहीतं=ज्ञातम्। अथवा=पक्षान्तरे, भवितव्यता = अवश्यम्भाविता भावानां, बलवती = प्रबला, एवमेतत् = सत्यमेवैतत्। क्षणं ध्यात्वा = शकुन्तलाया शोचनीयां दशां क्षणं ध्यात्वा। परित्रायस्व = रक्ष। एतत् = शोकाकुलत्वं, उपपन्नं? नैवेत्यर्थः। शोकचित्ताः = शोकातुरमनसः। प्रवाते = झञ्झावातेऽपि, निष्कम्पाः = अचलाः, एवं विरहदशायामपि निष्कम्पो भवेति भावः। निराकरणेन = परित्यागेन, विक्लवायाः = व्याकुलायाः, तां = प्रत्याख्यानसमयजां, प्रियायाः = शकुन्तलायाः, बलवदशरणः = दृढं व्याकुलः,

**इत इति**। इतः=अस्मात् प्रदेशात्, प्रत्यादिष्टा = निराकृता, स्वजन-

---

१. मृत्पिण्डबुद्धिना'। २ 'शोकवक्तव्याः' पा०। शोके सान्त्वनीया इत्यर्थः।

पुनर्दृष्टिं ¹बाष्पप्रकरकलुषामर्पितवती
मयि क्रूरे यत्तत्सविषमिव शल्यं दहति माम् ॥१०॥

सानुमती—²अहो ! ईदृशी परवशताऽस्य मामपि सन्तापयति। [अह्महे ! ईदिसी परवसदा इमस्स मम्पि सन्दावेदि।]

विदूषकः—भोः ! अस्ति मे तर्कः, केन पुनस्तत्रभवती आकाशसञ्चारिणा नीतेति।

[भोः ! अत्थि मे तक्को, केन उण तत्थभोदी आआससञ्चारिणा णीदे त्ति।]

राजा—वयस्य ! कः पतिव्रतां तामन्यः परामष्टुमुत्सहते। मेनका किल सख्यास्ते जन्मप्रतिष्ठेति तत्सखीजनादस्मि श्रुतवान् तत्सहचरीभिस्त्वया वा हृतेति हृदयमाशङ्कते।

सानुमती—³संमोहेऽपि विस्मयनीयः खल्वस्य प्रतिबोधः। [सम्मोहे वि विह्मअणीओ क्खु इमस्स पड़िबोधो]।

---

मनुगन्तुं व्यवसिता = प्रवृत्ता। गुरुसमे—गुरोः शिष्ये—शार्ङ्गरवे, तिष्ठेत्युच्चैर्वदति सति-स्थिता। पुनः मयि क्रूरे दुष्यन्ते, बाष्पप्रकरैः कलुषां = बाष्पभाराविलां, 'प्रसर' इति पाठेऽपि प्रसरः—आधिक्यम्, दृष्टिं यदर्पितवती = पातितवती, तत्—सविषं—विषदिग्धं—शल्यमिव=बाणमिव—"शल्यं शङ्कौ शरे" इति विश्वः। मां दहति = सन्तापयति।

मयाऽस्वीकृतायाः, शार्ङ्गरवभर्त्सितायाश्च कातरां तां दृष्टिं स्मृत्वा व्यथते मे मन इत्याशयः। [उपमा, शिखरिणी] ॥१०॥

अस्य = राज्ञः, परवशता = कातरता, तर्कः = विचारः, आकाशसञ्चारिणा = गगनचारिणा केनापहृतेति मे विचारो भवतीत्याशयः। परामष्टुं = स्प्रष्टुमपि, जन्मप्रतिष्ठा = उद्भवस्थानं, मातेत्यर्थः। तत्सहचरीभिः = मेनका-

---

१. 'बाष्पप्रसर'। २ 'ईदृशी स्वकार्यपरता, अस्य सन्तापे नाहं रमे' पा०
३ "संमोहः खलु विस्मयनीयो न प्रतिबोधः" पा०।

**विदूषकः**—भो ! यद्येवम्, तत्समाश्वसितु भवान्; अस्ति खलु समागमः कालेन तत्रभवत्याः । [ भो ! जइ एव्वं, ता समस्ससदु भवं ; अत्थि क्खु समागमो कालेण तत्थभोदिए ]

**राजा**—कथमिव ?।

**विदूषकः**—न खलु मातापितरौ भर्त्तृवियोगदुःखितां दुहितरं चिरं प्रेक्षितुं पारयतः ।

[ण क्खु मादापिदरा भत्तिविओअदुक्खिदं दुहिदरं चिरं पेक्खिदु पारेन्ति]।

**राजा**—वयस्य !—

स्वप्नो नु ? माया नु मतिभ्रमो नु ?
क्लृप्तं नु ? तावत् फलमेव पुण्यैः[1] ।
असन्निवृत्त्यै तदतीतमेव
मनोरथानामतटप्रपातः[2] ॥११॥

सखीभिः तया वा = मेनकया वा । सम्मोहे = स्मृतिविभ्रमेऽपि, प्रतिबोधः = प्रतिभा, आश्चर्यजनकोऽस्य बुद्धिप्रसर इति भावः । एवं = तत्सम्बन्धिभिर्नीतेति । समागमः = पुनरपि मिलनं, माता च पिता च— माता-पितरौ = पितरौ, भर्तुर्वियोगेन दुःखितां दुहितरं = पुत्रीं, चिरं = बहुकालं यावत्, तस्या माता त्वया सह तां पुनर्योजयिष्यतीति भावः ।

स्वप्न इति । तत् = शकुन्तलासम्भाषणादिकं पूर्वं कृतं, स्वप्नो नु = स्वप्ने मयाऽनुभूतं किम् ?। माया नु = इन्द्रजालकल्पिता मिथ्या घटना किम् ?। ममैव मतिभ्रमः = बुद्धिविपर्ययो वा किंस्वित् ?, शुक्तिरजतभ्रमवदन्यवस्तुनि तत्त्वाऽध्यासो नु ! मया कृत इत्याशयः । पुण्यैः = सौभाग्यैः, तावत् = तावत्कालमात्रभोग्यं, फलं—क्लृप्तम् = उपस्थापितं, किंस्वित् ?। तत् = दर्शनादिसुखं, असंनिवृत्त्यै = पुनरलाभाय, गतमेव, न तत्सुखं

१ "क्लिष्टं 'तु तावत्फलमेव पुण्यम्' पा०
२ 'एते मनोरथा नाम तटप्रपाताः' । पा०

विदूषकः—भोः! मैवम्, नन्वङ्गुलीयकमेवात्र निदर्शनम्। [1]अवश्यम्भाविनोऽचिन्तनीयसमागमा भवन्ति।

[ भो! मा एव्वं। णं अङ्गुलीअअंज्जेव एत्थ णिदंसण। अवस्संभाविणो अचिन्तणीअसमागमा होन्ति ]।

राजा—( अंगुलीयकं विलोक्य— ) अये! इदं तावदसुलभस्थानभ्रंशि शोचनीयम्—

तव सुचरितमंगुलीय! नूनं
प्रतनु कृशेन विभाव्यते फलेन।
अरुणनखमनोहरासु तस्या-
श्च्युतमसि लब्धपदं यदङ्गुलीषु ॥१२॥

पुनर्लब्धुं शक्यमिति भावः। मनोरथानां = तद्गताभिलाषाणाम्, अतटात् = पर्वतादेरुच्चस्थानात्, "प्रपातस्त्वतटो भृगुः" इत्यमरः। प्रकर्षेण पातो-नाशो जात एव। शकुन्तला पुनरागमिष्यतीति वृथैव मनोरथमात्रमेवेत्याशयः। ( "मनोरथा नाम तटप्रपाताः" इति पाठान्तरे, तटस्य-नद्यादितटस्य पात इव-मनोरथाः प्रतिक्षणं विलीयन्त इत्यर्थः। ) स्वप्नादिसुखवत् शकुन्तलासङ्गमादिसुखं न मया पुनर्लब्धुं शक्यं, मनोरथास्तु मुधैव जायन्ते विलीयन्ते चेति भावः, [ सन्देहालङ्कारः, काव्यलिङ्गं, उपजातिः। ] ॥११॥

मैवं = स्वप्नोऽयं, मायेयमित्यादि मा तर्कय, निदर्शनं = यथार्थत्वे प्रमाणम्। अचिन्तनीयः समागमो येषान्ते तथा = अतर्कितोपनताः, अवश्यम्भाविनः। अवश्यम्भावी यथाऽकस्मादेव भवति, तथा तत्समागमश्च सहसैव भविष्यतीति भावः। [ प्ररोचना सन्ध्यङ्गम् ]। असुलभस्थानभ्रंशि = दुर्लभस्थानाद्भ्रष्टं, शकुन्तलाहस्ताद्गलितमिति यावत्।

तवेति। यत्—अरुणैः—नखैर्मनोहरासु = आरक्तनखमनोज्ञासु, तस्या अङ्गुलीषु—लब्धपदं = प्राप्तावस्थानं, सत्,—च्युतमसि = पति-

१ 'अवश्यंभाव्यचिन्तनीयः समागमो भवति'। पा०

**सानुमती**—यद्यन्यहस्तगतं भवेत्, ततः सत्यं शोचनीयं भवेत्। सखि! दूरे वर्त्तसे, एकाकिन्येव कर्णसुखान्यनुभवामि। [जइ अण्णहत्थगदं भवे, तदो सच्चं सोअणीअं भवे। सहि! दूरे वट्टसि, एआइणो ज्जेव कण्णसुहाइं अणुभवेमि]।

**विदूषकः**—भोः! इयं नाममुद्रा केनोद्देशेन[1] भवता तत्रभवत्या हस्तसंसर्गं प्रापिता?। [भो! इअं णाममुद्दा केण उद्देसेण भवदा तत्थ भोदीए हत्थसंसग्गं पाविदा]।

**सानुमती**—मम कौतूहलेन व्यापारित[2] एषः।
[मम वि कोदूहलेण वावारिदो एसो]।

**राजा**—वयस्य! श्रूयताम्,—यदा स्वनगराय तपोवनात् प्रस्थितं मां प्रिया सबाष्पमाह—"कियच्चिरेणार्य्यपुत्रः[3] पुनरस्माकं स्मरिष्यति—" इति।

**विदूषकः**—ततस्ततः। [तदो तदो]।

---

तमसि। तत्—तस्मात्, हे अङ्गुलीयक! तव सुचरितं = पुण्यं, नूनं=ध्रुवं, प्रतनु = अत्यल्पम्, इति = इत्थं, कृशेन = अल्पेन, फलेन = अंगुलीवियोगात्मना, विभाव्यते = निश्चीयते। शकुन्तलाहस्ताद्यत्पतितोऽसि, तन्नूनमङ्गुलीयक! त्वं हतभाग्यमसीति भावः। [अनुमानं, काव्यलिङ्गं, समासोक्तिः, 'पुष्पिताग्रा'] ॥१२॥

अन्यहस्तगतं = दुष्यन्तेतरहस्तपतितं, सत्यम् = अवश्यं, सखि! = शकुन्तले! कर्णसुखानि = श्रोत्रसुखानि राजवचनानि। व्यापारित इति। ममाप्यस्मिन् प्रश्नेऽभिलाष इत्याशयः। नाममुद्रा = अङ्गुलीयकम्, उद्देशेन= अभिप्रायेण। हस्तसंसर्गं = करसंयोगम्। अस्माकं स्मरिष्यति = कदा मम पुनः स्मरिष्यति, 'अधीगर्थे'ति षष्ठी। प्रत्यभिहिता = उक्ता।

---

१ 'उद्घातेन' पा०। 'उद्घातः-कथ्यते धीरैः स्खलिते समुपक्रमे' इति धरणिः। २ 'आकारितः' पा०। ३ 'प्रतिपत्तिं दास्यतीति' पा० प्रतिपत्तिः-वार्त्ता; 'प्रतिपत्तिः प्रवृत्तौ स्या'दिति धरणिः।

राजा—अथैनां मुद्रामङ्गुल्यां निवेशयता मया प्रत्यभिहिता—
विदूषकः—किमिति ?। [किं त्ति]।
राजा—एकैकमत्र दिवसे दिवसे मदीयं।
नामाक्षरं गणय गच्छसि यावदन्तम्।
तावत् प्रिये ! मद्वरोधनिदेशवर्त्ती
नेता जनस्तव समीपमुपैष्यतीति ॥१३॥
तच्च दारुणात्मना मया मोहान्नानुष्ठितम्।
सानुमती—रमणीयः खल्ववधिर्विधिना विसंवादितः।
[रमणीओ क्खु अवही विहिणा विसंवादिदो।]
विदूषकः—भोः ! कथं रोहितमत्स्यस्य बडिशमिव मुख-

एकैकमिति। प्रिये ! मदीयनाम्नोऽक्षरम् एकमेकं प्रतिदिनं गणय, यावदेव त्वम्—अन्तं=मन्नामाक्षराणामन्त्यं तकारं, गमिष्यसि=प्राप्स्यसि। तावदेव, मम अवरोधस्य = अन्तःपुरस्य, निदेशे—आज्ञायां वर्त्तते तच्छीलः—अन्तःपुरचरः, नेता—प्रधानतमः (—तव नेता = त्वां नेतुमित्यर्थो वा)—जनः, तव समीपम्, उपैष्यति = आगमिष्यतीति—मया प्रत्यभिहितेति—योजना। दु-ष्-य-न्—तेति नामाक्षरसंमितेष्वेव दिवसेषु कञ्चुक्यादिकं भवतीमानेतुं प्रेषयिष्यामीति मयोक्तमित्याशयः। 'मद्वरोधगृहप्रवेशं नेते'ति पाठान्तरे-मदन्तःपुरे प्रवेशस्य प्रापयितेति तदर्थः। [अनुप्रासः, काव्यलिङ्गं, 'वसन्ततिलका'] ॥१३॥

तत् = स्वोक्तं, नानुष्ठितं = न कृतं, रमणीयः = सुन्दरः, अवधिः = त्रिचतुरदिनात्मकः, विधिना = दैवेन, विसंवादितः = मिथ्याकृतः। बडिशमिव = मत्स्यभेदनशल्यमिव, एतत् = अङ्गुलीयकं।

गङ्गास्रोतसि = गङ्गाप्रवाहे। तपस्विन्याः परिणये = विवाहे, अधर्म-

१ 'मद्वरोधगृहप्रवेशं नेता' पा०

प्रविष्टमेवदासीत् ? । [ भो ! कथं लोहिदमच्छस्स वड़िसं विअ मुहप्पविट्टं एदं आसी ? ]

राजा—शचीतीर्थे सलिलं वन्दमानायास्ते सख्या हस्ताद्गङ्गास्रोतसि परिभ्रष्टम् ।

विदूषकः—युज्यते । [ जुज्जदि । ]

सानुमती—अतः खलु तपस्विन्याः शकुन्तलाया अधर्म्मभीरोरस्य राजर्षेः परिणये सन्देहो जातः । अथवा नेदृशोऽनुरागोऽभिज्ञानमपेक्षते । कथमिवैतत् ? । [ अदो क्खु तवस्सिणीए सउन्तलाए अधम्मभीरुणो एदस्स राएसिणो परिणए सन्देहो जादो । अधवा ण ईदिसो अणुराओ अहिण्णाणं अवेक्खदि । ता कधं विअ एदं । ]

राजा—उपालप्स्ये तावदिदमङ्गुलीयकम् ।

विदूषकः—( आत्मगतं— ) गृहीतोऽनेन पन्था उन्मत्तानाम् ! ( प्रकाशं-सस्मितं- ) भोः । अहमपि तावदेतत् दण्डकाष्ठमुपालप्स्ये कथमृजुकस्य मे कुटिलं त्वमसीति । [ भो ! अहं पि दाव एदं दण्डकट्ठं उवालहिस्सं । कधं उज्जुअस्स मे कुड़िलं तुमसि त्ति ] ।

राजा—( तदश्रृण्वन्नेव- ) मुद्रिके !

कथं नु तं कोमलबन्धुराङ्गुलिं
करं विहायासि निमग्नमम्भसि ।

---

भीरोः = पापाशङ्किनः, ईदृशः = एवं दशां गतः, अनुरागः = स्नेहः, अभिज्ञानं = चिह्नादिदर्शनम् । एतत् = अभिज्ञानापेक्षिता । उपालप्स्ये = निन्दिष्यामि । कथं = कुतः, = ऋजुकस्य = सरलस्य, कुटिलं = वक्रम् । एवञ्च अङ्गुलीयकस्य सखे ! को दोषः, ननु भवानेवापराध्यति विस्मरणे— इति सूचितो भावः ।

कथमिति । कोमलाः=बन्धुरा अङ्गुलयो यत्र तं = मृदुसुन्दराङ्गुलि-

अथवा—

अचेतनं नाम गुणं न वीक्षते
मयैव कस्मादवधीरिता प्रिया ॥१४॥

सानुमती—स्वयमेव प्रतिपन्नः, यदस्मि वक्तुकामा।
[ सअं ज्जेव पडिवण्णो जं अह्मि वत्तुकामा। ]

विदूषकः—भोः ! सर्वथाऽहं बुभुक्षया [1]मारयितव्यः ?।
[ भो ! सव्वधा अहं वुभुक्खाए मारिदव्वो। ]

राजा—( अनादृत्य- ) प्रिये ! अकारणपरित्यागादनुशय-दग्धहृदयस्तावदनुकम्प्यतामयं जनः पुनर्दर्शनेन।

( अपटीक्षेपण प्रविश्य चित्रफलकहस्ता—)

चेटी—भर्त्तः! इयं चित्रगता भट्टिनी—
(—इति चित्रफलकं दर्शयति।) [ भट्टा ! इअं चित्तगदा भट्टिणी। ]

राजा—( विलोक्य- ) अहो रूपमालेख्यगताया अपि प्रियायाः। तथाहि—

---

ललितं 'बन्धुरं सुन्दरे रम्ये'इति विश्वः। करं = हस्तं, विहाय, अम्भसि = जले, निमग्नमसि ? नाम = प्रसिद्धौ, अचेतनं = जडमेतत्, गुणं न वीक्षत इति युक्तमेव, परन्तु–मयैव–चेतनेनापि प्रिया कथमवधीरिता–अवमानिता ?।

अचेतनस्याङ्गुलीयकस्य को दोषः, ममैवायमपराध इत्याशयः [ विभावना विशेषोक्ति–समासोक्त्यर्थान्तरन्यासाः, 'वंशस्थं' ] ॥ १४ ॥

प्रतिपन्नः = स्वीकृतवान्, यत् = 'तवैवदोष'इति। सर्वथा = सत्यमेव। बुभुक्षितोऽहं, भोजनवेला जाता तदुत्तिष्ठेत्याशयः। अनादृत्य=अश्रुत्वैवाह। अकारणमेव तत्परित्यागेन दग्धं हृदयं यस्यासौ जनः पुनर्दर्शनदानेन—अनुकम्प्यतां = अनुगृह्यताम्। भट्टिनी = स्वामिनी शकुन्तला। विलोक्य = शकुन्तलाचित्रं विलोक्य। अहो = आश्चर्ये, आलेख्यगतायाः = चित्रपटगतायाः, रूपमेव प्रशंसते—

---

१ 'खादयितव्यः' पा०–बुभुक्षा मामतिमात्रं बाधत इत्यर्थः।

दीर्घापाङ्गविसारिनेत्रयुगलं लीलाञ्चितभ्रूलतं
दन्तान्तःपरिकीर्णहासकिरणज्योत्स्नाविलिप्ताधरम् ।
कर्कन्धूद्युतिपाटलोष्ठरुचिरं तस्यास्तदेतन्मुखं
चित्रेऽप्यालपतीव विभ्रमलसत्प्रोद्भिन्नकान्तिद्रवम् ॥१५॥

विदूषकः—( विलोक्य- ) साधु वयस्य ! साधु, यत्त्वया मधुरो भट्टिन्या दर्शितो भावानुप्रवेशः, स्खलतीव मे दृष्टिर्निम्नोन्नतप्रदेशेषु[1]। किं बहुना, सत्त्वानुप्रवेशङ्कया—आलपनकौतूहलं मे जनयति ।
[साहु वअस्स ! साहु ज त ' महुरो भट्टिणीय दसितो भावाणुप्पवेसो,

दीर्घेति । तस्याः—प्रियायाः—तदेतत् = चित्रगतं,—दीर्घाभ्यामपाङ्गाभ्यां विसारि नेत्रयोर्युगलं यत्र तत्तथा = विशाललोचनप्रान्तचुम्बिनयनयुगलं, लीलयाऽञ्चिते भ्रूलते यत्र तत्तथा = सविलासभ्रूलतायुगलं, दन्तानामन्तः परिकीर्णाभिः हासस्य किरणानां ज्योत्स्नाभिर्विलिप्तमधरं यत्र तत्तथा = दन्तमध्यविलसद्धासकिरणप्रभाविलिप्ताधरोष्ठं, कर्कन्धूनां द्युतिरिव द्युतिर्यस्यात एव पाटलो य ओष्ठस्तेन रुचिरं = पक्वबदरीफलारक्तवर्णाधरोष्ठेन सुन्दरं, "श्वेतरक्तस्तु पाटल" इत्यमरः । विभ्रमेण लसन्—प्रकर्षेण उद्भिन्नः कान्तिद्रवो यत्र तत्तथा = विलासोद्भवत्प्रकृष्टलावण्यप्रभाप्रवाहं,—मुखं—चित्रेऽपि आलपतीव = सम्भाषत इव। चित्रेऽपि यस्या एवम्विधः सौन्दर्यातिशयो विभाव्यते, तस्या अनिन्द्यसौन्दर्यसारविलासविभ्रमाया हरिणाक्ष्या वास्तवं सौन्दर्यं किं वर्णयितुं शक्यमिति भावः । अतिसुन्दरीयं मया भाग्यविपर्ययात्परित्यक्तेत्याशयः । [ उपमा, रूपकम् , उत्प्रेक्षा, 'शार्दूलविक्रीडितम्' ] ॥१५॥

साधुः = शोभनं वयस्येत्यन्तं भिन्नं वाक्यं, भट्टिन्याः = राजपत्न्याः शकुन्तलायाः, मधुरः = मनोहरः, भावानुप्रवेशः = प्रणयादिभावभङ्गीयो-

१ निम्नतप्रदेशेषु ।

खलदि विअ मे दिट्ठी णिहुदप्पदेसेसु । किं बहुना, सत्ताणुप्पवेससङ्काए आलवणकोदूहलं मे जणअदि । ]

सानुमती—अहो ! राजर्षेर्वर्त्तिकालेखानिपुणता, जाने प्रियसखी मेऽग्रतो वर्त्तते—इति । [ अह्मो ! एसा राएसिणो वत्तिआलेहणिउणदा । जाणे पिअसही से अग्गदो वट्टदि त्ति । ]

राजा—

यद्यत्साधु न चित्रे स्यात् क्रियते तत्तदन्यथा ।
तथापि तस्या लावण्यं रेखया किञ्चिदन्वितम् ॥१६॥

---

वनादर्शितः = चित्रे प्रकटितः । पाठान्तरे—मधुरं यदवस्थानम्—आकृतिस्तया[1] दर्शनीय इत्यर्थः । निम्नोन्नतप्रदेशेषु[2] = नितम्बादिषु = सत्त्वस्यानुप्रवेशस्य शङ्कया = प्राणसंबन्धशङ्कया, आलपने—भाषणे, कौतूहलं = कौतुकं जनयति । भावभङ्गिललितेयं सजीवितेव चित्रप्रतिमा भाति, अहो ते कौशलं चित्रलेखने इति भावः । राजर्षेः—दुष्यन्तस्य, वर्त्तिकालेखानिपुणता = चित्रतूलिकाकर्मकौशलं, जाने = मन्ये, प्रियसखी = शकुन्तला ।

यद्यदिति । चित्रे यद्यत्—अङ्गं, न साधु = न मया स्वदोषादेव साधु लिखितं, तत्—अन्यथा क्रियते = परावर्त्यापि लिख्यते मया; तथापि तस्या लावण्यं = कान्तिविशेषः, किञ्चित् = अनिर्वचनीयया रेखया,=शोभया अन्वितं = युक्तमेव । सम्मार्ज्य सम्मार्ज्य भूयो भूयो लिख्यमानमपि शोभां न जहातीति भावः । "शिरोनेत्रकरादीनामङ्गानां मेलने सति । कायस्थितिर्यतो नेत्रहरा रेखा प्रकीर्त्तिते"ति रत्नाकरः ॥१६॥

---

१ 'मधुरावस्थानदर्शनीयो भावानुप्रवेशः' पा० २ "निभृतप्रदेशेषु"

तथाहि—

अस्यास्तुङ्गमिव स्तनद्वयमिदं, निम्नेव नाभिः स्थिता,
दृश्यन्ते विषमोन्नताश्च वलयो भित्तौ समायामपि ।
अङ्गे च प्रतिभाति मार्दवमिदं स्निग्धप्रभावा च्चिरं ।
प्रेम्णा मन्मुखमीषदीक्षत इव, स्मेरा च वक्तीव माम् ।१७।।

सानुमती—सदृशमेवं पश्चात्तापगुरोः स्नेहस्य ।
[ सरिसं एव्व पच्चादावगुरुणो सिणेहस्स । ]

राजा—( निःश्वस्य- )
साक्षात्प्रियामुपगतामपहाय पूर्वं
चित्रार्पितामहमिमां बहुमन्यमानः ।

---

अस्या इति । अस्याः = चित्रफलकस्थायाः, समायामपि = अनुन्नतानतायामपि,—भित्तौ = चित्रपटे, इदं स्तनद्वयं—तुङ्गमिव = उन्नतमिव,—दृश्यते । नाभिः—निम्नेव = गभीरेव, न तु वस्तुतो निम्नैव, स्थिता = विभाव्यते । विषमाश्च उन्नताश्च—विषमोन्नताः=उन्नतानताः, वलयः = उदरभङ्गविशेषाः, दृश्यन्ते । अङ्ग इदं—विभाव्यमानं, मार्दवं = सौकुमार्यं स्निग्धस्य प्रभावात् = वर्णलेपविशेषस्नेहानुषङ्गात्, चिरं = बहुलं, प्रतिभाति = भासते। प्रेम्णा मन्मुखमीषत् = किञ्चिल्लज्जामन्थरम्, ईक्षत इव = विलोकयतीव । च = पुनः—स्मेरा = हासविकासिवदनकमला, मां—वक्तीव = आभाषत इव [ उत्प्रेक्षा, 'शार्दूलविक्रीडितम् ] ॥१७॥

पश्चात्तापेन गुरोः—प्रवृद्धस्य, स्नेहस्य, सदृशम् = अनुरूपम्, एवम् = इत्थं चिन्तनं, विरहात्प्रवृद्धोऽस्य स्नेह इति भावः । (अनवलेपस्य = निर्दोषस्य-अकृत्रिमस्येति पाठान्तरेऽर्थः ।)

साक्षादिति । हे सखे !—पूर्वं—साक्षात् = स्वयम् उपगतां =

स्रोतोवहां पथि निकामजलामतीत्य

जातः सखे ! प्रणयवान् मृगतृष्णिकायाम् ॥१८॥

विदूषकः—भोः ! तिस्र आकृतयो दृश्यन्ते, सर्वा एव दर्शनीयाः, तत्कतमाऽत्र तत्रभवती शकुन्तला ? ।

[ भोः। तिण्णिआ आइदिओ दीसन्ति, सव्वाओ ज्जेव दंसणीआओ, ता कदमा एत्थ तत्थ भोदी सउन्तला। ]

सानुमती—अनभिज्ञः खल्वेष सखीरूपस्य [1]मोघचक्षुः, इयं खलु नास्य गता प्रत्यक्षताम्। [ अणहिण्णो क्खु एसो सहीए रूवस्स मोहचक्खुं, इअं क्खु ण से गदा पच्चक्खदं ?। ]

राजा—त्वं तावत्कतमां तर्कयसि ? ।

विदूषकः—( निर्वर्ण्य- ) तर्कयामि "—यैषा शिथिलबन्धे-

---

प्राप्तां, प्रियाम्—अपहाय = निरस्य, इमां चित्रार्पितां = चित्रलिखितां, बहुमन्यमानः = महत्सुखसाधनं विभावयन्, पथि—निकामं जलं यस्यां—तां प्रभूतजलां, स्रोतोवहां=निर्झरिणीम्—अतीत्य = उल्लङ्घ्य, मृगतृष्णिकायां = मृगमरीचिकायां प्रणयवान् = सतृष्णः, जातः = संवृत्तोऽस्मि। स्वयमुपस्थितां तां प्रियां विहाय कृत्रिमे तच्चित्रे मनो योजयन्, मूढ एवाहमिति भावः। [निदर्शना, काव्यलिङ्गम्, 'वसन्ततिलका ] ॥१८॥

तिस्रः = शकुन्तलाऽनसूया-प्रियंवदारूपाः, दृश्यन्ते—चित्र इति शेषः। दर्शनीयाः = मनोहराः, कतमा = आसां मध्ये का ?। मोघे चक्षुषी यस्यासौ—मोघचक्षुः = निष्फलनेत्रः (पाठान्तरे—मोहदृष्टिः=मोहजडः, मूर्खः।) तर्कयसि = विचारयसि। निर्वर्ण्य = नितरां दृष्ट्वा।

शिथिलेन बन्धनेनोद्वान्तानि कुसुमानि यस्मात् तेन = प्रश्लथबन्धननिर्गलितपुष्पेण, केशहस्तेन = केशपाशेन,—उपलक्षिता, बद्धाः स्वेदस्य

---

१ "ईदृशस्य रूपस्य मोहदृष्टिरयं जनः"

नोद्वान्तकुसुमेन केशहस्तेन, बद्धस्वेदबिन्दुना वदनेन, [1]नमितांसकाभ्यां बाहुलताभ्यामुच्चलितनीविना वसनेन च,—ईषत्परिश्रान्तेव—अभिषेकस्निग्धतरपल्लवस्य बालचूतवृक्षस्य पार्श्वे आलिखिता, एषा तत्रभवती शकुन्तला, इतरे सख्यौ—" इति ।

[ तक्केमि जा एसा सिढ़िलबन्धणुव्वन्तकुसुमेण केसहत्थेण बद्धस्सेअबिन्दुणा वअणेण विसेसदो णमिदंसआहिं बाहुलदाहिं उच्चलिदणीविणा वसणेण अ इसीपरिस्सन्ता विअ अहिसेअसिणिद्धदरपल्लवस्स बालचूअरुक्खस्स पास्से आलिहिदा एसा तत्थमोदी सउन्तला, इदराओ सहीओ त्ति ।]

राजा—निपुणो भवान्! अस्त्यत्र ममापि भावचिह्नम्,—

---

बिन्दवो यत्र तेन = घर्मजलाचितेन, मुखेन—उपलक्षिता, विशेषतः = विशेषेण, नामिता शाखा याभ्यां ताभ्यां—नामितशाखाभ्यां = 'अवनामितास्रशाखाभ्यां । बाहुलताभ्यां = भुजलताभ्याम्—उपलक्षिता, उच्छ्वसितनीविना = शिथिलाधोवस्त्रग्रन्थिना, वसनेन = वस्त्रेण—उपलक्षिता, ईषत्परिश्रान्तेव=जलसेचनादीषत्परिश्रान्तेव—अभिषेकेण स्निग्धतराः पल्लवा यस्य तस्य = जलसेकार्द्रकिसलयस्य, बालचूतवृक्षस्य = आम्रपादपस्य पार्श्वे = निकटे आलिखिता = उल्लिखिता,

यथैव प्रथमदर्शने शकुन्तला राज्ञा दृष्टा, तथैव चित्रे लिखितेति ध्येयम् । निपुणः = पटुः । अस्त्यत्र = अस्या एव प्रतिकृतेरुपरि भावचिह्नं=मदीयाश्रुप्रस्वेदादिपतनाच्चिह्नं, इत्थञ्च तैरेव चिह्नैर्ज्ञातुं शक्यते—एषा शकुन्तलेति ।

मम = चित्रकारस्य मे । भावस्य—मद्गतस्य सात्त्विकभावस्य, चिह्नं—प्रस्वेदरेखादिकम्, अत्र = अस्मिन् चित्रफलके । यां प्रतिकृतिं 'शकुन्तलेय'मिति तर्कयसि, तस्यामेव अङ्गुलीस्पर्शादिना सात्त्विकभावचिह्नप्रस्वेदरेखादि जातमित्याशयः ।

---

१ "नामितशाखाभ्या"मिति, अपसृताभ्यामिति च—पा०

ँस्विन्नाङ्गुलिविनिवेशात् रेखा प्रान्तेषु दृश्यते मलिना ।
अश्रु च कपोलपतितं लक्ष्यमिदं वर्णकोच्छ्वासात् ॥१९॥

(चेटीं प्रति-) चतुरिके ! अर्द्धलिखितमेतद्विनोदस्थानमस्माभिः, तद् गच्छ वर्त्तिकास्तावदानय ।

**चेटी**—आर्य्य ! माधव्य ! अवलम्बस्व चित्रफलकं, यावदागच्छामि । [अज्ज ! माहव्व ! अवलम्ब चित्तफलअं, जाव आअच्छामि ।]

**राजा**—अहमेवालम्बे (–इति यथोक्तं करोति ।)

(**चेटी**—निष्क्रान्ता ।)

---

चिह्नमेवाह—स्विन्नेति । प्रान्तेषु = चित्रफलकपर्यन्तभागेषु स्विन्नानामङ्गुलीनां, विनिवेशात् = प्रस्वेदाविलाङ्गुलीसम्पर्कात्, मलिना = श्यामा, रेखा = अङ्गुल्यादिरेखा, दृश्यते । च = पुनः—वर्णकस्य = रञ्जनवर्णस्य—('रंग') उच्छ्वासात् = उच्छूनत्वात्—कपोलयोः पतितं = गण्डस्थलपतितम्—इदम्—अश्रु,—लक्ष्यं = ज्ञातुं शक्यम् । अङ्गुलिरेखादिभिः स्वेदोऽनुमेयः, चित्रवर्णकोच्छूनत्वादिना चाऽश्रु लक्षणीयमिति भावः । [अनुमानानुप्रासौ, ] ॥१९॥

एतद्विनोदस्थानं = मन्मनोमोदावहं चित्रम्, अर्धलिखितम् = अपूर्णमेवाद्य यावन्न समापितम् । वर्त्तिकाः = तूलिकाः, = चित्रलेपद्रव्याणि च, (रंग-कूंची) "पटलेपे पक्षिभेदे तूलिकायाञ्च वर्त्तिका"—इत्यजयः । यथोक्तं करोति = आलम्बते ।

---

१ "स्विन्नागुलिविनिवेशो रेखाप्रान्तेषु दृश्यते मलिनः ।
अश्रु च कपोलपतितं दृश्यमिदं वर्त्तिकोच्छ्वासात्"। मलिनः स्विन्नाङ्गुलिविनिवेशः रेखाप्रान्तेषु—चित्रप्रान्तेषु, भाति । वर्त्तिका = चित्रपटे लेपविशेषः (वार्निश) । उच्छ्वासः = उच्छूनता ('फूलना') जलपतनान्मषीपत्रादीनामुच्छूनता प्रसिद्धैव ।

विदूषकः—भोः ! किमत्रापरमालिखितव्यम् ? ।

[ भो ! किंएत्थ अवरं आलिहिदव्वं ? । ]

सानुमती—"यो यः प्रियसख्या अभिमतः प्रदेशः, तं तमालिखितुकाम"—इति तर्कयामि ।

[ जो जो पिअसहीए अहिमदो पदेसो, तं तं आलिहिदुकामो त्ति तक्केमि ।]

राजा—सखे ! श्रूयताम्—

कार्या सैकतलीनहंसमिथुना स्रोतोवहा मालिनी,
पादास्तामभितो निषण्णचमरा[1] गौरीगुरोः पावनाः ।
शाखालम्बितवल्कलस्य च तरोर्निर्म्मातुमिच्छाम्यधः—
शृङ्गे कृष्णमृगस्य वामनयनं कण्डूयमानां मृगीम् ॥२०॥

---

अपरमिति । अन्यदपि किञ्चिदत्र चित्रपटेऽर्पणीयं वर्त्तते किमिति-प्रश्नार्थः । अभिमतः = प्रियः, आलेखितुकामः = लिलिखिषति ।

कार्येति । सैकते लीनानि हंसमिथुनानि यस्याः सा तथा = वालुका-निविष्टहंसमिथुनमनोहरा, मालिनी स्रोतोवहा = मालिन्याख्या नदी, कार्या = आलेख्या । किञ्च—तां = मालिनीमभितः = उभयतः, निषण्णा-हरिणा येषु ते—निषण्णहरिणाः = सुखोपविष्टहरिणयूथाः, "निषण्ण-चमरा" इति पाठेऽपि स एवार्थः, चमरो—मृगभेदः । गौरीगुरोः = हिमा-लयस्य, पावनाः = पवित्राः, पादाः = प्रत्यन्तपर्वतभागाः । कार्या इति-शेषः । च = किञ्च—शाखासु लम्बितानि वल्कलानि यस्य तस्य = आत-पशोषणाय शाखाप्रसारितवल्कलस्य, तरोः—अधः,—कृष्णमृगस्य शृङ्गे वामनयनं कण्डूयमानां मृगीं = हरिणीं,—निर्मातुं = चित्रे लिखितुम्—इच्छामि । हिमालयप्रान्तवाहिन्या मालिन्यास्तटपरिसरे सैकतलीनहंसयुगल-

---

१ 'निषण्णहरिणा' ।

**विदूषकः**—( स्वगतम्— ) यथा मन्त्रयति तथा तर्कयामि पूरयितव्यमनेन चित्रफलकमाकृतिभिर्लम्बकूर्चानां वल्कलपरिधानानां तापसानामिति । [ जधा मन्तेदि तधा तक्केमि पूरिदव्वं अणेण चित्तफलअं आकिदिहिं लम्बकुच्चाणं वक्कलपरिहाणाणं तावसाणं त्ति । ]

**राजा**—वयस्य ! अन्यच्च शकुन्तलायाः प्रसाधनमभिप्रेतं लेखितुं विस्मृतमस्माभिः ।

**विदूषकः**—किमिव ? । [ किं विअ ? । ]

**सानुमती**—वनवासस्य, कन्यकाभावस्य, सौकुमार्यस्य, विनयस्य च यत्सदृशं भविष्यति ।

[ वणवासस्स कण्णआभावस्स अ जं सरिसं भविस्सदि । ]

**राजा**—

कृतं न कर्णार्पितबन्धनं सखे !

शिरीषमागण्डविलम्बिकेशरम् ।

---

सनाथे, आश्रमाभोगतरुतलनिलीनकृष्णसारशृङ्गकोणे स्ववामनयनं कण्डूयमानां हरिणीं लिलिखिषामीति भावः । निपुणमुद्दीपनविभाव उपक्षिप्तः। [ स्वभावोक्तिः, अनुप्रासः, उदात्तं, शार्दूलविक्रीडितम् । ] ॥२०॥

मन्त्रयते = कथयति, लम्बकूर्चानां = लम्बश्मश्रूणां, वल्कलं परिधानं येषां तेषां—तापसानाम्—आकृतिभिः=प्रतिकृतिभिः, चित्रफलकं = चित्रपटः, पूरयितव्यो भवेत् । उपहासवाक्यमेतत् । शकुन्तलाया अभिप्रेतं = प्रियं, प्रसाधनम् = अलङ्करणं, लेखितुं विस्मृतं । किमिव = किन्तत् ? इति प्रश्नः । वनवासोचितं—पुष्पधारणं, सौकुमार्यस्योचितं—कोमलतमशिरीषादिकुसुमधारणं, विनयस्य सदृशं = वैजयन्तीमाला-शेखरादिव्यावर्त्तनं ।

आलेख्यान्तरं निर्दिशति—कृतमिति । हे सखे ! कर्णे अर्पितं बन्धनम् वृन्तभागो यस्य तत्तथा = कर्णन्यस्तवृन्तम्, गण्डमभिव्याप्य विल-

न वा शरच्चन्द्रमरीचिकोमलं
मृणालसूत्रं रचितं स्तनान्तरे ॥२१॥

**विदूषकः**—किन्नु खलु तत्रभवती रक्तकुवलयशोभिनाऽग्रहस्तेन मुखमावार्य्य चकितचकितेव स्थिता। (सावधानं दृष्ट्वा–) आः! हीही भोः! एष दास्याः पुत्रः कुसुमरसपाटच्चरो दुष्टमधुकरस्तत्रभवत्या वदनकमलमभिलषति!।

[कि ण्णु क्खु तत्थभोदी रत्तकुवलअसोहिणा अग्गहत्थेण मुहं आवारिअ चकिदचकिदा विअ ट्ठिदा। आं! हीही भो! एसो दासीए पुत्तो कुसुम-रस-पाडच्चरो दुट्टमहुअरो तत्थभोदीए वअणकमलं अहिलसदि।]

---

म्बितुं शीलाः केसरा यस्य तत्, = कपोलतलपर्यन्तलम्बमानकिञ्जल्कं, शिरीषं = शिरीषकुसुमं, न कृतं = न चित्रेऽर्पितं, शकुन्तलाप्रियत्वाच्च तदवश्यमर्पणीयमित्याशयः। वा = किञ्च—शरच्चन्द्रस्य मरीचिवत्—कोमलं = शरच्चन्द्रकिरणललितं, मृणालसूत्रं=बिसतन्तुपटलं, स्तनयोरन्तरे= पयोधरोत्सङ्गे, न रचितं = नार्पितं मया। तदप्यालेख्यं, विरहसन्तापसूचकत्वात्, तथाऽनुभूतत्वाच्चेत्याशयः। [क्रियासमुच्चयः, उपमा, संसृष्टिश्चानयोः, वंशस्थं।] ॥२१॥

तत्र भवती = शकुन्तला, रक्तं यत्कुवलयं तद्वच्छोभते तच्छीलेन = रक्तकमलमनोहरेण, हस्तस्याग्रम्—अग्रहस्तं, तेन = करपल्लवेन, मुखं = वदनम्, आवार्य = पिधाय, चकितचकितेव = भीतभीतेव, किन्नु खलु स्थिता? कस्मात्स्थिता? सावधानं = सावहितं, "ही ही" ति विस्मये, 'आः'! 'भोः' इति च कोपे—'दास्याःपुत्र' इत्याक्रोशे, नीच इत्यर्थः—कुसुमरसानां पाटच्चरः= पुष्परस—चौरः, दुष्टमधुकरः = धृष्टो भ्रमरः, वदनमेव कमलं = मुखपङ्कजम्—अभिलषति = इच्छत्याघ्रातुम्। 'ननु' इत्यामन्त्रणेऽनुनयेऽनुज्ञायां वा।

राजा—ननु वार्य्यतामेष धृष्टः।

विदूषकः—भोः! त्वमेवाविनीतानां शासिताऽस्य वारणे प्रभवसि।

[ भो! तुमं ज्जेव अविणीदाणं सासिदा इमस्स वारणे पहवसि। ]

राजा—युज्यते। अयि भोः! कुसुमलताप्रियातिथे! किमत्र परिपतनखेदमनुभवसि—

एषा कुसुमनिषण्णा तृषितापि सती भवन्तमनुरक्ता।
प्रतिपालयति मधुकरी न खलु मधु त्वां विना पिबंति ॥२२॥

सानुमती—'अत्यर्थं खलु वारितः। [अदिंअत्थं क्खु वारिदो।]

---

"प्रश्नावधारणानुज्ञानुनयामन्त्रणे ननु"—इत्यमरः। अविनीतानां = धृष्टानां, शासिता = शासकः, प्रभवसि = समर्थोऽसि। युज्यते = युक्तियुक्त-मुक्तं भवता—मयैव वारणीयोयं भ्रमर इत्याशयः।

कुसुमयुक्तानां लतानां प्रियोऽतिथिस्तत्सम्बुद्धौ रूपं, कुसुमलता-प्रणयिन्! अत्र सम्बोधने गूढो भावः। अत्र = वदनकमले। परिपत-नात्खेदं = आक्रमणक्लेशम्—अनुभवसि = स्वीकुरुषे, नात्र कमलमधु सुलभ-मित्याशयः। सेवनोचितं स्थानं निर्दिशति—एषेति। एषा = चित्रलिखिता पुरोवर्त्तिनी, कुसुमे निषण्णा = कुसुमोपरिस्थिता, अनुरक्ता = अनुरागवती, मधुकरी = भ्रमरी, प्रतिपालयति = त्वां प्रतीक्षते, तृषिताऽपि सती त्वां विना मधु = पुष्परसं, न खलु = नैव—पिबति। अनेन स्नेहातिशयो व्यज्यते। तत्तामेवानुसर, मा मत्प्रियां क्लेशयेत्याशयो बोध्यः। [ अनुप्रासः, समा-सोक्तिः ] ॥ २२ ॥

अत्यर्थं = सुन्दरतरया रीत्या, इतोऽपि प्रियाह्वानसूचनेन वारणमपि

---

१ 'अथाभिजातं खल्वेष वारितः पा०' अभिजातं = न्यायानुमोदितेन पथा। 'अभिजातः स्मृतो न्याय्ये' इति विश्वः।

Momordica | monadelpha



विदूषकः—भोः ! प्रतिषिद्धवामा खलु एषा जातिः ।
[ भो ! पड़िसिद्धवामा क्खु एषा जादी । ]

राजा—( सकोपम्- ) भोः ! न मे शासने तिष्ठसि, श्रूयतां तर्हि सम्प्रति हि—

अक्लिष्टबालतरुपल्लवलोभनीयं
पीतं मया सदयमेव रतोत्सवेषु ।
बिम्बाधरं दशसि चेद् भ्रमर ! प्रियाया-
स्त्वां कारयामि कमलोदरबन्धनस्थम् ॥२३॥

विदूषकः—भोः ! एवं तीक्ष्णदण्डस्य ते कथं न भेष्यति । (विहस्यात्मगतम्—) एष तावदुन्मत्तः, अहमप्येतस्य सङ्गेन

---

सुखदमेवेति भावः । प्रतिषिद्धा सती वामा = विपरीताचरणप्रवणा, एषा जातिः = भ्रमरजातिः । यतः प्रतिषिद्धोऽपि न निवर्त्तत इति भावः । शासने = आज्ञायाम् । 'प्रतिषिद्धाऽतिवामे'ति पाठान्तरम् ।

अक्लिष्टेति । भ्रमर ! अक्लिष्टः = न केनापि मर्दनादिनोपहतः, बालः = अभिनवः, तरोः—पल्लवः = किशलयस्तद्वल्लोभनीयं = सुन्दरं, रतमेवोत्सवस्तेषु = सुरतमहोत्सवेष्वपि, मया—सदयं = सानुकम्पं, पीतम् = आस्वादितं, प्रियायाः = प्रेयस्याः । बिम्बाधरं = बिम्बफलसदृशमधरं, स्पृशसि चेत्,—कमलस्योदरमेव बन्धनं तत्र तिष्ठति तं = कमलोदरकुहरकारागारनिबद्धं, त्वां कारयामि-एतेन सूर्यस्य निजाज्ञाकारित्वं ध्वन्यते । अन्योऽपि राजाज्ञामुल्लङ्घयन् कारागारे बध्यते । [अतिशयोक्ति-समासोक्त्युपमा-रूपकानुप्रासाः । 'वसन्ततिलका' ] ॥२३॥

एषः = भ्रमरः, तीक्ष्णदण्डस्य = उग्रदण्डस्य, पंचम्यर्थे षष्ठी । ते = त्वत्तः, भेष्यति = अवश्यमेव भीतो भविष्यति । एषः = राजा,

ईदृश एव संवृत्तः। [ भो ! एव्वं तिक्खदण्डस्स दे कधं ण भाइस्सदि। एसो दाव उम्मत्तो, अहम्पि एदस्स सङ्गेण ईदिसो ज्जेव संवुत्तो। ]

राजा—निवार्य्यमाणोपि कथं स्थित एव।

सानुमती—अहो ! धीरमपि जनं रसो विकारयति।

[ अहो ! धीरम्पि जणं रसो विआरेदि। ]

विदूषकः—( प्रकाशम्— ) भोः ! चित्रं खल्वेतत्।

[ भो ! चित्तं क्खु एदं। ]

राजा—कथं चित्रम्। ?

सानुमती—अहमपि इदानीमवगतार्था, किं पुनर्यथाचिन्तितानुसारी [1]एषः। [ अहम्पि दाणिं अवगदत्था, किं उण जधाचिन्तिताणसारी एसो। ]

---

उन्मत्तः = विक्षिप्तः, यदयं चित्रस्थं भ्रमरमपि दण्डयितुं व्यवस्यतीति भावः। ईदृशः = उन्मत्त इव, एतच्चित्तानुवर्त्तनस्यावश्यकत्वात्। निवार्यमाणः = निषिध्यमानः, स्थित एव = न प्रियानुवर्त्तनव्यापारान्निवर्त्तते। रसः = अनुरागावेशः, विप्रलम्भो वा, विकारयति = विक्लवयति। एतत् = भवद्धस्तस्थं, चित्रं—न वस्तुतः शकुन्तला [ भ्रान्तिर्नाम सन्ध्यङ्गम् ]

सानुमत्या अपि राजवचनात्सत्यमियं शकुन्तलेति भ्रमस्तन्मयतया जातः, स च विदूषकवचसा निरस्त इति तदाह—अहमपीति। इदानीं = विदूषकवचनादवगतोऽर्थो यया सा = निश्चितार्था, [1]यथाचिन्तितानुसारी = सङ्कल्पानुसारी, चित्रेऽपि प्रियां भावयन्, एषः = राजा, किं पुनः ! अहं सानुमत्यपि चित्रे—सत्यं शकुन्तलैवेयमिति भ्रान्ता, विदूषकवचनादेवेदानीमेव प्रतिबुद्धा, तर्हि शकुन्तलागतमनोरथो राजा भ्रान्तश्चेत् किं वक्तव्यमित्याशयः। ममापि चित्रे यदि भ्रान्तिर्जाता, तर्हि राज्ञो भ्रान्तिरुचितैव,

---

१ 'किं पुनर्यथालिखितानुसार्येषः' पा०

राजा—किमिदमनुष्ठितं पौरोभाग्यम् ? ।

( —इति बाष्पं विसृजति )

दर्शनसुखमनुभवतः साक्षादिव तन्मयेन हृदयेन ।
स्मृतिकारिणा त्वया मे पुनरपि चित्रीकृता कान्ता॥२४।

सानुमती—पूर्वापरविरुद्धोऽपूर्व एव विरहिमार्गः[1] ।

[ पुव्वापरविरुद्धो अपुव्वो एसो विरहिमग्गो । ]

राजा—वयस्य ! कथमेवमविश्रामं दुःखमनुभवामि—

प्रजागरात् खिलीभूतस्तस्याः स्वप्नसमागमः ।
बाष्पन्तु न ददात्येनां द्रष्टुं चित्रगतामपि ॥२५॥

---

तद्रसाविष्टस्येति यावत् । पौरोभाग्यं = दोषैकदर्शित्वं, "दोषैकदृक्पुरोभागी"त्यमरः । चित्रे—नेयं वस्तुतः शकुन्तलेति—दोषः कथमुद्घाटितस्त्वयेत्युपालम्भः । नेदमुचितमाचरितं मत्सुखस्वप्नं विनाशयता त्वयेति यावत् ।

तदेवाह—दर्शनेति । तद्गतेन = प्रियागतेन, हृदयेन = मनसा, साक्षादिव—दर्शनसुखमनुभवतः = प्रियादर्शनानन्दं भावयतः, मे = मम, स्मृतिकारिणा = चित्रमेतदिति स्मरणं जनयता, त्वया—मम कान्ता—पुनरपि = भूयोऽपि, चित्रीकृता = चित्रतां प्रापिता, सत्यं मे प्रियैषेति भावनया प्रियाभूतं चित्रं—पुनस्त्वया स्मृतिमुपनयता—चित्रतां नीतमिति भावः । [ उत्प्रेक्षाऽनुप्रासौ, ] ॥२४॥

पूर्वापरविरुद्धः = असङ्गतः, भ्रान्तिनिराकरणेऽपि यत्रोपालम्भः, पूर्वं तां तथाऽनादृत्येदानीं मिथ्यं परिदेवनमिति वा—पूर्वापरविरोधो ज्ञेयः । विरहिमार्गः = वियोगिनां पन्थाः । विरहदशा वा । न विश्रामो यस्य तत्तथा = अनवसितम् , अनन्तमिति यावत् ।

प्रजागरादिति । तस्याः = प्रियायाः, स्वप्नसमागमः = स्वप्ने दर्शनं, प्रजागरात् = अनिद्रातः, खिलीभूतः = विनाशितः, विघ्नितः,

---

१. 'विरहमार्गः'

सानुमती—सर्वथा प्रमार्जितं त्वया प्रत्यादेशदुःखं प्रियसख्याः प्रत्यक्षमेव सखीजनस्य। [ सव्वधा पमज्जिदं तुए पच्चादेसदुक्खं पिअसहीए पच्चक्खं ज्जेव सहिजणस्स ]

चातुरिका—जयतु जयतु भर्त्ता। ( प्रविश्य— ) वर्तिकाकरण्डकं गृहीत्वा इतोऽहं प्रस्थिताऽस्मि—"

[ जेदु जेदु भट्टा। वत्तिआकरण्डअं गेह्णिअ इदो अहं पत्थिदम्हि—"। ]

राजा—ततः किम् ?

चेटी—"तन्मे हस्तात् पिङ्गलिकावेदितया[1] देव्या वसुमत्या "—अहमेवार्य्यपुत्रस्य उपनेष्यामि—"इति भणित्वा सबलात्कारं गृहीतम्।

[ तं मे हत्थादो पिङ्गलिआवेदिआए देवीए वसुमदीए अहं ज्जेव आज्जउत्तस्स उवणइस्सं त्ति भणिअ सवलक्कारं गहीदं। ]

विदूषकः—त्वं कथं विमुक्ता ?। [ तुमं कधं विमुक्का ]

---

तु = पुनः, बाष्पः—एनां = प्रियां, चित्रगतामपि, द्रष्टुं न ददाति, अनवरतं मे बाष्पप्रसरः, अनिद्राऽरतिश्चेति सूचितम्। चित्रादिना मनोविनोदमपि मे दैवं न सहत इति भावः। [ हेतुरनुप्रासश्चालङ्काराः। ] ॥२५॥

प्रत्यादेश एव दुःखं = निराकरणदुःखं, प्रमार्जितं = दूरीकृतं, सखीजनस्य = मम सानुमत्याः, प्रत्यक्षमेव = समक्षमेव।

वर्त्तिकाकरण्डकं=वर्णकमञ्जूषाम्–(रँग की पिटारी), इतः= अस्यामेव दिशि, पिङ्गलिकया तन्नाम्न्या चेटिकयाऽऽवेदितया = 'वर्त्तिकाकरण्डकमेषा नयती'ति विज्ञापितया, सबलात्कारं = हठात्,

कथ विमुक्ता = कुतो न दण्डितेति प्रश्नाशयः। विटपः = विस्तारः,

---

१ तरलिकाद्वितीयया'

**चेटी**—यावद्देव्या लताविटपलग्नमुत्तरीयाञ्चलं पिङ्गलिका मोचयति तावन्निह्नुतो मया आत्मा। [ जाव देवीए लदाविड़पलग्गं उत्तरीअञ्चलं पिङ्गलिआ मोआवेदि दाव णिह्नुदो मए अप्पा। ]

**राजा**—वयस्य! उपस्थिता देवी बहुमानगर्विता च; तत् भवानिमां प्रतिकृतिं रक्षतु।

**विदूषकः**—आत्मानमपि किमिति न भणसि। ( चित्रफलकमादायोत्थाय च—) यदि भवानन्तःपुर-कूटवागुरातो मोक्ष्यते, तदा मेघच्छन्नप्रासादे शब्दायिष्यते। इदञ्च तत्र गोपायामि,—यत्र पारावतमुज्झित्वाऽन्यः कोऽपि न प्रेक्षिष्यते। (इति द्रुतपदं निष्क्रान्तः।)
( अत्ताणम्पि किं ति ण भणसि। जइ भवं अन्तेउर-कूडवाणुरादो मुञ्चिस्सदि तदो मेहच्छण्णप्पासादे सदाविस्सदि एदं च तहिं गोवाएमि जहिं पारावदं उज्झिअ अण्णो कोवि ण पेक्खिस्सदि। )

---

"विस्तारो विटपोऽस्त्रिया" मित्यमरः। लग्नं = सक्तम् 'उत्तरीयस्याञ्चलम् = उत्तरीयचेलाञ्चलं, निह्नुतः = आच्छादितो लताविटपादिभिः। बहुना मानेन गर्विता = अतिमानदर्पिता। दृष्ट्वैवेमां प्रतिमां मत्सपत्नीमालिखतीति कृत्वा मानं विदध्यादित्याशयः। प्रतिकृतिं = चित्रं, रक्षतु = गोपायतु।

आत्मानमपीति। 'गोपायेति कुतो न कथ्यते, चित्रं गोपायेत्येव किमुच्यते' ?—इति शेषः। अतिरोषणायास्तस्याः पुरतः पलायनमेव युक्तमस्माकमित्याशयः। अन्तःपुरमेव—कूटवागुरा, तस्याः = अन्तःपुररूपान्मायाबन्धनात्, वसुमत्यादिप्रपञ्चादिति यावत्। 'मेघच्छन्न' इति प्रासादस्य सञ्ज्ञा, शब्दायिष्यते = आह्वयिष्यति। 'शब्दापयेति' पाठे—आह्वयेत्यर्थः। इतो विमुच्य—मेघप्रतिच्छन्दके आगन्तव्यम्। पारावतः = कपोतः, उज्झित्वा = विहाय। द्रुतानि पदानि यस्मिन् कर्मणि तद्यथा स्यात्तथा = त्वरितपदन्यासम्।

**सानुमती**—अह्मो ! अन्यसंक्रान्तहृदयोऽपि प्रथमसम्भावनं रक्षति; स्थिरसौहृदस्तावदेष: । [ अह्मो ! अण्णसंकन्तहिअओ वि पढमसम्भावणं रक्खदि, थिरसोहिदो दाव एसो । ]

(प्रविश्य पत्रहस्ता—)

**प्रतीहारी**—जयतु जयतु देवः ।

[ जेदु जेदु देवो । ]

**राजा**—वेत्रवति ! न खल्वन्तरे त्वया दृष्टा देवी ? ।

**प्रतीहारी**—देव ! दृष्टा, पत्रहस्तां मां प्रेक्ष्य प्रतिनिवृत्ता ।

[ देव दिट्ठा, पत्तहत्थं मं पेक्खिअ पड़िणिउत्ता । ]

**राजा**—कार्य्यज्ञा देवी, कार्य्योपरोधं मे परिहरति ।

**प्रतीहारी**—देव ! अमात्यो विज्ञापयति—"अद्य राजकार्य्यस्य बहुलतया एकमेव मया पौरकार्य्यं प्रत्यवेक्षितम्, तत् देवः पत्रारोपितं प्रत्यक्षीकरोतु"—इति ।

[ देव ! अमच्चो विण्णवेदि अज्ज रज्जकज्जस्स बहुलदाए एक्कं ज्जेव मए पोरकज्जं पच्चवेक्खिदं, तं देवो पत्तारोविदं पच्चक्खीकरेदु त्ति । ]

**राजा**—इतः पत्रं दर्शय ।

(प्रतीहारी—उपनयति । )

---

अन्यस्यां सङ्क्रान्तं हृद ं यस्यासौ तथा = शकुन्तलासक्तचित्तोऽपि, प्रथमसम्भावनं = पूर्वानुरागं, स्थिरः स्नेहो यस्यासौ तथा = दृढानुरागः, वसुमतीप्रणयमर्यादापालनादिति भावः । अन्तरे = मार्गमध्ये । खलुरत्र प्रश्ने । प्रतिनिवृत्ता = स्वभवनमेव प्रविष्टा, कार्यं जानाति—कार्यज्ञा = अवसरज्ञा, कार्यगौरवाभिज्ञा वा, कार्यस्योपरोधं = कर्त्तव्यव्याघातं, परिहरति = न कुरुते । राज्यकार्यस्य = सन्धिविग्रहादिकार्यस्य, पौरकार्यं = ,रवासिश्रेष्ठिकार्यं, प्रत्यक्षीकरोतु = विलोकयतु । उपनयति = पत्रमर्पयति ।

**राजा**—(वाचयति—) विदितमस्तु देवपादानाम्, "धनवृद्धिर्नाम वणिक् वारिपथोपजीवी नौव्यसनेन विपन्नः, स चानपत्यः, तस्य चानेककोटिसंख्यं वसु, तदिदानीं राजस्वतामापद्यते—इति श्रुत्वा देवः प्रमाणम्—" इति। (सविषादम्—) कष्टं खल्वनपत्यता। वेत्रवति! महाधनतया बहुपत्नीकेनानेन भवितव्यम्, तदन्विष्यतां यदि काचिदापन्नसत्त्वास्य भार्या स्यात्?।

**प्रतीहारी**—इदानीमेव साकेतपुरस्य श्रेष्ठिनो दुहिता निर्वृत्तपुंसवना तस्य जाया श्रूयते। [दाणिं ज्जेव साकेदउरस्स सेट्ठिणो दुहिदा णिव्वुत्तपुँसवणा तस्स जाआ सुणीअदि।]

**राजा**—स खलु गर्भः पित्र्यमृक्थमर्हति। गत्वैवममात्यं ब्रूहि।

---

देवपादानां = महाराजस्य, पादशब्दः पूजायां। वारिणः पन्थाः—वारिपथस्तेनोपजीवति—सः = समुद्रगामी पोतवणिक्, नौव्यसनेन = पोतस्य विनाशेन, विपन्नः = मृतः, अनपत्यः = सन्तानविकलः, अनेकाः कोटयः संख्या यस्य तत्तथा = अनेककोटिपरिमितं, वसु = धनं, राजस्वतां = राजधनत्वं, राजा एव तस्याधिकारीति निश्चिमस्माभिरिति भावः। देवः प्रमाणं = यथा प्रभवे रोचते तथाऽनुमन्यताम्। "इतरेषां तु वर्णानां सर्वाभावे हरेन्नृप" इति मनुः।

अनपत्यता = सन्तानराहित्यं, कष्टं = दुःखप्रदं। महद्धनं यस्यासौ तस्य भावस्तया = धनाढ्यतया, बह्व्यः पत्न्यो यस्य—तेन—बहुपत्नीकेन = बहुभार्येण, आपन्नसत्त्वा = गर्भिणी, अन्विष्यतां = निपुणं निरीक्ष्यतां। साकेतः पुरं (निवासः—) यस्य—तस्य—साकेतपुरस्य = अयोध्यानिवासिनः, "स्यात्साकेतोऽयोध्याया" मिति हैमः। श्रेष्ठिनः = धनिनः, निर्वृत्तं पुंसवनं यस्याः सा = जातपुंसवनसंस्कारा, तस्य = धनवृद्धेः, गर्भः = गर्भस्थः पुत्रः, पितुरागतं—पित्र्यं = पितृसम्बन्धि, ऋक्थं = धनं "रिक्थमृक्थं धनं वसु"

प्रतीहारी—यद्देव आज्ञापयति। (इति प्रस्थिता।)
[जं देवो आणवेदि।]

राजा—एहि तावत्।

प्रतीहारी—(प्रतिनिवृत्य—) एषास्मि। [एसाह्मि।]

राजा—किमनेन सन्ततिरस्ति नास्तीति—

येन येन वियुज्यन्ते प्रजाः स्निग्धेन बन्धुना।
स स पापादृते तासां दुष्यन्त इति घुष्यताम् ॥२६॥

प्रतीहारी—एवं [1]नाम घोषयितव्यम्। (इति निष्क्रम्य-पुनः प्राविश्य—) देव! काले प्रवृष्टमिवाभिनन्दितं देवस्य शासनं महाजनेन। [एदं णाम घोषइदव्वं। देव! काले पविट्ठं विअ अहिणन्दिदं देवस्स सासणं महाजणेण।]

---

इत्यमरः। एहि तावत् = प्रतिनिवर्त्तस्व तावत्, किञ्चिच्छ्रुत्वा पश्चाद्गन्तव्यं। सन्ततिरस्ति नास्तीति विचारेण किं? = न प्रयोजनं,—

तदा किं कार्यमित्यत आह—येनेति। येन येन स्निग्धेन = प्रियेण बन्धुना पितृभ्रातृपुत्रादिना, प्रजाः—वियुज्यन्ते = विरहिता भवन्ति, पापादृते = पापसम्बन्धं विहाय, स्त्रीणां पतित्वं विहाय। तासां = प्रजानां सः सः = यस्य पिता नास्ति, तस्य दुष्यन्तः पिता, भ्रातृविगमे भ्राता, पुत्रविगमे पुत्र इति—घुष्यतां = घोषणा क्रियताम्। यस्याः पतिर्मृतस्तस्यास्तु नाहं पतिरिति-पापादृते-इत्यनेनोक्तम्। [अनुप्रासः] ॥२६॥

एवम् = ईदृशमेव, घोषयितव्यं = घोषणामर्हति, उचितमेतदिति भावः। महाजनेन = पौरवर्गेण,-काले = समये, प्रवृष्टमिव = जलवर्षणमिव—देवस्य शासनं = राजघोषणा, अभिनन्दितम् = साधु स्वीकृतम्।

---

1 'एतन्नाम' पा०

राजा—( दीर्घमुष्णञ्च निःश्वस्य— ) एवं भोः ! सन्तति-विच्छेदनिरवलम्बना मूलपुरुषावसाने सम्पदः परमुपतिष्ठन्ते, ममाप्यन्ते पुरुवंशश्रिय एष वृत्तान्तः[१] ।

प्रतीहारी—प्रतिहतममङ्गलम् । [ पडिहदं अमङ्गलं । ]

राजा—धिङ्मामुपनतश्रेयोऽवमानिनम् ।

सानुमती—असंशयं प्रियसखीमेव हृदये कृत्वा निन्दितोऽनेनात्मा । [असंसअं पिअसहीं ज्जेव हिअए कदुअ णिन्दिदो अणेण अप्पा ।]

राजा—

संरोपितेऽप्यात्मनि धर्म्मपत्नी
त्यक्ता मया नाम कुलप्रतिष्ठा ।
कल्पिष्यमाणा महते फलाय
वसुन्धरा काल इवोप्तबीजा ॥२७॥

---

एवम् = एवमेव, धनवृद्धिश्रेष्ठिधनवत्, सन्ततिच्छेदेन निरवलम्बनाः = सन्तानाभावात्, आश्रयविकलाः सत्यः, अवसाने धनिजनमरणे, मूल-पुरुषः = वंशस्यादिमः पुरुषः । सम्पदः = वसूनि, परम् = अन्यं, राजादिकं, उपतिष्ठन्ते = सङ्गता भवन्ति । ममापि = पुरुवंशान्तिमपुरुषस्य, अन्ते = अवसाने, एषः = अन्यहस्तसमागमः, पुरुवंशश्रीः = राजलक्ष्मीः, अकाले = अनवसरे, उप्तबीजा = रोपितबीजा भूमिरिव, एवंवृत्ता = ईदृशीं दशां गता–शोचनीया संवृत्ता । प्रतिहतमिति । राज्ञोऽमङ्गलाशंसनं श्रुत्वा शुभं भव त्विति प्रतिहार्या वचः, हृदये कृत्वा = विचिन्त्य,–

संरोपित इति । काले = बीजारोपणयोग्ये समये, उप्तानि बीजानि यस्यां सा तथा = कृतबीजवपना, अत एव–महते = अनल्पाय, फलाय =

---

१ "ममाप्यन्ते पुरुवंशश्रीरकाल इवोप्तबीजा भूरेवं संवृत्ता" ।

सानुमती—अपरित्यक्ता इदानीं ते भविष्यति ।

[ अपरिच्चत्ता दाणिं दे भविस्सदि । ]

चतुरिका—(जनान्तिकम्—) आर्ये ! एतत्पत्रं प्रेषयता किं विचारितममात्येन ?—प्रेक्षस्व तावत्—भर्तुर्बाष्पजलप्रवाहः संवृत्तः । [१]अथवा नैष शोकं बुद्धिपूर्वकं परिवर्जयिष्यति, तन्मेघच्छन्नागारस्थितं निर्वाणसमर्थमार्य्यमाधव्यं गृहीत्वाऽऽगच्छ ।

[ अज्जे ! एदं पत्तं पेसअन्तेण किं विआरिदं अमच्चेण, पेक्ख दाव भट्टिणो वाहजलप्पवाहो संवुत्तो । अधवा ण एसो सोअं बुद्धिपुव्वअं पडिवज्जिस्सदि ता मेहच्छण्णागारट्ठिदं णिव्वाणसमत्थं अज्जमाहव्वं गेण्हिअ आअच्छ । ]

प्रतीहारी—सुष्ठु त्वया भणितम् (–इति निष्क्रान्ता ।)

[ सुट्ठु दे भणिदं । ]

---

लाभाय, कल्पिष्यमाणा = सम्पत्स्यमाना, वसुन्धरेव = भूमिरिव, मया—आत्मनि संरोपितेऽपि = गर्भरूपेण योजितेऽपि, "आत्मा वै जायते पुत्र" इति श्रुतेः । कुलस्य प्रतिष्ठा=वंशप्रतिष्ठाहेतुः, धर्मपत्नी = भार्या शकुन्तला, त्यक्ता = अवमानिता, नामेति निन्दायाम् । उचिते समये कृष्टा भूमिरिव गर्भाधानविधिना निहितगर्भाऽपि शकुन्तला मयाऽवधोरितेति महदनौचित्यं मे–इति भावः । [ काव्यलिङ्गम्, उपमा 'उपजातिः' ] ॥ २७ ॥

अपरित्यक्ता = लब्धा, जनान्तिकम् = त्रिपताककरेण अन्यानपवार्य, आर्ये = प्रतिहारि ! एतत्पत्रं = धनवृद्धिवृत्तान्तपत्रं, बाष्पजलस्य प्रवाहः = अश्रुधारासारः, संवृत्तः = जातः, बुद्धिपूर्वकं = स्वयं विचार्यैव, परिवर्जयिष्यति=त्यक्ष्यति । निर्वाणसमर्थं=शोकापनोदकुशलम्, संशयं = पिण्डलाभ-

---

१ चतुरिका—अनेनं सार्थवाहवृत्तान्तेन द्विगुणोद्वेगो भर्त्ता, एनमाश्वासयितुं मेघप्रतिच्छन्दादार्यमाधव्यं गृहीत्वागच्छ ।

राजा—अहो ! दुष्यन्तस्य संशयमारूढाः पिण्डभाजः ।

कुतः—

अस्मात्परं बत यथाश्रुति सम्भृतानि
को नः कुले निवपनानि करिष्यतीति ।
नूनं प्रसूतिविकलेन मया प्रसिक्तं
धौताश्रुसेकमुदकं पितरः पिबन्ति ॥२८॥

सानुमती—हा धिक्! हा धिक्! सति खलु दीपे व्यवधानदोषेणान्धकारमनुभवति राजर्षिः ।

[ हद्धी हद्धी ! सदि क्खु दीवे ववधाणदोसेण अन्धआरं अणुहोदि राएसी । ]

---

संशयम्, आरूढाः = प्राप्ताः, पिण्डभाजः = पितरः, वंशच्छेदशङ्कया पितरो मे चिन्तिता इति भावः ।

पितृचिन्तामेवाह—अस्मादिति । 'बत' इति खेदे । अस्मात् = दुष्यन्तात् परं, श्रुतिमनतिक्रम्य–यथाश्रुति = वेदोदितेन विधिना, संहितानि = पितृहितानि, 'सम्भृतानी'ति पाठे–नानोपकरणयुतानि, निवपनानि = श्राद्धादीनि पितृदानानि, "पितृदानं निवापः स्या"दित्यमरः । नः = अस्माकं, कुले = पुरुवंशे, कः करिष्यति–इति = इति चिन्तया, नूनं = ध्रुवं, प्रसूतिविकलेन = सन्तानरहितेन, मया प्रसिक्तं = पितृभ्यो दत्तम्, उदकं = जलाञ्जलिं, धौताश्रूणां सेको येन तत्-यथा स्यात्तथा = तेनैवोदकेनाश्रुसमाविलं मुखं प्रक्षाल्य, उदकं = तर्पणजलं, पिबन्ति । "धौताश्रुशेप"मिति पाठे—धौतान्यश्रूणि येन तच्च स चासौ शेषश्चेत्यर्थो बोध्यः । [ 'दीर्घमुष्णं निश्वस्ये'त्यारभ्यैतदन्तं छलनं नामाङ्गम् । उत्प्रेक्षा, काव्यलिङ्गं, वसन्ततिलका । ] ॥ २८ ॥

दीपे = प्रदीपे, वंशाङ्कुरे–शकुन्तलागर्भे च, व्यवधानदोषेण = आवरण-

**चतुरिका**—भर्त्तः! अलं सन्तापितेन, वयस्थ एव प्रभुरपरासु देवीष्वनुरूपपुत्रजन्मना पूर्वपुरुषाणामनृणो भविष्यति। (आत्मगतम्—) न मे वचनं प्रतीच्छति, अनुरूपमपि औषधमातङ्कं निवर्त्तयति। [भट्टा! अलंसन्दाविदेन, वअत्थो ज्जेव पहू अवरासुं देवीसु अणुरूवपुत्तजम्मेण पुव्वपुरुसाणं अणिणो भविस्सदि। ण मे वअणं पड़िच्छदि। अणुरूवं वि ओसधं आदङ्कं णिअत्तेदि।]

**राजा**—(शोकनाटितकेन—)

आमूलशुद्धसन्तति कुलमेतत्पौरवं प्रजाबन्ध्ये।
मय्यस्तमितमनार्य्ये देश इव सरस्वतीस्रोतः ॥२९॥

(इति मोहमुपगतः।)

**चतुरिका**—(ससम्भ्रमम्—) समाश्वसितु समाश्वसितु भर्त्ता।
[समस्ससदु समस्ससदु भट्टा।]

---

दोषेण, अज्ञानदोषेणेति च प्रकृते, अन्धकारः = तमः, दुःखञ्च प्रकृते, वयस्थः = तरुणः, "वयस्थस्तरुणो युवे" त्यमरः। अपरासु देवीषु = शकुन्तलाभिन्नासु देवीषु, अनुरूपस्य = स्वोचितस्य, पुत्रस्य जन्मना—उत्पादनेन, पूर्वपुरुषाणां = पितृणाम्, प्रतीच्छति=गृह्णाति। अनुरूपं = स्वोचितम्, आतङ्कं = रोगम्, एवञ्च विदूषक एव शान्त्वने समर्थः, नाहमिति भावः।

**आ मूलेति**। आ मूलात् शुद्धा सन्ततिर्यस्य तत्=आदितोऽपि अविच्छिन्नप्रवाहं, एतत्—पौरवं = पुरुसम्बन्धि, कुलं = वंशः, अनार्ये = अनार्यजनसङ्कुले, देशे—सरस्वत्याः—तन्नामिककायाः नद्याः, स्रोत इव प्रवाह इव, प्रजया वन्ध्ये=सन्तानशून्ये, अनार्ये = पापाचारे मयि=दुष्यन्ते, अस्तमितं = विच्छिन्नम्।

सरस्वती स्रोतोऽपि—आ मूलात्-प्रादुर्भावस्थलादारभ्य, शुद्धसन्तति=अविच्छिन्नधारं, पुरु एव पौरवं = विपुलं च—अनार्ये देशे सहसैव लुप्तप्रवाहं—भवति। सरस्वती नदी—क्वचित्प्रवहति क्वचिदन्तर्हिता भवतीति प्रसिद्धम्। [उपमा,] ॥ २९ ॥

**सानुमती**—किमिदानीमेव निर्वृतं करोमि, अथवा श्रुतं मया शकुन्तलां समाश्वासयन्त्या देवजनन्या मुखात्—"यज्ञभागसमुत्सुका देवा एव तथाऽनुष्ठास्यन्ति,—यथा स भर्त्ताऽचिरेण धर्म्मपत्नीं त्वामभिनन्दिष्यति—" इति। तन्न युक्तं मेऽत्र विलम्बितुम्, यावदेतेन वृत्तान्तेन प्रियसखीं शकुन्तलां समाश्वासयामि। (इत्युद्भ्रान्तकेन निष्क्रान्ता।)

[किं दाणिं ज्जेव णिव्वुदं करेमि। अधवा सुदं मए सउन्तलं समस्सन्तीए देवजणणीए मुहादो जण्णभाअसमुस्सुआओ देवाओ ज्जेव तह अणुचिट्ठिस्सन्ति, जह सो भट्टा अइरेण धम्मपदिणीं तुमं अहिणन्दिस्सदित्ति। ता ण जुत्तं मे एत्थ विलम्बिदुं, जाव इमिणा वुत्तन्तेण पिअसहीं सउन्तलं समास्सासेमि।]

(नेपथ्ये-)

भोः! अब्रह्मण्यम्! अब्रह्मण्यम्!!। [भो! अव्वह्मण्णं अव्वह्मणं।]

**राजा**—(प्रत्यागतचेतनः कर्णं दत्त्वा-) अये! माधव्यस्येवार्त्तनादः!।

---

मोहं = मूर्च्छां, निर्वृतं = शकुन्तलावृत्तान्तनिवेदनेन सुखितं, देवजननी = कश्यपपत्नी—अदितिः।

यज्ञभागे समुत्सुकाः=यज्ञाभागाभिलाषिणः, सपत्नीकस्यैव यज्ञेऽधिकारात्, यद्वा-विरहातुरो राजा यज्ञादिदेवकृत्यं यथावन्नानुतिष्ठतीति पुनस्तस्मिन् प्रकृतिस्थे सति यज्ञादयः पूर्ववत्प्रवर्त्तेरन्नित्युत्सुका देवाः, त्वां = शकुन्तलाम्, अभिनन्दयिष्यति = आनन्दयिष्यति। अनेन = राजानुरादिसूचकेन, उद्भ्रान्तकम् = उत्प्लुतिभेदः, "पूर्वं दक्षिणमुत्थाप्य पादं सङ्कोचयेत्ततः, वामं शीघ्रं भ्रमेद्वामावर्त्तमुद्भ्रान्तकं विदु"रिति तल्लक्षणम्, आदानं नाम सन्ध्यङ्गं,

ब्रह्मणे हितं ब्रह्मण्यं, न ब्रह्मण्यम्-अब्रह्मण्यं, = नाहं वध्यः! नाहं वध्यः!! "अब्रह्मण्यमवध्योक्ता"वित्यमरः ['दुहाई सरकार की'।] प्रत्या-

**चतुरिका**—स नाम माधव्यस्तपस्वी पिङ्गलिकामिश्रिताभि श्चेटिकाभिश्चित्रफलकहस्तः प्राप्तो भवेत्। [सोणाम माधव्वो तवस्सी पिङ्गलिआमिस्सिआहिं चेड़िआहिं चित्तफलअहत्थो पाविदो भवे]।

**राजा**—चतुरिके! गच्छ, मद्वचनादनिषिद्धपरिजनां देवी-मुपालभस्व।

(**चतुरिका**—निष्क्रान्ता।)

(**नेपथ्ये**—भूयः स एव शब्दः।)

**राजा**—परमार्थतो भीतिभिन्नस्वरो ब्राह्मणः। कः को-ऽत्र भोः!

(प्रविश्य—)

**कञ्चुकी**—आज्ञापयतु देवः।

**राजा**—निरूप्यतां किमेवं माधव्यब्राह्मणः क्रन्दतीति?।

**कञ्चुकी**—यावदवलोकयामि। [इति निष्क्रम्य ससम्भ्रमं पुनः प्रविश्य—]।

**राजा**—पार्वतायन! न खलु किञ्चिदत्याहितम्?

---

गतचेतनः = लब्धचैतन्यः,—मूर्च्छापगमात्। आर्त्तनादः = करुणस्वरः, माधव्यो—विदूषकः। तपस्वी = दयनीयः, पिङ्गलिकामिश्रिताभिः = पिङ्गलिकामुख्याभिः। तत्ताडनादिनाऽऽक्रन्दते माधव्य इत्याशयः।

न निषिद्धः परिजनो यया ताम् = अनिवारितपरिजनचापल्यां, देवीं = वसुमतीम्, उपालभस्व = निन्दस्व, 'किमिमाश्चेटिका न निवारिता माधव्यं क्लेशयन्त्य' इति। स एव = अब्रह्मण्यम्, अब्रह्मण्यमिति शब्दः। भूयः = पुनरपि। परमार्थतः = वस्तुतः, भीत्या भिन्नः स्वरो यस्यासौ तथा = वस्तुतो, भयातुरो यतो—नोपहासमात्रेणैवं विधः शब्दो भवतीत्याशयः। किम्?

कञ्चुकी—मैवम् ।

राजा—ततः कुतोऽयं वेपथुः । तथाहि—

प्रागेव जरसा कम्पः सविशेषस्तु सम्प्रति ।
आविष्करोति सर्वाङ्गमश्वत्थमिव मारुतः ॥३०॥

कञ्चुकी—परित्रायतां [1]सुहृदं महाराजः ।

राजा—कस्मात् परित्रातव्यः[2] ? ।

कञ्चुकी—महतः कृच्छ्रात् ।

राजा—अये ! भिन्नार्थमभिधीयताम् ।

कञ्चुकी—योऽसौ दिगवलोकनप्रासादो [3]मेघच्छन्नो नाम—"

राजा—किन्तत्र ? ।

=कुतः, यावत् = सर्वं यथावत्, अत्याहितं = महद्भयकारणं, "अत्याहितं महाभीति" रित्यमरः । मैवं = नैव किञ्चित्, वेपथुः = कम्पः ।

प्रागेवेति । जरसा = वार्धक्येन, प्रागेव = इतः पूर्वमेव, कम्पः = वेपथुरासीत्, तु = पुनः, सम्प्रति इदानीं, सविशेषः = विशिष्टः, अधिकः, सन्, सर्वाङ्गं = सकलमेव शरीरं, अश्वत्थं = पिप्पलं, मारुत—इव, कम्पः आविष्करोति = चालयति । ( सर्वाङ्गमाविष्करोति—सर्वाङ्गमालम्बते कम्प इति वार्थः । ) [ अनुमानम्, उपमा ] ॥३०॥

सुहृदं = माधव्यं, परित्रायतां, पालयतु । कृच्छ्रात् = विपत्तेः, भिन्नोऽर्थो यस्मिंस्तद्यथा स्यात्तथा = स्पष्टार्थं, स्पष्टतरमिति यावत् । दिशामवलोकने उचितः प्रासादः—दिगवलोकनप्रासादः = दूरविलोकनोचितहर्म्यं,

१ क्वचित्—कंचुकी—( प्रविश्य ) 'परित्रायतां देवः संशयगतं वयस्यं' ।
२ केनात्तगन्धो माणवकः ! ३ 'धरहरा' 'बुर्ज'—इति भाषा ।

कञ्चुकी—

'तस्याग्रभागाद् गृहनीलकण्ठै-
रनेकविश्रामविलङ्घ्यशृङ्गात्।
सखा प्रकाशेतरमूर्त्तिना ते
केनापि सत्त्वेन निगृह्य नीतः ॥३१॥

राजा—(सहसोत्थाय-) आः! ममापि सत्त्वैरभिभूयन्ते गृहाः? अथवा बहुप्रत्यवायं नृपत्वम्—

अहन्यहन्यात्मन एव ताव-
ज्ज्ञातुं प्रमादस्खलितं न शक्यम्।
प्रजासु कः केन पथा प्रयाती-
त्यशेषतः कस्य पुनः प्रभुत्वम् ॥३२॥

तस्येति। गृहनीलकण्ठैः=गृहपालितमयूरैः, तेन बलवत्त्वम्, अनेकैर्विश्रामैर्विलङ्घ्यं शृङ्गं यस्य तस्मात्=अनेकविश्रामविलङ्घ्यशृङ्गात्=बहुशो मध्ये-मध्ये विच्छिद्य प्रापणीयशिखरात्—अत्युन्नतादिति यावत्। तस्य = प्रासादस्य, अग्रभागात् = ऊर्ध्वतलात्, केनापि—प्रकाशेतरा मूर्त्तिर्यस्य तेन प्रकाशेतरमूर्त्तिना = अदृश्यशरीरेण, सत्त्वेन = भूतादिना, निगृह्य = बलादभिभूय, ते सखा = माधव्यः, नीतः = क्वचन प्रापितः। मयूरैरपि न युगपत्प्राप्तुं शक्यात्प्रासादादेव सुहृत्केनाप्यदृश्येन भूतादिना नीतः क्रोशतीति भावः। "सत्त्वं क्ष्मादौ पिशाचादा"विति मेदिनी। [ उपजातिः ] ॥३१॥

गृहाः = प्रसादाः, तत्स्था लोका वा। बहवः प्रत्यवाया यत्र तत् = बहुप्रत्यवायं = क्लेशबहुलं, पापाविलं वा नृपत्वं = राजकार्यं, तदेवाह—

अहनीति। तावत् = प्रथमम्, अहन्यहनि = प्रतिदिनम्, आत्मन

१ अदृष्टरूपेण केनाऽपि सत्त्वेनातिक्रम्य मेघप्रतिच्छन्दस्य प्रासादस्याग्रभूमिमारोपितः।

( नेपथ्ये- ) [1]अविहा ! अविहा !

[ अविधावेहि भो ! अविधावेहि । ]

**राजा**—( आकर्ण्य गतिभेदं रूपयन्— ) सखे ! न भेतव्यं, न भेतव्यम् ।

( नेपथ्ये- ) भोः ! कथं न भेष्यामि, एष मां कोऽपि प्रत्यवनतशिरोधरमिक्षुमिव त्रिभङ्गं करोति[2] ।

[ भो ! कधं ण भाइस्सं । एसो मं कोविपच्चामोड़िअ सिरोधरं इक्खुं विअ भग्गत्थिं करिदुमिच्छदि । ]

**राजा**—( सदृष्टिक्षेपम्— ) धनुस्तावत्[3] ।

---

एव = स्वस्यैव, प्रमादेन स्खलितं = अनवधानोत्थितं कार्यवैपरीत्यं, ज्ञातुं न शक्यं, प्रजासु = जनेषु, कः केन पथा = धर्म्मेण, विपरीतेन वा—प्रयाति = व्यवहरति, इति = एतत्, अशेषतः = कार्त्स्न्येन ज्ञातुं—कस्य पुनः प्रभुत्वं = कः समर्थः ? । स्वस्यैव तावत्स्खलितं न ज्ञायते, किं सकलस्य लोकस्येति-केनापि पापेनैव मद्गेहेऽपि सत्त्ववाधेयमिति भावः [अनुप्रासः, उपजातिः] ॥३२॥

अविहेति—खेदे देशी । 'अविधेति'पाठे अविधेत्याक्रोशे । 'अभिधावे'ति-पाठे-त्वरितमागच्छेत्यर्थः । गतिभेदेन = क्रोधोद्धतया गत्या, परिक्रामन् = परिचलन्, पुनस्तदेव पठित्वा—"भो वयस्य, अविहाऽविहेत्युक्त्वा" अवनता शिरोधरा यस्य तं—तिर्यग्ग्रीवम्, अधोग्रीवं वा, माम्-इक्षुमिव त्रिभङ्गं = त्रिखण्डम् । पाठान्तरे-प्रत्यामोड्य=पीडयित्वा, भग्नास्थिं, शिरोधरा—ग्रीवा । सदृष्टिक्षेपं = विलोक्य, धनुस्तावत्—आनयेति शेषः । शरैः सहितं—

---

१ अभिधाव भो ! अभिधाव ! पा० २ "प्रत्यामोड्य शिरोधरामिक्षुमिव भग्नास्थिं कर्तुमिच्छति" । पा० ३ 'धनुर्धनुः'

( प्रविश्य शार्ङ्गहस्ता— )

**प्रतीहारी**—जयतु जयतु भर्त्ता। एतद्धस्तावारसहितं शरासनम्[1]।

[ जअदु जअदु भट्टा। एदं ससरं सरासणं हत्थावारओ अ। ]

( राजा—सशरं धनुरादत्ते- )

( नेपथ्ये- )

एष त्वामभिनवकण्ठशोणितार्थी
शार्दूलः पशुमिव हन्मि चेष्टमानम्[2]।
आर्त्तानां भयमपनेतुमात्तधन्वा
दुष्यन्तस्तव शरणं भवत्विदानीम् ॥३३॥

**राजा**—( सरोषम्— ) कथं मामेवोद्दिशति! आः, तिष्ठ

---

सशरं = बाणैः सहितं, शरासन = धनुः, हस्तावापः = ज्याघातवारणं चर्मफलकं हस्तयोराबध्यते।

एषेति। अभिनवं कण्ठस्य शोणितमर्थो यस्यासौ—अभिनवकण्ठशोणितार्थी=उष्णोष्णकण्ठरक्तपानाभिलाषी, एषः = एषोऽहं, चेष्टमानं = स्फुरन्तं, त्वां—शार्दूलः = व्याघ्रः, पशुमिव = हरिणादिकमिव;—हन्मि, आर्त्तानां = भीतानां, भयमपनेतुम् = दूरीकर्त्तुम्, आत्तं धनुर्येनासौ—आत्तधन्वा = अधिज्यधन्वा, दुष्यन्तः, इदानीम् = अद्य तव—शरणं = रक्षिता, भवतु—त्वां रक्षतु तावद् दुष्यन्तः का शक्तिर्दुष्यन्तस्य मया गृहीतस्य तव रक्षण इति भावः। [ उपमानुप्रासौ, प्रहर्षिणी ] ॥३३॥

मामेवोद्दिशति = मामधिक्षिपति, मामुद्दिश्य बहु भाषते इति वा। कौणपश्चासावपसदश्च कौणपापसदः! तत्सम्बुद्धौ रूपं—हे=राक्षसाधम! "राक्षसः कौणपः क्रव्या"दित्यमरः। न भवसि = द्रागेव मरिष्यसि मद्बाणाहत

---

१ "सशरं शरासनं हस्तावारकश्च" पा०। २ 'वेष्टमानम्'

तिष्ठ, कौणपापसद ! त्वमिदानीं न भवसि ?। (चापमाराप्ये-) पार्वतायन ! सोपानमार्गमादेशय ।

कञ्चुकी—इतो इतो देवः ।

(सर्वे सत्वरमुपसर्पन्ति ।)

राजा—(समन्तादवलोक्य-) अये ! शून्यं खल्विदम् ?।

(नेपथ्ये-) भोः ! परित्रायस्व परित्रायस्व । अहं त्वां प्रेक्षे, त्वं मां न प्रेक्षसे । मार्जारगृहीत उन्दुरुरिव निराशोऽस्मि जीविते ।

[भो ! परित्ताआहि परित्ताआहि । अहं तुमं पेक्खामि, तुमं मं ण पेक्खसि । मज्जारगहिदो उन्दुरू विअ णिरासोह्मि जीविदे ।]

राजा—भोस्तिरस्करिणीगर्वित ! मदीयमस्त्रमपि त्वां न पश्यति ?। स्थिरो भव, मा च ते वयस्यसम्पर्काद्विश्वासोऽभूत् । एष तमिषुं सन्दधे—

यो हनिष्यति वध्यं त्वां रक्ष्यं रक्षिष्यति द्विजम् ।
हंसो हि क्षीरमादत्ते तन्मिश्रा वर्जयत्यपः ॥३४॥

(इति शस्त्रं सन्धत्ते ।)

---

इत्यर्थः । सोपानस्य मार्गम्=आरोहणमार्गं,–पा० [कुणपासनोऽपि राक्षसः ।] इदं = भवनं, विडालेन = मार्जारेण ग्रहीतं=धृतः, मूषिक इव, जीविते = जीवने निराशोऽस्मि = व्यपगताशो जातः, मार्जारेण गृहीतो मूषिकः कथंचिन्मुक्तोऽपि न जीवति तन्नखराहतस्तद्वदहमपि निराशोऽस्मि जीवित इत्याशयः ।

तिरस्करिणी नाम—अन्तर्धानविद्या, तया गर्वितः—मत्तः, तत्सम्बुद्धौ रूपम् । ते = तव वयस्यस्य = माधव्यस्य, सम्पर्कात् = शरीरसंयोगात्, विश्लेषः = वियोगः, मा भूत् = मा भवतु नाम । माधव्यवपुःसम्बन्धे सत्यपि, न मे बाणमोक्षे बाधा, ननु कदाचित्तव बाणो माधव्यमेव हन्यादित्यत आह—य इति । तं = तादृशम् , इषुं = बाणं, सन्दधे—यः

( ततः प्रविशति मातलिर्विदूषकश्च । )

**मातलिः**—आयुष्मन् !

कृताः शरव्यं हरिणा तवासुराः,
शरासनं तेषु विकृष्यतामिदम् ।
प्रसादसौम्यानि सतां सुहृज्जने
पतन्ति चक्षूंषि न दारुणाः शराः ॥३५॥

---

=बाणः—वध्यं = वधार्हं त्वां हनिष्यति = मारयिष्यति । रक्ष्यं = रक्षणीयतयाऽभिमतं, द्विजं = माधव्यं, रक्षिष्यति = पालयिष्यति । हि—यतः—हंसः—क्षीरं = स्वभोज्यम्, आदत्ते = गृह्णाति, तेन मिश्राः—तन्मिश्राः = पयसा मिलिताः, अपः = जलम्, वर्जयति = त्यजति । [ दृष्टान्तालङ्कारः । भोस्तिरस्करिणी गर्विते'त्यादिनैतदन्तेन व्यवसायो दर्शितः । ] ॥३४॥

अत्र 'अब्रह्मण्य' मित्यत आरभ्य विद्रवो नाम गर्भसन्ध्यङ्गं दर्शितं "वधो बोगो विद्रवः स्याद्वधसन्ताडनादिभिः"—इति तल्लक्षणात् ।

मातलिः = इन्द्रसारथिः, "सूतो मातलि"रित्यमरः ।

कृता इति । हरिणा = इन्द्रेण, असुराः = राक्षसाः, तव शरव्यं = लक्ष्यं कृताः "लक्ष्यं लक्षं शरव्यञ्चे"त्यमरः । तेषु = असुरेषु, इदं शरासनं = धनुरिदं, विकृष्यताम् = सन्धीयताम् । सतां = साधूनां, सुहृज्जने = स्वबन्धुवर्गे, प्रसादेन सौम्यानि—प्रसादसौम्यानि = प्रसन्नमधुराणि, चक्षूंषि = लोचनानि, पतन्ति, दारुणाः = विदारणदारुणाः, शराः = बाणाः, न—पतन्ति । अस्मासु बन्धुवर्गेषु स्नेहमसृणानि लोचनानि निक्षिप—न शरपातोचिता वयमिति भावः । [ काव्यलिङ्गं, परिसंख्याऽर्थान्तरन्यासश्च' वंशस्थम् ] ॥ ३५ ॥

राजा—(ससम्भ्रममस्त्रमुपसंहरन्—) अये मातलिः !। स्वागतं देवराजसारथेः !।

विदूषकः—भो मनस्विन् ! अनेनाहं पशुमारणं मारयितुं प्रवृत्तः, भवान् पुनरिमं स्वागतेनाभिनन्दति। [भो मणस्सिं ! इमिणा अहं पसुमारणं मारिदुं पाविदो, भवं उण इमं साअदेण अहिणन्ददि। ]

मातलिः—(सस्मितम्—) आयुष्मन्—श्रूयतां ! यदर्थमस्मि हरिणा भवत्सकाशं प्रेषितः।

राजा—अवहितोऽस्मि।

मातलिः—अस्ति कालनेमिप्रसूतिर्दुर्ज्जयो नाम दानवगणः।

राजा—अस्ति—श्रुतपूर्वो मया नारदात्।

मातलिः—

सख्युस्ते स किल शतक्रतोरवध्यः,
तस्य त्वं रणशिरसि स्मृतो निहन्ता।

---

अये ! मालिः = अहो मातलिरयं न पिशाचादिरित्याश्चर्यम्। देवराजस्य मघवतः सारथिः—सूतस्तत्सम्बुद्धौ रूपम्।

मनस्विन् = उदाराशय ! रिपोरपि स्वागतकरणात्, अनेन=आगन्तुकेन, इष्टिपशुमारं मारितः, = यज्ञपशुवत् मारितः, क्रूरतरं ताडित इति यावत्। अस्यैव स्वागतम् = अभ्यर्थनां करोषीति सोल्लुण्ठनं सम्बोधनं मनस्विन्निति। हरिणा = इन्द्रेण। कालनेमेः प्रसूतिरुत्पत्तिर्यस्यासौ—कालनेमिप्रसूतिः = कालनेमिराक्षसपुत्रः, अत एव दुर्जयः, मया नारदात्पूर्वं श्रुतः—श्रुत-पूर्वः, नारदात्तद्वृत्तान्तं श्रुतवानस्मीत्याशयः।

सख्युस्त इति। सः = दुर्जयो दानवगणः, ते सख्युः = मित्रस्य,

---

१ "अहं येनेष्टिपशुमारं मारितः, सोऽनेन स्वागतेनाभिनन्द्यते" !।

उच्छेत्तुं प्रभवति यन्न सप्तसप्ति-,
स्तन्नैशं तिमिरमपाकरोति चन्द्रः ॥३६॥

स भवानात्तशस्त्र एवेदानीं देवरथमारुह्य विजयाय प्रतिष्ठताम् ।

राजा—अनुगृहीतोऽस्मि अनया मघवतः सम्भावनया । अथ माधव्यं प्रति भवता किमेवं प्रयुक्तम् ? ।

मातलिः—(सस्मितम्—) तदपि कथ्यते,—किञ्चिन्निमित्तादपि मनःसन्तापादायुष्मान् मया विकृतो दृष्टः, पश्चात् कोपयितुमायुष्मन्तं तथा कृतवानस्मि । कुतः—

---

शतं क्रतवो यस्य तस्य—शतक्रतोः = इन्द्रस्य, अवध्यः = वरविशेषप्रभावादवध्यः, किलेति प्रसिद्धौ । तस्य = दानवगणस्य, रणशिरसि = युद्धाङ्गणे, निहन्ता = विजेता, स्मृतः = दैवैश्चिन्तितः, यतः—निशाया इदं—नैशं = रात्रिसम्बन्धि, यत्—तिमिरम्—, तमः, उच्छेत्तुं = दूरीकर्त्तुं, सप्त सप्तयो यस्यासौ—सप्तसप्तिः = सूर्यः, "हयसैन्धवसप्तय" इत्यमरः । न प्रभवति = न समर्थः, तत् नैशं तिमिरं = तमः, चन्द्रः = इन्दुः, अपाकरोति=नाशयति ।

यथा सूर्यस्य रात्रावन्धकारध्वंसे सामर्थ्यं नास्ति, तत्र चन्द्र एवोचितो ध्वान्तहन्ता, तथैवातुलशक्तेरपि महेन्द्रस्यावध्यो दानवगणस्त्वया नाशनीय इति भावः । [दृष्टान्तालङ्कारः । 'प्रहर्षिणी'] ॥३६॥

सः = ईदृशातिशयितशक्तिशाली, आत्तं शस्त्रं येनासौ—आत्तशस्त्रः = गृहीतशस्त्रः, विजयाय = दानवविजयाय, प्रतिष्ठतां = प्रस्थानमङ्गलं कुरु ।

अनया = स्मरणरूपया, सम्भावनया = सत्कारेण, अनुगृहीतः = अनुकम्पितः । अथेति प्रश्ने । माधव्यं प्रति = विदूषकं प्रति, एवं = ताडनधर्षणादिकं, किञ्चिन्निमित्तं यत्र तस्मात्—किञ्चिन्निमितात् = कुतोऽपि हेतोः, समुत्थितान्मनःसन्तापात्, अत्र मातलिना क्लेशवर्धकतया शकुन्तलानाम न गृहीतं, विकृतः = विह्वलः ।

ज्वलति चलितेन्धनोऽग्निर्विप्रकृतः पन्नगः फणां कुरुते ।
तेजस्वी संक्षोभात् प्रायः प्रतिपद्यते तेजः ॥३७॥

राजा—युक्तमनुष्ठितं भवद्भिः । (विदूषकं प्रति—) वयस्य ! अनतिक्रमणीया दिवस्पतेराज्ञा, तद् गच्छ परिगतार्थं कृत्वा मद्वचनादमात्यपिशुनं ब्रूहि—

त्वन्मतिः केवला तावत्प्रतिपालयतु प्रजाः ।
अधिज्यमिदमन्यस्मिन् कर्म्मणि व्यापृतं धनुः ॥३८॥

विदूषकः—यद्भवानाज्ञापयति । (इति निष्क्रान्तः—) [जं भवं आणवेदि] ।

मातलिः—आयुष्मान् रथमारोहतु ।

राजा—तथा करोति ।

( इति निष्क्रान्ताः सर्वे ।)

3/11/61

❁ षष्ठोऽङ्कः ❁

---

ज्वलतीति । चलितमिन्धनं यस्यासौ चलितेन्धनः = विपर्यस्तकाष्ठः, प्राप्तेन्धनो वा, अग्निः ज्वलति = भृशं दीप्यते । विप्रकृतः=अवमतः, ( कृतधर्षणः ) पन्नगः = भुजङ्गमः, फणां = फटाटोपम्, कुरुते = रचयति । हि = यतः—स्वम् = आत्मीयं, महिमानं = प्रभावं, जनः = सर्वोऽपि लोकः, क्षोभात् = सङ्क्षोभात् ( धर्षणादिना) प्रायः = बहुलं, प्रतिपद्यते = लभते । [ अप्रस्तुतप्रशंसा, दृष्टान्तः ] ॥३७॥

युक्तम् = उचितम्, अनुष्ठितं = कृतं, परिगतार्थं = विदितसर्ववृत्तान्तं, त्वन्मतिरिति । केवला तावत् = केवलं त्वन्मतिरेव, प्रजाः = राज्यं, प्रतिपालयतु = रक्षतु, इदम् = मदीयम्, अधिगतं ज्याम्—अधिज्यम् = आरोपितमौर्वीकं, धनुः = कोदण्डम्, अन्यस्मिन् कर्मणि = दानवविजयरूपे कर्मणि, व्यापृतं = योजितम् । दानववधाय गच्छाम्यहं, प्रजाभारः केवलं त्वय्येव निविष्टोऽस्माभिरिति भावः ॥३८॥ ❁ इति षष्ठोऽङ्कः ❁

# ❀ सप्तमोऽङ्कः ❀

(ततः प्रविशत्याकाशवर्त्मना रथारूढो राजा मातलिश्च—)

**राजा**—मातले ! अनुष्ठितनिदेशोऽपि मघवतः सत्क्रिया-विशेषादनुपयुक्तमिवात्मानं समर्थये ।

---

## * अभिनवराजलक्ष्मीः *

अस्मिन् सप्तमेऽङ्के समाप्ति यावन्निर्वहणसन्धिः पञ्चमः, "बीजवन्तो मुखाद्यर्था विप्रकीर्णा यथायथम्, एकार्थमुपनीयन्ते यत्र निर्वहणं हि तत्" इति दर्पणोक्तेः । केचित्तु—अभिज्ञानात्परं निर्वहणसन्धिः, ततः पूर्वन्तु सप्तमे विमर्शसन्धिरेवेत्याहुः ।

युद्धस्य साक्षाददर्शनीयतया तस्य—कृतकार्यस्य प्रतिनिवर्तमानस्य राज्ञो वाक्यैरेव—सूचनमत्रेति ध्येयम् ।

अत्राङ्कास्यं नामार्थोपक्षेपकमेतत्, तदुक्तम्—"अङ्कान्तपात्रैरङ्कास्य-मुत्तराङ्कार्थसूचने"ति । प्रकृते हि—षष्ठाङ्कान्तपात्राभ्यां राजमातलिभ्यामेव सप्तमाङ्के प्रवेशः कृतः । षष्ठाङ्कान्ते च सप्तमाङ्कार्थः सूचितः—"आयुष्मन् ! श्रूयता"मित्यादिना । तत इति । आकाशवर्त्मना = आकाशमार्गेण, रथ-मारूढः—रथारूढः = इन्द्ररथमारूढः । अनुष्ठितो निदेशो येनासौ—अनु-ष्ठितनिदेशः = पालितेन्द्रशासनः, विजितदानव इति यावत्, मघवतः = इन्द्रस्य, सत्क्रियाया विशेषात् = सत्कारातिशयसम्पादनं विलोक्य (ल्यब्लोपे पञ्चमी ।) अनुपयुक्तमिव = अकृतोपकारमिव, आत्मानं समर्थये = सम्भावयामि । न मया किञ्चिदप्यनुष्ठितमिति तर्कयामि,

मया दानवा युद्धे निपातितास्तुष्टेनेन्द्रेण च महती मे सत्क्रिया कृतेति

मातलिः—( सस्मितम्- ) आयुष्मन्! उभयत्रापि असन्तोषमवगच्छ। कुतः—

उपकृत्य हरेस्तथा भवान्
लघु सत्कारमवेक्ष्य मन्यते।
गणयत्यवदानसम्मितां
भवतः सोऽपि न सत्क्रियामिमाम् ॥१॥

राजा—मातले! मा मैवम्, स खलु मनोरथानामपि दूरवर्त्ती, यो विसर्जनावसरे सत्कारः, मम हि दिवौकसां समक्षमर्द्धासनोपवेशितस्य—

---

सूचितमेतेन। उभयत्रापि = भवच्चित्त इव मघवच्चित्तेऽपि, असन्तोषमवगच्छ = न मया राज्ञोऽनुरूपा सत्क्रिया खल्वकारीति हेतोरसन्तोषं विद्धि।

उपकृत्येति। हरेः = इन्द्रस्य, तथा = महता श्रमेण दानवानां विजयेन, उपकृत्य = उपकारं विधायापि, सत्कारमवेक्ष्य = सत्कारापेक्षया, आत्मनो श्रमादिकं, लघु = अत्यल्पमेव, मन्यसे = चिन्तयसि। सोऽपि = मघवाऽपि, इमां सत्क्रियां = भवन्तमुद्दिश्य कृतां पूजां, भवतः—अवदानेन सम्मिताम्—अवदानसम्मितां = भवत्कृतोपकारानुरूपां, गणयति = विचारयति। "अवदानं कर्मवृत्त"मित्यमरः। सत्क्रियामवेक्ष्य भवान् स्वं श्रमं, लघु मनुते, भवत्पराक्रमादिकमवेक्ष्य महेन्द्रोऽपीमां स्वकृतां सत्क्रियामल्पीयसीमेव चिन्तयतीत्युभयोरपि तुल्यैवाकृतार्थतेत्याशयः। [विभावनाविशेषोक्तिसन्देहसङ्करः, अन्योन्यं, सुन्दरी वृत्तम्।] ॥१॥

मा मैवम् = एवं मा वद, मा वद, मे विसर्जनावसरे = प्रस्थापनसमये, यो सत्कारः स—मनोरथानामपि = मनसोऽपि, दूरवर्त्ती = अगोचरः। यो महेन्द्रेण मे सत्कार आचरितः, स मनसाप्यचिन्तनीयोऽतुलनीयश्चेति भावः।

अन्तर्गतप्रार्थनमन्तिकस्थं
जयन्तमुद्वीक्ष्य कृतस्मितेन ।
आमृष्टवक्षोहरिचन्दनाङ्का
मन्दारमाला हरिणा पिनद्धा ॥२॥

मातलिः—किमिव नायुष्मानमरेश्वरादर्हति, पश्य—

सुखपरस्य हरेरुभयैः कृतं
त्रिदिवमुद्धृतदानवकण्टकम् ।

---

मनोरथातिभूमित्वमेवाह—मम हीति । यतः—दिवौकसां = देवानां, "त्रिदिवेशा दिवौकस" इत्यमरः । समक्षं=प्रत्यक्षम्, अर्द्धासने उपविष्टस्तस्य—अर्धासनोपविष्टस्य = महेन्द्रसिंहासनासीनस्य,—मम मन्दारमाला हरिणा पिनद्धेति—श्लोकेन सम्बध्यते ।

अन्तर्गतेति । अन्तर्गता प्रार्थना यस्य तम्–अन्तर्गतप्रार्थनं = हृद्गतमन्दारमालाऽभिलाषशालिनम्, अन्तिके तिष्ठति—तम्—अन्तिकस्थं = निकटस्थितं, जयन्तं = स्वपुत्रम्, उद्वीक्ष्य = ज्ञात्वाऽपि, कृतं स्मित येन—तेन—कृतस्मितेन = ईषद्धसता, हरिणा = महेन्द्रेण, आमृष्टं यद्वक्षसो हरिचन्दनं—तेनाङ्को यस्यां सा—आमृष्टवक्षोहरिचन्दनाङ्का = विलुप्तमहेन्द्रवक्षस्थलचन्दनाङ्किता, मन्दारमाला=दिव्यसुमनोमाला, पिनद्धा=मदुरसि समर्पिता । दानत्वरया महेन्द्रवक्षोलिप्तदिव्यचन्दनरसाङ्कता मालायाः । स्वपुत्रेच्छामप्यविगणय्य मह्यं माला दत्तेति तस्मादप्यधिकस्नेहपात्रताऽऽत्मनो ध्वन्यते [अनुप्रासः, परिकरः, उदात्तालङ्कारश्च । उपजातिः] ॥२॥

किमिव = किन्तत् ? यत्–अमरेश्वरात् = देवेन्द्रात्, आयुष्मान् = भवान्, नार्हति = न प्राप्तमर्हति ? सर्वं प्राप्तुमर्हति भवानित्याशयः । योग्यतामेव स्फुटयति—

सुखपरस्येति । सुखमेव परं यस्यासौ तस्य–सुखपरस्य = सुखोप

तव शरैरधुना नतपर्वभिः
पुरुषकेसरिणश्च पुरा नखैः ॥३॥

राजा—तत्र खलु शतक्रतोरेव महिमा, पश्य—

सिध्यन्ति कर्म्मसु महत्स्वपि यन्नियोज्याः
सम्भावनागुणमवेहि तमीश्वराणाम् ।
किं प्राभविष्यदरुणस्तमसां वधाय
तञ्चेत्सहस्रकिरणो धुरि नाकरिष्यत् ॥४॥

---

पभोगपरायणस्य, हरेः = इन्द्रस्य–त्रिदिवं = स्वर्गः, "त्रिदिवं सुखे स्वर्गे चे"ति हैमः ।

अधुना=सम्प्रति, नतानि=गूढानि पर्वाणि ग्रन्थयः येषान्तैः–नतपर्वभिः= नतग्रन्थिभिः, तव शरैः = बाणैः, पुरा = पुराकाले च पुरुषश्चासौ केसरी च तस्य–पुरुषकेसरिणः = नृसिंहस्य भगवतः–नतं = नमनं पर्वणः सकाशाद्येषान्तैः—नतपर्वभिः=पर्वत आरभ्य कुञ्चितैः–आभुग्नाग्रैः, कुटिलैरिति यावत् । नखैश्च–उभयैः–(दानवाः कण्टका इव–दानवकण्टकाः)—उद्धृता दानवकण्टकाः यस्मात् = तत्–उद्धृतदानवकण्टकं=समूलोन्मूलितराक्षसरूपकण्टकं, कृतम् , पुरा युगे नृसिंहस्य नखैः, अद्यत्वे त्वच्छरैश्च स्वर्गस्य कण्टकस्थानीयाः शत्रवो दूरीकृताः, इन्द्रस्तु निरन्तरं सुखमेवानुभवतीति भावः [तुल्ययोगिता, उपमानुप्रासौ, द्रुतविलम्बितम् । ] ॥३॥

अत्र = दानवविजये, शतक्रतोः = इन्द्रस्य, सिध्यन्तीति । महत्सु-असाध्येषु – अपि कर्मसु = कार्येषु, नियोज्याः = सेवकाः, यत्–सिध्यन्ति= समीहितार्था भवन्ति, कार्यं साधयन्तीति यावत्, ईश्वराणां = प्रभूणां, सम्भावनाया गुणस्तं – सम्भावनागुणं = गौरवविशेषं—तम् – अवेहि = जानीहि । "सम्भावना वासनायां गौरवे ध्यानकर्मणी"त्यजयः । सेवकाः

**मातलिः**—सदृशन्तवैतत् । ( स्तोकमन्तरमतीत्य– ) आयुष्मन् ! इतः पश्य नाकपृष्ठप्रतिष्ठितस्य सौभाग्यमात्मयशसः—

विच्छित्तिशेषैः सुरसुन्दरीणां
वर्णैरमी कल्पलतांशुकेषु ।
सञ्चिन्त्य गीतक्षममर्थबन्धं
दिवौकसस्त्वच्चरितं लिखन्ति ॥५॥

**राजा**—मातले ! असुरसम्प्रहारोत्सुकेन पूर्वेद्युर्दिवमधि-

---

स्वामिमहत्त्वेनैव कार्यं साधयन्ति, तत्र सेवकस्य न कश्चिद् गुण इति भावः ।

अत्र दृष्टान्तमाह—अरुणः = सूर्यसारथिः, तमसां विभेत्ता=नाशकः, किंवा = कथम्, अभविष्यत् ? चेत् = यदि तं सहस्रकिरणः = भास्करः, धुरि = अग्रे, न—अकरिष्यत् [अप्रस्तुतप्रशंसा, दृष्टान्तानुप्रासौ, वसन्ततिलका] ॥४॥

तत्र एतत् = ईदृशमेव, सदृशं = वक्तुमुचितं, स्तोकं = किञ्चित्, अन्तरम् = अवकाशम्, अतीत्य = अतिक्रम्य, नाकस्य = स्वर्गस्य, पृष्ठे = तले, प्रतिष्ठितस्य विख्यातस्य, आत्मनः यशसः = कीर्त्तेः, सौभाग्यं = अहो भाग्यम्—इतः = अत्र पश्येति—योजना ।

विच्छित्तीति । सुरसुन्दरीणां = देवाङ्गनानां, विच्छित्तेः शेषास्तैः—विच्छित्तिशेषैः = अङ्गरागावशिष्टैः, "विच्छत्तिरङ्गरागेऽपी"ति विश्वः । वर्णैः = कुङ्कुमकस्तूरीचन्दनादिनिर्मितैः, वर्णकैः ('रंग') एतेनातिप्रियत्वं तद्यशसः सूचितं । अमी दिवौकसः=देवाः कल्पलतानामंशुकास्तेषु=कल्पवृक्षसमुत्थितपट्टेषु—गीतक्षमं = गानयोग्यम्, अर्थजातं = पदार्थसमूहं, विचिन्त्य = विचार्य, त्वच्चरितं=त्वत्कृतानि दानवविजयादिकर्माणि—लिखन्ति । [उदात्तं, परिणामः, अनुप्रासः, उपजातिः ] ॥५॥

आत्मप्रशंसाश्रवणविलक्षः प्रसङ्गान्तरं सञ्चारयति — असुरेति ।

रोहता न लक्षितोऽयं प्रदेशो मया; तत्कतमस्मिन् पथि वर्त्तामहे मरुताम् ?।

**मातलिः—**

त्रिस्रोतसं वहति यो गगनप्रतिष्ठां
ज्योतींषि वर्त्तयति च प्रविभक्तरश्मि[1]।
तस्य[2] द्वितीयहरिविक्रमनिस्तमस्कं
वायोरिमं परिवहस्य वदन्ति मार्गम् ॥६॥

---

असुराणां = दानवानां असम्प्रहारे = युद्धे, उत्सुकेन=दिवं = स्वर्गम्, अधिरोहता = आरोहता मया,—पूर्वेद्युः पूर्वस्मिन्दिवसे, न लक्षितः = न यथावद् दृष्टः, तत् = कथय मे परिचयार्थं, मरुतां वायूनां—कतमस्मिन् = कस्मिन् पथि = मार्गे, सप्तसु वायुमार्गेषु—कस्मिन् वायुमार्गे वयं वर्त्तामहे = सम्प्रति प्रवर्त्तामहे।

आवहादयः सप्त वायुस्कन्धास्तत्र कतस्मिन् वायुस्कन्धे सम्प्रति वर्त्तामहे इति प्रश्नाशयः।

त्रिस्रोतसमिति। यः = मार्गः, गगने प्रतिष्ठा अवस्थितिः यस्याः सा—तां—गगनप्रतिष्ठां = गगनगामिनीं, त्रिस्रोतसं = मन्दाकिनीं, वहति धारयति—प्रविभक्ता रश्मयो यस्मिन् कर्मणि तत्—प्रविभक्तरश्मि = असङ्कीर्णकिरणं यथा स्यात्तथा, ज्योतींषि = सप्तर्षिस्थानानि, वर्त्तयति = सञ्चारयति। द्वितीयेन हरेर्विक्रमेण = पादन्यासेन, निस्तमस्कं = निर्दोषं, परिवहस्य = परिवहाख्यस्य, तस्य=प्रसिद्धस्य वायोः, इमं मार्गं वदन्ति।

परिवहो नाम—वामनद्वितीयचरणन्यासपवित्रः स्वर्गङ्गासप्तर्षिमण्डलप्रवर्त्तकः षष्ठो वायुस्कन्धः, तदुक्तं ब्रह्माण्डपुराणे—

---

१ "चक्रविभक्तरश्मिः"।
२ "तस्य व्यपेरजसः प्रवहस्य वायोर्मार्गो द्वितीयहरिविक्रम पूत एषः।

राजा—अतः खलु मे सबाह्यान्तःकरणोऽन्तरात्मा प्रसीदति । ( रथाङ्गमवलोक्य- ) शङ्के मेघपदवीमवतीर्णाः स्मः ।

मातलिः—आयुष्मन् ! कथमवगम्यते ? ।

राजा—

[1]'अयमरविवरेभ्यश्चातकैर्निष्पतद्भि-
हरिभिरचिरभासां तेजसा चानुलिप्तैः ।

"आवहः प्रवहश्चैव संवहश्चोद्वहस्ततः । विवहाख्यः परिवहः परावह इति क्रमात् ॥ सप्तैते मारुतस्कन्धा महर्षिभिरुदीरिताः ।" इति । "सप्तर्षिचक्रं स्वर्गङ्गां षष्ठः परिवहस्तथा ।" ( वर्त्तयेदिति शेषः । ) "भुवं सनाकं त्रिदशाधिवासं सोमार्कऋक्षैरभिन्दित नभः । देवो द्वितीयेन जगाम वेगात् क्रमेण देवप्रियमीप्सुरीश्वर" इति च—व्यासवचनाद्वामनद्वितीयचरणाक्रान्तत्वमन्तरिक्षमण्डलस्य प्रसिद्धम् । पाठान्तरे—प्रवहाख्यो द्वितीयो वायुस्कन्धः, तत्कर्म च—"प्रर्तयेत्प्रवहश्चाथ तथा मार्त्तण्डमण्डल"मिति व्यास आह । 'चक्रविभक्तरश्मि'रिति पाठान्तरे—चक्रेण आवर्त्तेन विभक्ता रश्मयो ज्योतिर्मण्डलानि येनासौ—तथेति वायुविशेषणं बोध्यम् [-महापुरुषचरितवर्णनादुदात्तालङ्कारः, अनुप्रासश्च, वसन्ततिलका ] ॥६॥

अतः खलु = परिवहवायुस्कन्धसञ्चारादेव, बाह्यैः करणै सहितः सबाह्यकरणः = बहिरिन्द्रियसमूहसहितः, मे मम, अन्तरात्मा = अन्तः करणम्, आत्मा वा, सबाह्यान्तकरण" इति पाठे—बाह्यं—बहिरिन्द्रियादि, अन्तःकरणं–मनोबुद्ध्यहङ्कारादि ग्राह्यं । रथाङ्गं = रथचक्रं, मेघानां पदवीं = मेघमार्गं, भूवायोरावहस्य मार्गं, तदुक्तं भास्करार्येण—"भूमेर्बहिर्द्वादश योजनानि भूवायुरत्राम्बुदविद्युदाद्य"मिति ।

अयमिति । शीकरैः क्लिन्ना नेमिर्यस्यासौ शीकरक्लिन्ननेमिः = वारि-

१'अयमग' । पा०

गतमुपरि घनानां वारिगर्भोदराणां
पिशुनयति रथस्ते शीकरक्लिन्ननेमिः ॥७॥

मातलिः—अथकिम् ! क्षणाच्चायुष्मान्स्वाधिकारभूमौ वर्त्तिष्यते ।

राजा—( अधोऽवलोक्य- ) मातले ! वेगादवतरणादाश्चर्य्य-दर्शनः संलक्ष्यते मनुष्यलोकः । तथाहि—

शैलानामवरोहतीव शिखरादुन्मज्जतां मेदिनी,
पर्णाभ्यन्तरलीनतां विजहति स्कन्धोदयात्पादपाः ।
सन्धानं[1] तनुभागनष्टसलिलव्यक्त्या व्रजन्त्यापगाः,
केनाप्युत्क्षिपतेव पश्य भुवनं मत्पार्श्वमानीयते ॥८॥

---

कणार्द्रचक्रप्रान्तः; ते = तव, अयं रथः—अराणां विवरेभ्यः—अरविवरेभ्यः= चक्रावयवच्छिद्रेभ्यः, "अरं शीघ्रे च चक्राङ्गे" इति विश्वः । विनिष्पतद्भिः = निस्सरद्भिः,—च = किञ्च—अचिरभासां = तडितां, तेजसा = प्रकाशेन, अनुलिप्तैः = परीतैः, हरिभिः = रथाश्वैः—वारिगर्भाणि उदराणि येषान्तेषां—वारिगर्भोदराणां = जलपरिपूर्णानां, घनानां = मेघानाम् = उपरि—गतं = गमनं, पिशुनयति = सूचयति ।

चातकानां रथचक्रच्छिद्रमार्गेणेतस्ततोगतागतेन, विद्युदालोकपरीताङ्गैर्वाजिभिः, आर्द्रचक्रनेमिभिश्च—तवायं रथ एव—मेघपदव्या उपरि गमनमस्माकमिति सूचयतीति भावः । "पिशुनौ खलसूचकौ" इत्यमरः । [काव्यलिङ्गानुप्रासौ, मालिनी ।] ॥७॥

स्वस्याधिकारो यस्यां सा—स्वाधिकारा सा चासौ भूमिश्च तस्यां = भूलोके, वर्त्तिष्यते = स्वनिवासं भूलोकं प्राप्स्यति । आश्चर्यदर्शनः = अद्भुतदर्शनः ।

शैलानामिति । उन्मज्जतां = प्रकटीभवतामिव दृश्यमानानां, शैलानां=

---

१ 'सन्तानैस्तनुभावनष्टसलिला व्यक्तिं भजन्त्यापगाः' । पा०

**मातलिः**—आयुष्मन्! साधु दृष्टम्। (सबहुमानमालोक्य-) अहो! उदाररमणीया पृथिवी।

**राजा**—मातले! कतमोऽयं पूर्वापरसमुद्रावगाढः कनक-रसनिष्यन्दो–सान्ध्य इव मेघः–सानुमानालोक्यते ?।

**मातलिः**—आयुष्मन्! एष खलु हेमकूटो नाम किंपुरुष-पर्वतः परं तपस्विनां क्षेत्रम्—

---

गिरीणां, शिखरात् = अग्रभागात्, मेदिनी = भूमिः, अवरोहतीव = अधो-गच्छतीव, पूर्वं दूरतया पर्वतशिखरलग्नेव भूरालक्षिता, इदानीं सान्निध्यात् पर्वतमेदिन्योः शनैः शनैर्दूरीभावो ज्ञायत इत्याशयः। पादपाः = तरवः,—स्कन्धानां = प्रकाण्डानाम्, "अस्त्री प्रकाण्डः स्कन्धः स्या"दित्यमरः। उद-यात् = प्राकट्यात्, पर्णानामभ्यन्तरे लीनतां = पत्रमयतां, पत्रान्तर्लयं, विजहति = त्यजन्ति, प्रकटीभवन्तीत्यर्थः। आपगाः = सरितः, तनुभागेषु नष्टस्य सलिलस्य व्यक्त्या–तनुभागनष्टसलिलव्यक्त्या = क्वचित्तनुतराणां जलधाराणामदृश्यतया, क्वचित् विपुलजलप्रवाहस्य दृश्यतया–विच्छिन्नप्रवाह-तया लक्ष्यमाणा—अपि नद्यः–क्रमात् = तनुतरप्रवाहस्यापि स्पष्टं दर्शनात्, सन्धानम् = अविच्छिन्नप्रवाहतां, व्रजन्ति = भजन्ते, [ पाठान्तरे—"तनु-भावेन = तनुत्वेन, नष्टम् = अदृश्यं, सलिलं = जलधारा यासान्ताः—तनु-भाव–नष्ट–सलिलाः, आपगाः, सन्तानैः = विस्तारेण, व्यक्तिं = स्पष्टतां, व्रजन्ति = गच्छन्ति–" इत्यर्थो बोध्यः। ] भुवनं = जगत्, उत्क्षिपतेव = कन्दुकवत् उत्क्षिपतेव, केनापि = केनापि अदृश्येनेव, मत्पार्श्वं = मन्निकटम्, आनीयते=[भूवलयं सहसैव निकटमागच्छतीत्यर्थः।] इति पश्य=विलोकय। [उत्प्रेक्षा, स्वभावोक्तिः, काव्यलिङ्गम्, अनुप्रासः। शार्दूलविक्रीडितम्।] ॥८॥

साधु = शोभनं, दृष्टं = भवतोत्प्रेक्षितम्, उदाररमणीया = अतिरम-णीया। "उदारो दातृमहतो"रिति कोशः। पूर्वापरसमुद्रयोरवगाढः—पूर्वापरसमुद्रावगाढः = पूर्वपश्चिमसमुद्रसम्बद्धः, कनकरसस्य निष्यन्दो

स्वायम्भुवान्मरीचेर्यः प्रबभूव प्रजापतिः ।
सुरासुरगुरुः सोऽस्मिन्त्सपत्नीकस्तपस्यति ॥९॥

राजा—(सादरम्-) तेन ह्यनतिक्रमणीयानि श्रेयांसि । प्रदक्षिणीकृत्य भगवन्तं गन्तुमिच्छामि ।

मातलिः—आयुष्मन् ! प्रथमः कल्पः । (अवतरणं नाटयन्-) एतावचतीर्णौ स्वः ।

राजा—( सविस्मयम्-) मातले !

उपोढशब्दा न रथाङ्गनेमयः,
प्रवर्त्तमानं न च दृश्यते रजः ।

---

यत्रासौ तथा = स्वर्णद्रवशोभितः, सान्ध्य इव = सायङ्कालिकः, मेघः = अम्भोदः, इव, सानुमान् = पर्वतः, किम्पुरुषपर्वतः = किम्पुरुषवर्षपर्वतः, ( रूस का पहाड़—'यूराल' ? ) "भारतं प्रथमं वर्षं, ततः किम्पुरुषं स्मृतम्"—इति विष्णुपुराणं । परं = श्रेष्ठं, क्षेत्रं = स्थानं ।

स्वायम्भुवादिति । स्वयम्भुवोऽपत्यं—स्वायम्भुवस्तस्मात् = स्वयम्भूतनयात्, मरीचेः = तन्नामकात्, यः प्रजापति = जगत्स्रष्टा, प्रथमम् = आदौ बभूव, सुराणामसुराणां च गुरुः = पूज्यः सः भगवान् = कश्यपः प्रजापतीनां प्रथमः, अस्मिन् = हेमकूटे, सपत्नीकः = सभार्यः, तपस्यति = तपश्चरति [ अनुप्रासः ] ॥९॥

अनतिक्रमणीयानि = अनुल्लङ्घनीयानि, श्रेयांसि = शुभप्रदानि, कश्यपदर्शनादीनि, प्रथमः = श्रेष्ठः, कल्पः = विधिः, पन्थाः । उत्तमः पक्ष इति यावत् । अवतीर्णौ = रथोऽवतीर्णं इति भावः । नाटयन् = रूपयन् ।

उपोढेति । अभूतलस्पर्शतया—रथाङ्गनेमयः = चक्रप्रान्तभागाः, उपोढः शब्दो याभिस्ता—उपोढशब्दाः = कृतध्वनयः, न = नैव, भूतलस्पर्शाभावाचक्रप्रान्तभागसङ्घर्षजः स्वनो नैव श्रूयत इति भावः ।

अभूतलस्पर्शतया निरुद्धति-
स्तवावतीर्णोऽपि न लक्ष्यते रथः ॥१०॥

मातलिः---एतावानेव शतमन्योरायुष्मतश्च रथस्य विशेषः ।

राजा---मातले ! कतमस्मिन् प्रदेशे मारीचाश्रमः ? ।

मातलिः---(हस्तेन दर्शयन्-) पश्य—

[1]'वल्मीकार्धनिमग्नमूर्त्तिरुरगत्वग्ब्रह्मसूत्रान्तरः
कण्ठे जीर्णलताप्रतानवलयेनात्यर्थसम्पीडितः ।
अंसव्यापि शकुन्तनीडनिचितं बिभ्रज्जटामण्डलं
यत्र स्थाणुरिवाचलो मुनिरसावभ्यर्कबिम्बं स्थितः ॥११॥

---

अभूतलस्पर्शतयैव-प्रवर्त्तमानं = उद्गच्छत्, रजः = धूलिः, न च दृश्यते = न विलोक्यते । अभूतलस्पर्शतयैव-निर्गता उद्धतिर्यस्यासौ निरुद्धतिः = समविषमप्रदेशावस्थानादिजन्यौद्धत्यविकलः, तव रथः अवतीर्णोऽपि = हेमकूटभूतलमवतीर्णोपि, न लक्ष्यते = न विज्ञायते । [ विशेषोक्तिः, काव्यलिङ्गमनुप्रासो, विरोधाभासः, वंशस्थम्. । ] ॥१०॥

शतमन्योः = इन्द्रस्य, "शतमन्युर्दिवस्पति"रित्यमरः, आयुष्मतः = भवतश्च, विशेषः = भेदः । शतक्रतुरिति पाठेप्येष एवार्थः ।

वल्मीकेति । वल्मीकस्यार्धे निमग्ना मूर्त्तिर्यस्यासौ—वल्मीकार्धनिमग्नमूर्त्तिः = वामलूरमृत्कूटनिविष्टशरीरार्धः, "वामलूरश्च नाकुश्च वल्मीकं पुन्नपुंसकम्"—इत्यमरः । ( पाठान्तरे—वल्मीकाग्रं = वल्मीकप्रान्तभागः । ) उरगत्वगेव ब्रह्मसूत्रान्तरं यस्यासौ—उरगत्वग्ब्रह्मसूत्रान्तरः = सर्पनिर्मोक-

---

१ 'वल्मीकाग्रनिमग्नमूर्त्तिरुरसा सन्दष्टसर्पत्वचा' पा०

**राजा**——(विलोक्य-) नमोऽस्मै कष्टतपसे।

**मातलिः**——(संयतप्रग्रहं रथं कृत्वा—) एतावदितिपरिवर्द्धितमन्दारवृक्षं प्रजापतेराश्रमं प्रविष्टौ स्वः।

**राजा**——अहो! स्वर्गादिदमधिकं निर्वृतिस्थानम्। अमृतह्रदमिवावगाढोऽस्मि।

---

यज्ञोपवीतान्तरः, सर्पत्वग्यत्रापरं यज्ञोपवीतमिव भाति (पाठान्तरे—संदष्टाः सर्पाणां त्वचो यत्र तेन = संसक्तसर्पकञ्चुकेन, उरसा = उरस्थलेनोपलक्षित इत्यर्थः।) कण्ठे = कण्ठस्थले, जीर्णानां लतानां प्रतानं तदेव वलयं,—तेन जीर्णलताप्रतानवलयेन = पुराणलतामण्डलेन, अत्यर्थं सम्पीडितः = समन्तादावृतः, वलयः—कण्ठरोमाणीवेति वा। "वलयः कण्ठलोम्नि स्याद्वलयं कङ्कणेऽपि चे"ति विश्वः। अंसयोर्व्याप्नोति तच्छीलम्—अंसव्यापि = स्कन्धप्रसृतं, शकुन्तानां नीडैर्निचितं—शकुन्तनीडनिचितं = पक्षिकुलायैर्व्याप्तं, जटामण्डलं = जटाजूटं, बिभ्रत् = दधत्, स्थाणुरिव = शुष्कवृक्ष इव, अचलः = निश्चलः, मुनिः = महर्षिः कश्यपः, अर्कबिम्बं = सूर्यमण्डलम्, अभि = लक्ष्यीकृत्य, यत्र=यस्मिन् प्रदेशे स्थितः,—असौ मारीचाश्रय इति—योजना।

स्थाणुरपि—वल्मीकाग्रनिमग्नकायः, सर्पत्वक्परीतकोटरः, कण्ठे = समीपे—जीर्णलतावलयेनाचितश्च पक्षिकुलायनिचितं स्कन्धप्रसृतं जटानां शिफानां मण्डलं दधदचलोऽर्कबिम्बमभितिष्ठति।

स्थाणुपक्षे—उरः—कोटरं, कण्ठः—समीपं, जटाः—शिफा, अंसः=स्कन्धः—इति विशेषतोऽर्थो ज्ञेयः। [परिकरश्लेषोपमानुप्रासाः, शार्दूलविक्रीडितम्]॥११॥

कष्टं तपो यस्य तस्मै—कष्टतपसे = उग्रतपसे, संयताः प्रग्रहा यत्र तत्—संयतप्रग्रहं = नियमितरश्मिरज्जुम्, एतौ = आवाम्, अदित्या परिवर्द्धिता मन्दारवृक्षा यत्र तम् = कश्यपपत्नीपरिवर्द्धितमन्दारतरुशोभितम्, प्रजापतेः = कश्यपस्य, आश्रमं = तपोवनं, निर्वृतिस्थानं = सुखप्रदम्, अमृतह्रदमिव = पीयूषसरोवरविशेषमिव, अवगाढः = प्रविष्टः, भवान् कथ-

**मातलिः**—(रथं स्थापयित्वा-) अवतरत्वायुष्मान् ।

**राजा**—(अवतीर्य-) भवान् किमिदानीम्—"? ।

**मातलिः**—समययन्त्रित एवायमास्ते रथः; तद्वयमप्यवतरामः । (तथा कृत्वा-) इत इत आयुष्मन् ! दृश्यन्तामत्रभवतामृषीणां तपोवनभूमयः ।

**राजा**—ननु विस्मयादवलोकयामि—

प्राणानामनिलेन वृत्तिरुचिता सत्कल्पवृक्षे वने,
तोये काञ्चनपद्मरेणुकपिशे पुण्याभिषेकक्रिया ।
ध्यानं रत्नशिलागृहेषु विबुधस्त्रीसन्निधौ संयमो
यद्वाञ्छन्ति तपोभिरन्यमुनयस्तस्मिंस्तपस्यन्त्यमी ॥१२॥

---

मिदानीं ? = सम्प्रति किं करिष्यति भवान् ? 'किमिदानी'मिति पाठे—अवतरिष्यतीति शेषः । प्रश्नोऽयं । संयन्त्रितः=संस्थापितः, 'समययन्त्रितः'—इति पाठे—अस्मदागमनपर्यन्तं तिष्ठेति समयबन्धपूर्वकमवस्थापितः ।

प्राणानामिति । सन्तः कल्पवृक्षा यत्र तस्मिन्—सत्कल्पवृक्षे = सकलभोगप्रदकल्पपादपशोभितेऽपि, वने = आश्रमे, प्राणानाम्, उचिता = अवश्यकर्त्तव्या, वृत्तिः = प्राणधारणक्रिया, जीवनमिति यावत्, अनिलेन = वायुना—न तु—नानाविधैः कल्पवृक्षकल्पितैः भोज्यभक्ष्यादिभिः, काञ्चनानां पद्मानां रेणुभिः कपिशं तस्मिन् = स्वर्णकमलपरागपिङ्गलवर्णे, तोये = जले, धर्मार्थमभिषेकक्रिया=धर्माचरणार्थमेव स्नानादिकं, न तु जलक्रीडादि·कामोपभोगार्थम्, रत्नशिलानां तलेषु—ध्यानं—रत्नशिलाफलकेष्वपि ध्यानमाचरन्ति, न विहरन्ति । विबुधानां स्त्रीणां सन्निधिस्तस्मिन्—विबुधस्त्रीसन्निधौ = देवाङ्गनाऽभ्यासेऽपि, संयमः = इन्द्रियनिग्रहः, न तु सम्भोगः,—इति—अन्ये मुनयः = अन्ये तपस्विनः, तपोभिः = तपःफलतया, यत् = स्थान,

**मातलिः**——उत्सर्पिणी खलु महतां प्रार्थना। (परिक्रम्य आकाशे-) वृद्धशाकल्य! किंव्यापारः सम्प्रति भगवान् मारीचः?। (आकर्ण्य-) किं ब्रवीषि "—दाक्षायण्या पतिव्रतापुण्यमधिकृत्य पृष्टस्तदस्यै महर्षिपत्नीगणसहितायै कथयतीति—"। तत् प्रतिपाल्यावसरः खलु प्रस्तावः। (राजनमवलोक्य—) अस्यामशोकच्छायायां तावदास्तामायुष्मान्, यावत्त्वामहमिन्द्रगुरवे निवेदयामि।

**राजा**—यथा भवान् मन्यते—(-इति स्थितः।)

(**मातलिः**—निष्क्रान्तः।)

---

काङ्क्षन्ति = इच्छन्ति—सुराङ्गनासम्भोगाद्यर्थं यत्स्थानमिच्छन्ति, तत्रैव = तत्प्राप्यापि—अमी=पुरःस्थिता मुनयः, तपश्चरन्ति-तपस्यन्ति। [स्त्रीसान्निध्यादिकारणसत्त्वेऽपि कार्यानुत्पत्त्या-विशेषोक्तिः, अनुप्रासः, शार्दूलविक्रीडितम्।] ॥१२॥

उत्-ऊर्ध्वं-सर्पति तच्छीला-उत्सर्पिणी=उपर्युपरि धावमाना-सकलातिशायिनी, महतां = मनस्विनां, प्रार्थना-अभिलाषः,-इमे इतोऽपि महत्पदं कैवल्यादिकमभिलषन्तस्तपस्यन्तीति भावः। वृद्धशाकल्यः = तापसविशेषः। किं व्यापारो यस्यासौ तथा = किं करोतीत्यर्थः, "दक्षस्यापत्यं स्त्री-दाक्षायणी-तया = अदित्या, पतिव्रतापुण्यं = पतिव्रताधर्मम्, अधिकृत्य = विषयीकृत्य, महर्षीणां पत्न्यस्तासां गणेन सहितायै, अस्यै = अदित्यै, तत् = पतिव्रतापुण्यम्"—इति ब्रवीषि किमिति शाकल्योक्तानुवादः। प्रतिपाल्योऽवसरो यस्यासौ-प्रतिपाल्यावसरः=प्रतीक्षणीयावसरः, प्रस्तावः = कथाप्रसङ्गः, कथासमाप्तौ सत्यवसरे दर्शनं स्यादिति भावः। त्वाम् = त्वदागमनम्, इन्द्रगुरवे = महेन्द्रजनकाय कश्यपाय। [आकाशे = स्वयमेव]

राजा—( निमित्तं सूचयित्वा । )—

मनोरथाय नाशंसे किं बाहो ! स्पन्दसे मुधा ।
पूर्वावधीरितं श्रेयो दुखं हि परिवर्त्तते ॥१३॥

( नेपथ्ये- ) मा खलु चपलतां कुरु, यस्मिंस्तस्मिन्नात्मनः प्रकृतिं दर्शयसि[1] !

[ मा क्खु चवलदं करेहि, जहिं तहिं ज्जेव अत्तणा पइदिं दंसेसि । ]

राजा—( कर्णं दत्वा- ) अभूमिरियमविनयस्य, तत्को नु खल्वेवं निषिध्यते । ( शब्दानुसारेणावलोक्य सविस्मयम्—) अये ! नु खल्वयमवरुध्यमान[2]स्तापसीभ्यामबालसत्त्वो बालः,—

अर्द्ध पीतस्तनं मातुरामर्दक्लिष्टकेसरम् ।
प्रक्रीडितुं सिंहशिशुं करेणैवावकर्षति[3] ॥१४॥

---

निमित्तं = भुजस्पन्दं, सूचयित्वा = नाटयित्वाऽऽहेत्यर्थः । **मनोरथायेति** । हे बाहो ! मुधा = वृथा, किं स्पन्दसे = स्फुरसि, यतः—मनोरथाय = मनोरथभूतायाः शकुन्तलायाः, प्राप्तये, नाशंसे = मनोरथं प्राप्तुं न आशां धारयामि । हि = यतः पूर्वं—श्रेयः=सुखसाधनं (प्रिया), अवधीरितं= त्यक्तं, सत्—दुःखं यथा स्यात्तथा, दुःखरूपेण-परिवर्त्तते = परिणमति, अन्तःस्फुरति [यद्वा श्रेयो मया स्वयमेव तिरस्कृतं, सम्प्रति दुःखमात्रमेवावशिष्यते, क्व सुखं ? केवलं दुःखभागस्मीत्याशयः । [ अर्थान्तरन्यासोऽनुप्रासोऽतिशयोक्तिश्च । ] ॥१३॥

[1]आत्मनः प्रकृतिं कथं गतः=बालसुलभं चाञ्चल्यं कुतः करोषि, प्रकृतिः = स्वभावः । इयं = तपोवनभूमिः, अविनस्य = चपलतायाः, अभूमिः = अस्थानम्, एवम् = इत्थम् । [2]अवरुध्यमानः = निषिध्यमानः, अबालस्येव सत्त्वं यस्यासौ—अबालसत्त्वः = महाबलः,—अग्रिमश्लोकेनान्वयः ।

**अर्धपीतेति** । मातुः=सिंह्याः, अर्धं पीतः स्तनो येनासौ तम्—अर्धा-

---

१ "कथं गत एवात्मप्रकृतिम् ," २ 'अनुबध्यमान' ३ 'बलात्कारेण कर्षति' ।

( ततः प्रविशति यथानिर्दिष्टकर्म्मा तापसीभ्यां सह बालः । )

**बालः**—जृम्भस्व रे सिंहशावक ! जृम्भस्व, दन्तांस्ते गणयिष्यामि । [ जिम्ह ले सिंहसावआ जिम्ह दन्ताइं दे गणइस्सं । ]

**प्रथमा**—अविनीत ! किं नोऽपत्यनिर्विशेषाणि सत्त्वानि विप्रकरोषि । हन्त ! वर्द्धत इव ते संरम्भः । स्थाने खलु ऋषिजनेन 'सर्वदमन' इति कृतनामधेयोऽसि । [अविणीद ! किं णो अवच्चणिव्विसेसाइं सत्ताइं विप्पअरेसि । हन्त ! वड्ढइ विअ दे संरम्भो । ट्ठाणे क्खु इसजणेण सव्वदमणोत्ति किदणामहेओसि । ]

**राजा**—किं नु खलु बालेऽस्मिन्नौरस इव पुत्रे स्निह्यति मे हृदयम्, ( विचिन्त्य- ) नूनमनपत्यता मां वत्सलयति ।

**द्वितीया**—एषा त्वां केसरिणी[1] लङ्घयिष्यति, यद्यस्या पुत्रकं न मोक्ष्यसि ।

[ एषा तुमं केसरिणी ! लंघइस्सदि, जइ से पुत्तअं ण मुञ्चिस्सदि । ]

---

पीतस्तनं = किञ्चित्पीतस्तन्यम्, आमर्देन क्लिष्टाः केसरा यस्यासौ = आकर्षणविश्लथकेसरं, सिंहशिशुं = सिंहबालं, क्रीडितुं = क्रीडार्थं, करेण = हस्तेन, आकर्षति = (पाठान्तरे—बलात्कारेण = प्रसह्य) [ उदात्तं, स्वभावोक्तिरनुप्रासश्च ] ॥१४॥

यथा निर्दिष्टं—सिंहाकर्षणरूपं कर्म यस्यासौ = यथानिर्दिष्टकर्मा, जृम्भस्व = मुखं व्यादेहि, नः = अस्माकम्, अपत्यनिर्विशेषाणि = पुत्रवत्पालितानि, सत्त्वानि = प्राणिनः, विप्रकरोषि = क्लेशयसि, हन्त ! आश्चर्ये, खेदे वा, संरम्भः = धाष्ट्र्यं, वेगश्च । स्थाने = युक्तमेव, सर्वान् दमयति—सर्वदमनः, उरसा जातः—औरसः = आत्मज इव, अनपत्यता = सन्तानराहित्यं, वत्सलयति = स्नेहं प्रवर्त्तयति ।

---

१ 'सिंही' ।

बालः—( सस्मितम्— ) अहो ! बलीयः खलु भीतोऽस्मि । (-इत्यधरं दर्शयति ।) [ अह्महे ! वलिअं क्खु भीदह्मि । ]

राजा—(सविस्मयम्-)

महतस्तेजसो बीजं बालोऽयं प्रतिभाति मे ।
स्फुलिङ्गावस्थया वह्निरेधोऽपेक्ष इव स्थितः ॥१५॥

प्रथमा—वत्स ! एतं मुञ्च बालमृगेन्द्रकम्, अपरं ते क्रीडनकं दास्यामि । [ वच्छ ! एदं मुञ्च बालमइन्दअं, अवरं दे कीलणअं दाइस्सं ] ।

बालः—कुत्र देहि एनत् । (—इति हस्तं प्रसारयति । )
[ कहिं देहि णं । ]

राजा—(बालस्य हस्तं दृष्ट्वा—) कथं चक्रवर्त्तिलक्षणमप्यनेन धार्य्यते ? ।—

---

अनपत्यो हि बालं दृष्ट्वा बलवत्स्निह्यतीति प्रसिद्धम् । लङ्घयिष्यति=प्रहरिष्यति, बलीयः = महत्, भीतोऽस्मीति–सोपहासं वचः, न सिंहीलङ्घनाद्बिभेमीत्याशयः, अनादरसूचनाय ओष्ठदर्शनं—मुखविडम्बनं-बालानां स्वभावो लोकविदितः ।

महत इति । स्फुलिङ्गावस्थया = अग्निकणावस्थया = स्थितः = वर्त्तमानः, एधांस्यपेक्षत इति एधोऽपेक्षः—काष्ठापेक्षः, वह्निरिव—महतः तेजसो बीजम् = अनल्पतेजोनिदानम्—अयं बालो मे प्रतिभाति ।

अग्निस्फुलिङ्गोऽणुरपि काष्ठसंयोगाद्यथा प्रवृद्धो महते तेजसे सम्पद्यते, तद्वदयं बालोऽप्यस्य गूढस्य महापुरुषतेजसो बीजमिव समयापेक्षी वर्धिष्णुर्विभाव्यत इति भावः । [उपमानुप्रासौ] ॥१५॥

क्रीडनकं = क्रीडोपकरणं, ( 'खिलौना' ) तत्, = क्रीडनकं, चक्रवर्त्तिनः = सम्राजः, लक्षणं = चिह्नं, सामुद्रिकोक्तम् ।

प्रलोभ्यवस्तुप्रणयप्रसारितो
विभाति जालग्रथिताङ्गुलिः करः ।
अलक्ष्यपत्रान्तरमिद्धरागया
नवोषसा भिन्नमिवैकपङ्कजम् ॥१६॥

द्वितीया—सुव्रते ! मुञ्चैनम्, नैष शक्यो वाङ् शमयितुम् । तद्गच्छ, मदीये उटजे मार्कण्डेयस्य ऋषि

---

प्रलोभ्येति । प्रकर्षेण लोभ्यः-स्पृहणीयः तस्य—प्रलोभ्यस्य वस्तु प्रणयेन प्रसारितः = क्रीडनकप्रार्थनया तत्प्रीत्या वा प्रसारितः, जालवद्ग्र थिता अङ्गुलयो यस्यासौ तथा-जालवत्संश्लिष्टाङ्गुलिः, (जालेषु छिद्रेषु ग्रथि ता अङ्गुलयो यस्येति विग्रहे—अन्तरालसंश्लिष्टाङ्गुलिरित्यर्थः) । करः—इद्धो रा यस्यास्तया—इद्धरागया = समृद्धलौहित्यया, नवा चासौ उषाश्च—नवो षसा—नवप्रभातसन्ध्यया, भिन्नम्,=किञ्चिद्विकसितम्, अत एवालक्ष्याणि पत्राणामन्तराणि यस्य तत्—अलक्ष्यपत्रान्तरम्=अप्रकटितपत्रसन्धि, एकञ्च तत् पङ्कजञ्च—एकपङ्कजम्—एकं कमलमिव-विभाति = शोभते । "उष रात्रौ तदन्ते स्यादत्रानव्ययमप्युषा" इति विश्वः । "उषः प्रत्युषसि क्ली पितृप्रस्वां च योषिति" इति भानुदीक्षिताः । (पितृप्रसूः—सन्ध्या) ।

बालस्यास्य सुलोहितो मिलिताङ्गुलिर्हस्तः,–प्रभातसन्ध्यया ईषद्विकसि, प्र तमत एव संश्लिष्टपत्रसन्धि मृदुलतरं कमलमिव—भासत इति भावः सूर्योदयाभावात्कमलस्य न पूर्णो विकासः । तदुक्तम्—" अतिरक्तः क यस्य ग्रथिताङ्गुलिको मृदुः । चापाङ्कुशाङ्कितः सोऽपि चक्रवर्ती भवेद्ध्रुव मिति सामुद्रिके । [काव्यलिङ्गमुपमाऽनुप्रासः, वंशस्थं ।] ॥१६॥

सुव्रता नाम तापसी । वाचामात्रेण = कथनमात्रेण, यावदस्य ह क्रीडनकं न दीयते, तावन्नासौ संरम्भाद्विरमिष्यतीति भावः, उटजः = प शाला, मार्कण्डेयः = कश्चन महर्षिबालकः, वर्णैश्चित्रितो—रक्तपीतनीला

वर्णचित्रितो मृत्तिकामयूरस्तिष्ठति, तमस्योपहर । [सुव्वदे ! मुञ्च णं । एसो सक्को वाआमेत्तेण समइट्टुं । ता गच्छ मम केरए उडए सङ्कोचणस्स सिकुमारस्स वण्णचित्तिदो मट्टिआमोरओ चिट्ठदि, तं से उवहर ] ।

**प्रथमा**—तथा । (—इति निष्क्रान्ता । ) [तह] ।

**बालकः**—तावदनेनैव क्रीडिष्यामि ।
[ दाव इमिणा ज्जेव कीलिस्सं ] ।

**तापसी**—(विलोक्य हसन्ती-) ननु मुञ्चैनम् । [णं मुञ्चणं] ।

**राजा**—स्पृहयामि खलु दुर्ललितायास्मै—

**आलक्ष्यदन्तमुकुलाननिमित्तहासै-**
**रव्यक्तवर्णरमणीयवचःप्रवृत्तीन् ।**
**अङ्काश्रयप्रणयिनस्तनयान् वहन्तो**
**धन्यास्तदङ्गरजसा कलुषीभवन्ति ॥१७॥**

---

वर्णनिवेशसुन्दरः । तं = मृत्तिकामयूरम्, अस्य = सर्वदमनस्य, उपहर = कल्पय । देहि = खल्वस्मै—इति भावः । तथा = आनयामि । अनेनैव = सिंहशावकेन, न तु मृन्मयूणेरेति भावः । दुर्ललिताय = धृष्टाय, अस्मै स्पृहयामि । 'स्पृहेरीप्सित' इति सम्प्रदानता । एनमालोक्य प्रसीदामि, प्रहृष्यामीति यावत् ।

**आलक्ष्येति ।** अनिमित्तं हासैः = निष्कारणप्रहासैः, आ—ईषत्, लक्ष्याः—दृश्याः, दन्ता मुकुलानीव—येषां तान्—आलक्ष्यदन्तमुकुलान् = ईषद्विकसितदन्तकुड्मलान्, अव्यक्ता वर्णा यासु ताः, अव्यक्तवर्णाः—अत एव रमणीया वचसां प्रवृत्तिर्येषान्तान् = अस्पष्टध्वनिमधुरवाग्विलासान्, अङ्के आश्रयस्तत्र प्रणयो येषान्तान्—अङ्काश्रयप्रणयिनः = उत्सङ्गावस्थानलालसान्, तत्परायणान् वा, वहन्तः = धारयन्तः, तेषामङ्गानां रजसा—रजसा = बालवपुःपांसुना—धन्या एव मलिनीभवन्ति ।



**तापसी**—(सांगुलीतर्जनम्—) भवतु तावत्! न मां गणयति। (पार्श्वमवलोक्य—) कोऽत्र ऋषिकुमाराणाम् ? । (राजानं दृष्ट्वा-) भद्रमुख ! एहि तावन्मोचयानेन दुर्मोकहस्तग्रहेण डिम्भकेन लीलया बाध्यमानं बालमृगेन्द्रकम्। [भो ! ण मं गणेसि । को एत्थं इसिकुमारआणं, भद्दमुह ! एहि दाव मोआवेहि इमिणा दुम्मोक्खहत्थग्गहेण डिम्भएण वाधीअमाणं वालमइन्दअं ]।

**राजा**—तथा। (—इत्युपगम्य सस्मितम्—) अयि भो महर्षि-पुत्रक !—

एवमाश्रमविरुद्धवृत्तिना
संयमः किमिति जन्मतस्त्वया ।
सत्त्वसंश्रयगुणोऽपि दूष्यते
कृष्णसर्पशिशुनेव चन्दनम् ॥१८॥

---

ईषद्धसतः, काकलीचटुलं लपतः, पांसुमलिनितान् बालान् क्रोडे कुर्वन्तो धन्या एव तदङ्गमृन्मलिना भवन्तीति भावः ।

[ अप्रस्तुतप्रशंसा, अनुप्रासः, वसन्ततिलका । ] ॥१७॥

भवतु-अस्तु तावत्, न गणयति = मद्वाचं न शृणोति, न सिंहशिशुं मुञ्चति। ऋषिकुमाराणां मध्ये कोऽत्र तिष्ठति—स आयातु—इति ऋषिकुमारा-ह्वानं सर्वदमनवारणार्थम्। भद्रमुखेति राजसम्बोधनं, "सौम्य भद्रमुखे-त्येवं मान्यो राजसुतो भवेत्"—इति। दुर्मोको—मोचयितुमशक्यो—हस्तेन ग्रहो यस्य तेन—दुर्मोकहस्तग्रहेण—दृढतरमुष्टिबन्धशालिना, अनेन—डिम्भ-लीलया = बालचापलेन, बाध्यमानं = पीड्यमानं, बालमृगेन्द्रं—मोचय ताव-दिति—योजना।

**एवमिति**। कृष्णसर्पशिशुना चन्दनमिव—आश्रमस्य विरुद्धा वृत्तिर्यस्य तेन = आश्रमविपरीताचारेण, त्वया, सत्त्वानां संश्रयेण (—सुखयतीति—

तापसी—भद्रमुख ! न खल्वेष ऋषिकुमारकः।

[ भद्दमुह ! ण क्खु एसो इसिकुमारओ ]।

राजा—आकारसदृशं चेष्टितमेवास्य कथयति; स्थानप्रत्ययात्तु वयमेवंतर्किणः। ( यथाभ्यर्थितमनुतिष्ठन् बालकस्य स्पर्शमुपलभ्य स्वगतम्—)

अनेन कस्यापि कुलाङ्कुरेण
स्पृष्टस्य गात्रेषु सुखं ममैवम्।
कां निर्वृतिं चेतसि तस्य कुर्यात्
यस्यायमङ्गात् कृतिनः प्रसूतः ॥१९॥

तापसी—(उभौ विलोक्य-) आश्चर्यमाश्चर्यम्।

[ अच्चरीअं अच्चरीअं ]।

---

—सुखः-सत्त्वसंश्रयसुखः = सकलजीवाभयदानस्पृहणीयः, संयमः = अहिंसादिनियमः, एवम् = इत्थम्—जन्मतः = बाल्यादेव, किमिति दूष्यते ?

आश्रमवासिविपरीतं सत्त्वपीडिनं बाल्यादेव त्वयि कथमाविर्भूतं ? न हि ऋषिकुमाराणामेवंविधावृत्तिरुचितेति सर्पशिशुना चन्दनमिव त्वया तपोवनमिदं दूषितमिति भावः। [उपमानुप्रासौ, स्वागता वृत्तम् ।] ॥१८॥

आकारेण सदृशम् = आकारेण सहैव, चेष्टितं = कर्म, आकृतिः, कर्म चास्य 'नायमृषिकुमार' इति कथयतीति भावः। स्थानस्य प्रत्ययात्—विश्वासात् = ऋषीणां स्थानमेतदत्र तिष्ठता बालेन तत्कुमारेणैव भवितव्यमिति विश्वासमात्रादेव, एवं तर्को येषान्ते—तथा, 'ऋषिकुमारोऽयं स्या'दिति तर्कितवन्तो वयमिति भावः। अभ्यर्थितमनतिक्रम्य—यथाऽभ्यर्थितं = तापसीप्रार्थितं सिंहशिशुमोचनम्, अनुतिष्ठन् = कारयन्।

अनेनेति। अनेन कस्यापि—कुलस्याङ्कुर इव—तेन = वंशाङ्कुरेण, कुलदीपकेन, गात्रेषु = अङ्गेषु, स्पृष्टस्य = आलिङ्गितस्य, मम एवं सुखं भवति,

राजा—आर्ये ! किमिव ? ।

तापसी—अस्य बालकस्य [1]असम्बद्धेऽपि भद्रमुखे संवादिनी आकृतिरिति विस्मितास्मि । अपि च वामशीलोऽपि भूत्वा अपरिचितस्यापि ते वचनेन प्रकृतिस्थः संवृत्तः । [ इमस्स बालअस्स असम्बद्धेवि भद्दमुहे संवादिणी आकिदि त्ति विह्मिदह्मि । अवि अ वामसीलो वि भविअ अवरिचिदस्स विदे वअणेण पइदित्थो संवुत्तो ] ।

राजा—(बालमुपलालयन्-) आर्ये ! न चेन्मुनिकुमारोऽयम्, तत् कोऽस्य व्यपदेशः ? ।

तापसी—पौरव इति । [ पोरवो त्ति ]

---

यस्य कृतिनः = भाग्यशालिनः, अङ्कात् = उत्सङ्गात्, अयं बालः—प्ररूढः = वर्द्धितस्तस्य चेतसि कां निर्वृतिं = शान्तिं कुर्यात् ? । कुलादिसम्बन्धं विनाऽपि क्षणमात्रपरिचितोऽयं बालः शरीरसंम्पर्कमात्रादपि मां सुखयति, तर्हि यस्याङ्के चिरात्प्ररूढस्तस्य कियतीं नाम शान्तिं कुर्यादिति न शक्यते वर्णयितुमित्याशयः । 'अङ्कात्प्रसूत'इति पाठा० [अर्थापत्तिः, रूपकमनुप्रासः, उपजातिः ।] ॥१९॥

उभौ = दुष्यन्तबालकौ, निर्वर्ण्य = दृष्ट्वा, किमिव = किमाश्चर्यमिति प्रश्नः । संवादिनी = सदृशी, अप्रतिलोमः = अनुकूलः, ( पाठान्तरे- असम्बद्धे = सम्बन्धाभावेऽपि, वामशीलः = हठी, प्रकृतिस्थः = शान्तः ) उपलालयन् = आवर्जयन् परामृशन्, व्यपदेशः=कुलपरम्परागताऽऽख्या, उपनाम किमिति प्रश्नाशयः । एकोऽन्ववायोऽस्य–एकान्ववायः = समानवंशः, "वंशोऽन्ववाय" इत्यमरः । राज्ञोऽपि पौरवत्वात् । अतः = एकान्वयत्वात्, मदनुकारिणं = मत्सदृशम्, अत्रभवती=तापसी ।

---

१ "अस्य बालस्यासम्बद्धेऽपि भद्रमुख संवादिनी आकृतिरिति विस्मिताऽस्मि अपि च वामशीलोऽपि भूत्वाऽपरिचितस्य ते वचनेन प्रकृतिस्थः संवृत्तः" पा०

राजा—आर्ये ! किमिव ? ।

तापसी—अस्य बालकस्य [1]असम्बद्धेऽपि भद्रमुखे संवादिनी आकृतिरिति विस्मितास्मि । अपि च वामशीलोऽपि भूत्वा अपरिचितस्यापि ते वचनेन प्रकृतिस्थः संवृत्तः । [ इमस्स बालअस्स असम्बद्धेवि भद्दमुहे संवादिणी आकिदि त्ति विह्मिदह्मि । अवि अ वामसीलो वि भविअ अवरिचिदस्स विदे वअणेण पइदित्थो संवुत्तो ] ।

राजा—(बालमुपलालयन्-) आर्ये ! न चेन्मुनिकुमारोऽयम्, तत् कोऽस्य व्यपदेशः ? ।

तापसी—पौरव इति । [ पोरवो त्ति ]

यस्य कृतिनः = भाग्यशालिनः, अङ्कात् = उत्सङ्गात्, अयं बालः—प्ररूढः वर्द्धितस्तस्य चेतसि कां निर्वृतिं = शान्तिं कुर्यात् ? । कुलादिसम्बन्धं विनाऽपि क्षणमात्रपरिचितोऽयं बालः शरीरसंस्पर्कमात्रादपि मां सुखयति तर्हि यस्याङ्के चिरात्प्ररूढस्तस्य कियतीं नाम शान्तिं कुर्यादिति न शक्यं वर्णयितुमित्याशयः । 'अङ्गात्प्रसूत'इति पाठा० [अर्थापत्तिः, रूपकमनुप्रासः उपजातिः ।] ॥१९॥

उभौ = दुष्यन्तबालकौ, निर्वर्ण्य = दृष्ट्वा, किमिव = किमाश्चर्यमिति प्रश्नः । संवादिनी = सदृशी, अप्रतिलोमः = अनुकूलः, ( पाठान्तरे असम्बद्धे = सम्बन्धाभावेऽपि, वामशीलः = हठी, प्रकृतिस्थः = शान्तः उपलालयन् = आवर्जयन् परामृशन् , व्यपदेशः=कुलपरम्परागताऽऽख्या, उ... नाम किमिति प्रश्नाशयः । एकोऽन्ववायोऽस्य—एकान्ववायः = समानवंश "वंशोऽन्ववाय" इत्यमरः । राज्ञोऽपि पौरवत्वात् । अतः = एकान्वयत्वात् मदनुकारिणं = मत्सदृशम् , अत्रभवती=तापसी ।

१ "अस्य बालस्यासम्बद्धेऽपि भद्रमुख संवादिनी आकृतिरिति विस्मिताऽस्मि अपि च वामशीलोऽपि भूत्वाऽपरिचितस्य ते वचनेन प्रकृतिस्थः संवृत्तः" पा...

राजा—भवतीभ्यां कदाचिदन्यत्र प्रत्यक्षीकृतमिदम् ?

उभे—अनेकशः । [ अणेअसो । ]

राजा—(सहर्षमात्मगतम्—) तत् किं खल्विदानीं पूर्णमात्मनो मनोरथं नाभिनन्दामि—( इति बालकं परिष्वजते ) ।

द्वितीया—सुव्रते ! एहि, इमं वृत्तान्तं नियमव्यापृतायाः शकुन्तलाया निवेदयावः ।

[ सुव्वदे एहि इमं वुत्तन्तं णिअमवावडाए सउन्तलाए णिवेदेह्म । ]

( इति निष्क्रान्ते । )

बालः—मुञ्च मां, मुञ्च माम्, अम्बायाः सकाशं गमिष्यामि ।

[ मुञ्च मं मुञ्च मं, अम्बाए सआसं गमिस्सं । ]

राजा—पुत्र ! मयैव सह मातरमभिनन्दिष्यसि ।

बालः—दुष्यन्तो मम तातः, न खलु त्वम् ।

[ दुस्सन्तो मम तादो, ण क्खु तुमं । ]

राजा—एष विवाद एव मां प्रत्याययति ।

( ततः प्रविशत्येकवेणीधरा शकुन्तला । )

शकुन्तला—(सवितर्कम्—) विकारकालेऽपि प्रकृतिस्थां

---

ग्रहीतारः = बहुवारमन्यत्र प्रत्यक्षीकृतम् । मनोरथं = स्त्रीपुत्रसमागमरूपं, किं नाभिनन्दामि = अभिनन्दनीयमेव । पुत्रं पत्नीञ्च प्राप्तवानस्मीति भावः ।] 'शृणोतु महाभाग' इत्यादिना पूर्वभाव नामकं निर्वहणाङ्गम्, आनन्दो नाम सन्ध्यङ्गञ्च] नियमे व्यापृतायै = प्रसक्तायै । एष विवादः='न मे त्व'मित्यादि त्वत्कथनमेव, प्रत्याययति = निश्चाययति । विकारकाले = अन्येन ग्रहणे सर्परूपता प्राप्त्यवसरेऽपि, प्रकृतिस्थां = यथावस्थितामेव । आशंसा =

---

१ रक्षाकाण्डः २ मा खल्विदमवलम्ब्य ।

सर्वदमनस्यौषधिं श्रुत्वा न मे आशंसाऽऽत्मनो भागधेयेषु । अथवा यथा सानुमत्या मे आख्यातं तथा सम्भाव्यते एतत्, (इति परिक्रामति)।

[ विआरकाले वि पइदिस्थं सव्वदमणस्य ओसहिं सुणिअ ण मे आसंसो अत्तणो भाअधेएसुं । अधवा जधा साणुमईए आचक्खिदं तधा सम्भावीअदि एदं । ]

**राजा**—( शकुन्तलां विलोक्य सहर्षखेदम् ) अये ! सेयमत्रभवती शकुन्तला—

**वसने परिधूसरे वसाना**
**नियमक्षाममुखी धृतैकवेणिः ।**
**अतिनिष्करुणस्य शुद्धशीला**
**मम दीर्घं विरहव्रतं बिभर्ति ॥ २१॥**

**शकुन्तला**—( पश्चात्तापविवर्णं राजानं दृष्ट्वा सवितर्कम्—)

---

प्रत्याशा, भूयो मां पतिर्ग्रहीष्यतीति भागधेयेषु = भाग्येषु एतत् = दुष्यन्तसमागमः [ समयनामकमङ्गं, दुःखविगमात् । ]

**वसन इति ।** परितः = सर्वतः, धूसरे = मलिने, वसने = वस्त्रयुगलं, वसाना = दधाना, नियमैः क्षामं मुखं यस्याः सा = व्रतादिनियमाचरणशुष्कवदना, धृता एका वेणिर्यया सा = एकवेणिधारिणी, वेणीः-केशबन्धभेदः, प्रवासे स्त्रीणामेका वेणिर्भवतीति समाचारः । अत एव शुद्धं शीलं यस्याः सा—शुद्धशीला = शुद्धस्वभावाचारा, अतिनिष्करुणस्य—कठोरहृदस्य, मम = मत्सम्बन्धि, दीर्घं = बहुकालव्यापि—विरह एव व्रतं = विरहनियमपरिपालनं, बिभर्ति = कुरुते । सन्धिर्नामाङ्गं [ रूपक-काव्यलिङ्ग—स्वभावोक्त्यनुप्रासाः 'मालभारिणी' वृत्तं ] ॥२१॥

पश्चात्तापेन विवर्णं किञ्चिद्विपरीतरूपम् । आर्यपुत्र इव = न दुष्यन्तसदृशोऽप्ययम्, कृतं रक्षैव मङ्गलं यस्य तं = कृतरक्षासंस्कारविशेषं, गात्र-

